पृ. ७०० प. २ आर्जवं... । तुला-त्रिषष्टि० ४।५।३००-३१०।
पृ. ८०३ पं. ४ आकर.... ॥ १८-२१ ॥ तुला-त्रिषष्टि० ४।५।३१२-३१५।
पृ. ८०२ पं. ६ हिंसेव... । तुला-त्रिषष्टि० ४।५।३१६-३३०।
पृ. ८०३ प. १० लोमसागर... । तुला-त्रिषष्टि० ४।५।३३१।
पृ. ८०४ पं. ५ यथा नृणा... । तुला-त्रिषष्टि० ४।५।३३२-३४६।
पृ. ८०६ पं. ३ विनेन्द्रिय... ॥ २४-२७ ॥ तुला-त्रिषष्टि० ५।५।३२३-३२६।
पृ. ८०९ प. ३ इन्द्रियैः... । तुला-त्रिषष्टि० ५।५।३२७-३३८।
पृ. ८०९ पं. १४ शा. हे. । त्रिषष्टि० ५।५।३३३ मध्येऽपि शा. हे. सदृश एव पाठः ।
पृ. ८१० प. ३ वशास्पर्श... ॥ २८-३४ ॥ तुला-त्रिषष्टि० ५।५।३३९-३४५।
पृ. ८१२ प. ८ अनिर्जितेन्द्रिय... । तुला-त्रिषष्टि० ५।५।३४६-३५८।
पृ. ८१४ प. ४ मन·क्षपा... ॥ ३५-४४ ॥ तुला-त्रिषष्टि० ६।१।१०६, १०७, १०८-११०, १०२-१०५, १११-११२।

पृ० ८१९ प० १५ हारिभद्रया वृत्तौ पृ० ६४५ । इत. परम् आचार्य श्री हरिभद्रसूरिविरचितसम्बोधप्रकरणान्तर्गतोऽयं लेश्याविचारः पूरणीय.—

"सन्नाणं लेसाण भेओ वा अत्तवेयणा (मेओ णा असचेयणा—पाठान्तरम्) तण्णा । सा दुविहा जीवाण सुद्धासुद्धायविरियमवा ॥ १ ॥
तत्थ परिणामजणिया त्तिलेसदव्वप्पकम्मगयमावा । कण्हाइदव्वसइवा फलिहस्सिव दव्वओ अप्पा ॥ २ ॥
जह जम्बुपायवेगो सुपक्कफलमारनमियसव्वगो ।
दिट्ठो आह किमम्हे (?) ते विंति जंबू भक्खेमो ॥ ३ ॥
दिट्ठंतस्सोवणओ छिवह मूलाओ वेइ जो एवं । सो वट्टइ किण्हाए साह महल्ला य नीलाए ॥ ४ ॥
हुपइ पगाहा फाऊ गुच्छा तेऊ फलाइ पम्हाए । पडियाइ सुक्कलेसा अहवा अन्न इमाहरणं ॥ ५ ॥
चोरा गामवहत्थ विणिगया एगु वेइ घाएह । जं पिच्छह तं सव्व दुपय चउप्पयं वा वि ॥ ६ ॥

॥ ९५ ॥

वीओ माणुस, पुरिसे तइओ, वह साउहे चउत्थो उ। पंचमओ जुज्झते, छट्ठो पुण तत्थिमं भणइ ॥ ७ ॥
इयक ता हरह धण वीयं मारेह मा कुणह एव। केवल हरह धण ता उवसहारो इमो तेसिं ॥ ८ ॥
सव्वे मारेहि त्ती (ता–पाठान्तरम्) वट्टइ सो किण्हलेसपरिणामो। एवं कमेण सेसा जा चरमो सुक्कलेसाए ॥ ९ ॥
(सग्रहणी चेयं) मूल १ साह २ पसाहा ३ गुच्छ ४ फले छिद ५ पडियभवखणया ६।
सव्वं १ माणुस २ पुरिसा ३ साउह ४ जुज्झंत ५ धणहरणा ६ ॥ १० ॥
वेरेण निरणुकपो अइचंडो दुम्मुहो खरो फरुसो। किण्हाइ अणज्झप्पो वहकरणरओ य तक्कालं ॥ ११ ॥
माया-वभे कुसलो उक्कोडालद्धचवलचलचित्तो। मेहुणतिव्वाभिरओ अलियपलावी य नीलाए ॥ १२ ॥
मूढो आरभपिओ पावं न गणेइ सव्वकज्जेसु। न गणेइ हाणिवुड्ढी कोहजुओ काउलेसाए ॥ १३ ॥
दक्खो सवरसीलो रिजुभावो दाणसीलगुणकुसलो। धम्मम्मि होइ बुद्धी अरुसणो तेउलेसाए ॥ १४ ॥
सत्तणुकंपो य थिरो दाणं खलु देइ सव्वजीवाणं। अइकुसलबुद्धिमंतो धिइमंतो पम्हलेसाए ॥ १५ ॥
धम्मम्मि होइ बुद्धी पावं वज्जेइ सव्वकज्जेसु। आरंभेसु न रज्जइ अपक्खवाई य सुक्काए ॥ १६ ॥
कण्हाइदव्वजोएण फलिहस्सिव अप्पणो य परिणामो। जायइ कज्जपवित्ती दलाओ सा भवे लेसा ॥ १७ ॥
परिणामो सव्वत्थ वि जायइ म (य) समत्तकज्जसपत्ती। सा णेया भावलेसा कम्मनिस्सदरूवा य ॥ १८ ॥
लेसाण परिणामा तिग-नव-इगसीइ-दुसयतेयालं। बहु वा बहुविहं वा हुंति य जा सुक्कलेसाओ ॥ १९ ॥
पत्तेय लेसाओ अणतवग्गणमईओ पण्णत्ता। तहाणंतासंखिज्जप्पएसगाढाओ सव्वाओ ॥ २० ॥
अज्झवसायट्ठाणाणि तासिं संखाइयाणि सव्वासिं। खित्तओ असंखलोगागाससमाणि प्पमत्ताइ ॥ २१ ॥
असखिज्जाण उस्सप्पिणीण ओसप्पिणीण जे समया। संखाईया लोगा लेस्साण हुति ठाणाइं ॥ २२ ॥
जोगगयदव्वलेसा के वि भणति जाव जोगीणं। तो ण अजोगित्ते वि हु नज्जइ ता जुत्तिवयणमिण ॥ २३ ॥

ता न कसायसहाया लेसा जम्हा अणण्णवत्तिरया । जुज्जइ अकसायाणं कसायसंवीवणे तासिं ॥ २४ ॥
जइ लेसा निस्सवो कम्माण ता हविज्ज केसिं वा । जइ घाइकम्मजणिया ता केवलिणं न जुज्जइ य ॥ २५ ॥
जइ भयकम्मनिरुद्धा न भवे ताऽजोगिकेवलीणं च । जम्हा लेसाईय सुक्कज्झाणं चउत्थं जं ॥ २६ ॥
लेसा कसायपुट्ठिकारया परमणुभागाण बंधहेऊ य । ठिइमणुभाग कसाया पयडिपएसाण जोगा य ॥ २७ ॥
कम्मसहचारिकारणअणुभागगुणस्स हेऊणो भणिया । लेसाण सव्वमेवप्पयार विन्नाण उद्दिट्ठं ॥ २८ ॥
सुविसुद्धा सुपसत्था लेसा सुहझाणसोहिणी भणिया । अविसुद्धा अपसत्था दुहझाणजणियसब्भावा ॥ २९ ॥
अणुभागहेउरूवा भावा पुण कम्मझरणओ दव्वा । करणपवित्तिनिमित्ता जोगाण सरूवमेयासिं ॥ ३० ॥

इति सम्बोधप्रकरणे लेश्याधिकारे पृ० ९४-९६ ॥

पृ. ८३१ पं. २ आत्मायत्त ..॥ ४६–४८ ॥ तुला–त्रिषष्टि० ६।२।७७–७९।
पृ. ८३२ प. ८ द्रव्यादिषु...। तुला–त्रिषष्टि० ६।२।८०–९२।
पृ. ८३३ प १० अस्ततन्द्रे...॥ ४९ ॥ तुला–त्रिषष्टि० ६।२।९३।
पृ. ८४० प. ४ यत् प्रात...। तुला–परिशिष्टपर्वणि १।४०९।
पृ. ८४० प. १२ स्वतो...। तुला–त्रिषष्टि० ३।१।३५२–३७०।
पृ. ८४३ पं. २ इन्द्रोपेन्द्रा.. ॥ ६१–६४ ॥ तुला–त्रिषष्टि० ३।२।१४०।
पृ. ८४३ प. ११ अष्टाङ्गेना...। ३, ४, ५, ८ श्लोकान् विहाय तुला-त्रिषष्टि० ३।२।१४४–१५०।
पृ. ८४६ प. २ श्रोत्रियः...॥ ६५–६७ ॥ तुला–त्रिषष्टि० ३।४।८३–८५।
पृ. ८४७ प. १२ अज्ञो जन्तु...। तुला-अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥ ६३ ॥
इति शिवमहापुराणे सप्तम्या वायवीयसंहिताया पञ्चमेऽध्याये श्लोकः ।

॥ ९७ ॥

पृ. ८४८ पं. ६ ससारिण... । तुला–त्रिषष्टि० ३।४।८६–१७४।
पृ. ८५५ पं. ११ एक उत्पद्यते... ॥ ६८–६९ ॥
पृ. ८५६ पं. १० दु खदावाग्नि... । तुला–त्रिषष्टि० ३।३।२३२–२४०।
पृ. ८५६ प. २ इत्यादि ॥ ६८ ॥ अत्र 'इत्यादि' नास्ति संपू. मु. ।
पृ. ८५८ पं. १३ यत्रान्यत्वं... ॥ ७०–७१ ॥ तुला-त्रिषष्टि० ३।५।९४–९५।
पृ. ८५८ पं. १२ इहान्यत्वं... । तुला-त्रिषष्टि० ३।५।९६–१०२।
पृ. ८६० प. २ रसासृग्... ॥ ७२–७३ ॥ तुला-त्रिषष्टि० ३।६।९२–९३।
पृ. ८६१ पं. ४ शुक्र-शोणित... । तुला-त्रिषष्टि० ३।६।९४–१०२।
पृ. ८६२ प. ५ मनो... ॥ ७४–७७ ॥ तुला-त्रिषष्टि० ३।१।८०–८४।
पृ. ८६६ प. ५ यः कर्म... । तुला-त्रिषष्टि० ३।७।८५–१३३।
पृ. ८७० पं. ७ सर्वेषा... ॥ ७९–८५ ॥ तुला-त्रिषष्टि० ३।८।९१–९७।
पृ. ८७३ पं. ७ यथा चतुष्पय... । तुला-त्रिषष्टि० ३।८।९८–१०६।
पृ. ८७४ पं. ८ संसार... ॥ ८६–९१ ॥ तुला-त्रिषष्टि० ४।१।८२९–८३४।
पृ. ८९० पं. १० यथा हि... । तुला-त्रिषष्टि० ४।१।८३५–८४४।
पृ. ८९१ पं. १२ स्वाख्यातः... ॥ ९२–१०२ ॥ तुला-त्रिषष्टि० ४।२।३०९–३१८।
पृ. ९०२ पं. १० अथ दशविधो... । इत आरभ्य ३४ श्लोका मुनिसुन्दरसूरिविरचितायाम् उपदेशरत्नाकरवृत्तावपि (पृ० ३७-३८) उद्धृताः ।
९, १०, २९, ३०, ३१ श्लोकान् विहाय तुला-त्रिषष्टि० ४।२।३१९–३४९ ।
पृ. ९०३ पं. १५ हे. मु. । उपदेशरत्नाकरवृत्तावपि (पृ० ३७) 'साधुर्धर्मः' इति पाठः ॥

पृ. ९०४ प. १५ श्लोक ३९ मध्ये उपदेशरत्नाकरवृत्तावपि स्वर्गलोक० इति पाठः। २९ श्लोकमध्ये उपदेशरत्नाकरवृत्तावपि 'पतं व्रतम्' इति पाठः।

पृ. ९०५ पं. १४ कटिस्थ... ॥ १०३, १०५, १०४ ॥ तुला-त्रिषष्टि० २।३।४७८–४८०।

पृ. ९३० पं. ५ जोयणकोडिसय...। 'श्रीऋषभदेवजी केसरीमलजी जैनश्वेताम्बरपेढी रतलाम' इत्यतः विक्रम सं. १९८५ मध्ये प्रकाशिते सिरिपयरणसवोहे अष्टाविंशतेः प्रकरणाना समुच्चयो वर्तते, तत्र पृ० १२-१३ मध्ये २५ गाथात्मको नन्दीश्वरस्तवो वर्तते। "वंदिय नंदियलोयं जिणविसर विमलकेवलालोयं। नंदीसरचेइयसंथवेण थोसामि तं चेव ॥ १ ॥" इति प्रथमा गाथा तत्र। ततः परं सर्वा अपि चतुर्विंशतिर्गाथा अत्रोद्धृताः ॥

पृ. ९४२ पं. १२ अकाम.. ॥ १०७–१०९ ॥ तुला-त्रिषष्टि० ४।३।२०१–२०३।

पृ. ९४४ प. ७ राज्यं वा ..। तुला-त्रिषष्टि० ४।३।२०४–२१३।

"एतासि ण अट्ठण्ह कण्हरातीण अट्ठसु ओवासतरेसु अट्ठ लोगतितविमाणा पन्नत्ता, तजहा-अच्ची अच्चिमाली वतिरोयणे पभंकरे चदाभे सूराभे सुपइट्ठाभे अग्गिच्चाभे। एतेसु ण अट्ठसु लोगतितविमाणेसु अट्ठविधा लोगंतितदेवा पन्नत्ता, तंजहा–

सारस्सतमाइच्चा वण्ही वरुणा य गद्दतोया य। तुसिता अव्वावाहा अग्गिच्चा चेव वोधव्वा ॥ ९६ ॥

एतेसि णमट्ठण्हं लोगतितदेवाण अजहण्णमणुक्कोसेणं अट्ठ सागरोवमाइ ठिती पण्णत्ता।" इति स्थानाङ्गसूत्रे नवस्थानके सू. ६२५।

"एतासामष्टाना कृष्णराजीनामष्टस्ववकाशान्तरेषु राजीद्वयमध्यलक्षणेषु अष्टौ लोकान्तिकविमानानि भवन्ति, एतानि चैव प्रज्ञप्त्यामुच्यन्ते—अभ्यन्तरपूर्वाया अग्रे अर्च्चिर्विमान तत्र सारस्वता देवाः, पूर्वयोः कृष्णराज्योर्मध्ये अर्च्चिर्मालीविमाने आदित्या देवा, अभ्यन्तरदक्षिणाया अग्रे वैरोचने विमाने वह्नयः, दक्षिणयोर्मध्ये शुभङ्करे[1] विमाने वरुणाः, अभ्यन्तरपश्चिमाया अग्रे चन्द्राभे गर्दतोयाः, अपरयोर्मध्ये सूराभे तुषिताः, अभ्यन्तरोत्तराया अग्रे अङ्काभेऽ-

[1] 'शुभङ्कर'स्थाने (प्रभङ्कर) इति 'अङ्काभ'स्थाने च 'शुभाभ' इति भगवतीसूत्रे पाठ ॥

व्याबाधाः, उत्तरयोर्मध्ये सुप्रतिष्ठाने आग्नेयाः, बहुमध्यमाने रिष्टाभे विमाने रिष्टा देवा इति । स्थापना चेयम्–




अजहन्नुक्कोसेणं ति जघन्यत्वोत्कर्षाभावेनेत्यर्थः । ब्रह्मलोके हि जघन्यतः सप्त सागरोपमाणि उत्कृष्टतस्तु दशेति, लोकान्तिकानां त्वष्टाविति ।" इति अभयदेवसूरिविरचितायां स्थानाङ्गटीकायाम्, पृ० ४३२–४३३ ॥

"नव देवनिकाया पन्नत्ता, तंजहा–सारस्सयमाइच्चा वण्हीवरुणा य गद्दतोया य । तुसिता अव्वाबाधा अग्गिच्चा चेव रिट्ठा य ॥" इति स्थानाङ्गसूत्रे नवस्थानके सू० ६८४ । "सारस्सय० गाहा, सारस्वताः १ आदित्याः २, वह्नयः ३, वरुणाः ४, गर्दतोयाः ५, तुषिताः ६, अव्याबाधाः ७, आग्नेयाः ८, एते कृष्णराज्यन्तरेष्वष्टासु परिवसन्ति । रिष्टास्तु कृष्णराजिमध्यभागवर्तिनि रिष्टाभविमानप्रस्तटे परिवसन्ति" इति अभयदेवसूरिविरचितायां स्थानाङ्गवृत्तौ पृ० ४५३A । "सारस्सयमाइच्चा वण्ही वरुणा य गद्दतोया य । तुसिया अव्वाबाहा अग्गिच्चाचेव रिट्ठा य ॥ २१४ ॥ एए देवनिकाया भयवं बोहिंति जिणवरिंदं तु । सव्वजगज्जीवहियं भयवं तित्थ पवत्तेहिं ॥ २१५ ॥" इति आवश्यकनिर्युक्तौ । "सारस्सयमादिच्च त्ति सारस्वतादित्याः, अनुस्वारस्त्वलाक्षणिकः, वण्ही वरुणा य त्ति प्राकृतशैल्या वकारलोपाद् वह्नयरुणाश्च गर्दतोयाश्च तुषिता अव्याबाधाः अग्गिच्चा चेव रिट्ठा य त्ति अग्नयः सज्ञान्तरतो मरुतोऽप्यभिधीयन्ते, रिष्टाश्चेति 'तात्स्थ्यात् तद्व्यपदेशः' ब्रह्मलोकस्थरिष्टप्रस्तराधाराष्टकृष्णराजिनिवासिन इत्यर्थः" इति आवश्यकस्य हारिभद्रया वृत्तौ पृ० १३५ B । "सारस्वताः, मकारस्तु अलाक्षणिकः १, आदित्याः २, वह्नयः ३, वरुणाः ४, गर्दतोयाः ५, चः समुच्चये, तुषिताः ६, अव्याबाधाः ७, अग्नयः ८, एत एव संज्ञान्तरतो मरुतोऽप्यभिधीयन्ते, रिष्टाश्चेति तात्स्थ्यात् तद्व्यपदेश, ब्रह्मलोकस्थरिष्टप्रस्तटाधारा रिष्टा इति" इति आवश्यकसूत्रस्य मलयगिरिसूरिविरचितायां वृत्तौ पृ० २०२ ॥

*

# शुद्धिपत्रकम्

| पृ० | पं० | शुद्धः पाठः | पृ० | पं० | शुद्धः पाठः |
|---|---|---|---|---|---|
| ३ | २ | योगिनोऽवधिं | १९७ | ६ | विप्रतिपत्तृभ्यः |
| ४० | १३ | ऽर्यंतश्च प्रभूतं | २०८ | १३ | दाढाहिं गहितो |
| ५५ | ७,८,१० | खं. हे. मध्ये | २५२ | १० | जहा सुलसो ॥" [उपदेशमाला ४४५] |
| " | ११ | अधिस्वर्मुक्ति (अधिस्व.कृत–हे) निश्रेणि° | २९० | ८ | "अहह..... |
| ६९ | ११ | शा. ख. संपू. प्रतिष्वयं | २९१ | १ | भवे ॥३॥" [ ] ॥ ६२ ॥ |
| ७१ | १४ | ख. हे. फ. छ. | २९१ | ९ | ओवलंमाओ |
| ७९ | ६ | १ इतः पूर्वं पञ्च | २९१ | १० | मिच्छद्दिट्ठिस्स |
| ९० | १ | शक्राविभिः | ३३६ | ११ | पइपावं । |
| " | ३ | स्वामिनो | ३९४ | ४ | तृष्णाखनि° |
| १६० | १ | इन्द्रियग्रामो | ४०४ | १४ | त्रिषष्टि° |
| १८७ | ११ | कुत्र च मति° | ४०९ | १४ | कुमारो |
| १८९ | २ | [श्रावकधर्मविधिप्रकरणे गा० ५६] | ४२६ | १४ | [पृ० २९४] |
| १९४ | ६ | [श्रावकव्रतभङ्गप्रकरणे (?) गा० ८] | ४२७ | ६ | दुर्लङ्घत्वाद्वारिधिः |

१ अत्र शुद्ध एव पाठ तत्र तत्र पृष्ठे पङ्क्तौ च निर्दिष्ट । अशुद्धस्तु पाठ यस्तत्र तत्र पृष्ठे पङ्क्तौ च मुद्रितस्तत्स्थानेऽयं शुद्ध पाठो ज्ञातव्य ॥

પ્રસ્તાવના પૃ० १७ पं० ४–५ પંચવસ્તુકની સ્વોપજ્ઞટીકા

| | | |
|---|---|---|
| ४३१ | १ | हेतुमाह |
| ४३५ | १० | [सि० ३/४/२४] |
| ४४२ | ३ | परानपि" [ ] |
| ४४५ | ४ | सद्य.सम्मूर्च्छिता° |
| " | ९ | [सम्बोधप्रकरणे ७/७५] |
| ४५३ | २ | वज्रकन्द–हरिद्रा–कैर्च्चूर |
| ४५४ | १० | [सम्बोधप्रकरणे ७/८२] |
| " | १४ | °टीकायाम् । 'ते वि हु छलंति हु फुडं' इति सम्बोधप्रकरणे ॥ |
| ४५६ | १० | [सम्बोधप्रकरणे ७/८०–८१] |
| ४५७ | ४ | [सम्बोधप्रकरणे ७।८३] |
| ४५९ | ९ | मन्दीभूते |
| " | ३३ | नक्तं तद्विजा°–सं. । |
| ४६१ | ५ | सूर्यस्यापा° |
| ४६८ | १ | अयानर्थदण्ड[विरमण? ]स्य तृतीय |
| ४६९ | १२ | एतच्चतुर्विधं° |
| ४७० | ६ | १९–२४] |
| ४७१ | २ | [सम्बोधप्रकरणे ७।९८] |
| " | ९ | कृष षण्ढय |
| ४७३ | ६ | वात्सायनादिकृते |
| " | ९ | पुष्पावचयादि |
| ४७७ | ७ | नाधिकारः |
| " | १३ | सामायिके कृते |
| " | १४ | पूजादौ–मु. हे. ॥ |
| ४७८ | २ | °सेवण च [आवश्यके प्रत्याख्याने सू. ९] |
| " | ९ | उवउत्तो |
| " | ११ | भते |
| " | " | पज्जुवासामि त्ति |
| ४७९ | ७ | पडिक्कमामि |
| ४८० | १० | प्रत्याख्यामीति |
| ४८२ | ४ | प्रतिक्रामति |

१ अत्र हे मध्ये 'अथार्थदण्डस्य' इति पाठो वर्तते, किन्तु अर्थदण्डस्य तृतीयगुणव्रतत्व कुत्रापि न प्रसिद्धम्, अनर्थदण्डस्य तृतीयगुण व्रतत्वमपि न सगतम्, अत. 'अयानर्थदण्ड[विरमण]स्य' इति पाठोऽत्र आवश्यक ॥

| पृ० | प० | शुद्धः पाठः |
|---|---|---|
| ४८२ | ७ | पावात्-रय |
| " | ११ | हारिमन्नी वृत्तिः |
| ४८९ | ३ | सगउसएहिं विसायत्तिएहिं |
| ५११ | ५ | ऽऽपृच्छ्य |
| " | १५ | शा. ॥ |
| ५१६ | १ | शालिमन्नो |
| " | ३ | शालिमन्नं |
| ५१७ | ३ | वैमाराद्रि |
| ५१८ | ६ | द्वादश- |
| " | ११ | स. ॥ |
| ५२१ | ३ | श्लोकः |
| " | ७ | तत्रानर्थक- |
| ५३५ | ९ | गौरनव्यान |
| " | १२ | न पाठः |
| ५३७ | २ | यन्ग्रनावयस्त्र |
| " | ७ | 'मीलनेन |
| ५३८ | २ | वृत्ति- |

| पृ० | प० | शुद्धः पाठः |
|---|---|---|
| ५४० | १० | [७।३०] |
| " | ११ | स्मृत्यन्तर्धानात् |
| " | १६ | [७।३०] |
| ५४१ | ४ | गुन्दादिः पक्वफलादिर्वा, |
| " | ४ | सचित्तान्तर्बीजः |
| " | ८-९ | यथा-आर्द्रक-दाडिम..... |
| ५४२ | ९ | यवधानादिर्वा |
| " | ८ | 'खाद्यस्य वा |
| ५४३ | ८ | दृश्यता पृ० ५४० टि० ७ |
| " | ११ | कोमलमुद्गादि' |
| " | १३ | 'लौल्येन |
| ५४६ | ५ | चूर्णीकरणाद् |
| " | १२ | वध-बन्धादि' |
| ५५५ | ५ | निपातः, |
| ५६० | २ | सचेतनादि |
| ५६१ | ११ | आदान ग्रहणादि |
| ५६२ | १४ | 'मिदं |

॥ १०३ ॥

| | | |
|---|---|---|
| ५६४ | ७ | 'जैनेंविम्ब' |
| ,, | ११ | विभुम' |
| ,, | १२ | अन्यया तु |
| ५६५ | १० | लङ्करणा |
| ५६७ | ६ | 'तवत्सुर |
| ,, | ७ | करोति तस्य |
| ५६८ | १० | [हारिभद्रीयाष्टके (?) ४।६] |
| ५७६ | ३ | अपश्चिमा |
| ५८२ | २ | १२२ |
| ,, | ४ | १२३ |
| ५८४ | ३ | १२३ |
| ५८५ | ६ | 'रुतमकवि' |
| ५८६ | ३ | १२३ |
| ५८६ | १२ | 'विशाखदत्त' |
| ५९६ | १ | भङ्गः, अपरि० |
| ५९६ | ३ | साध्वावौ |
| ५९९ | ९ | आवश्यकनिर्युक्तौ |
| ६०३ | १२ | समुद्घात' |
| ६१५ | १० | [योगवृष्टिसमुच्चये श्लोकः १८३] |
| ६१८ | ४ | नवमिः |
| ,, | १४ | वासुपुज्जं |
| ६२१ | ५ | कायोत्सर्गम् |
| ६२३ | ३ | 'मजियं च वंदे |
| ६२३ | ६ | वंदामि |
| ६२४ | २ | प्रकर्षेण |
| ६२४ | ४ | अभिनन्द्यते |
| ६२५ | ९ | 'जयति [इति] |
| ६२६ | ९ | सुव्रतः । २० । |
| ६२७ | ६ | सुमिणम्मि |
| ६४० | ६ | एगो |
| ,, | १० | 'शिताया |
| ६४३ | १ | नोतित्थयेरसिद्धा* |
| ,, | ८ | 'सूरिविरचि' |
| ६४४ | ८ | १ नोतित्थयरसिद्धाओ—मु. । नोतित्थयरिसिद्धाओ—संपू. ॥ |
| ६४७ | ३ | 'स्तित्र' ॥ |

* अत्र 'नोतित्थयरसिद्धा' इति ख सं हे विना शा संपू. मु मध्ये पाठः। मु मध्ये 'तित्थयरितित्थे' इति पूर्वपदस्थाने 'तित्थयरतित्थ' इति पाठो वर्तते इति विशेष' ॥

| पृ० | पं० | शुद्धः पाठः |
|---|---|---|
| ६७० | ४ | "आयारस्स |
| ६७५ | १५ | °सर्वदोषः |
| ६७६ | ८ | इति ॥३०॥" [बृहद्वन्दनकभाष्ये गा० ३–३२] |
| ६८० | २ | "पुरओ |
| ६८० | १५ | वेइ–सं. |
| ६८१ | ४ | तेत्तीसं ॥६॥" [ ] |
| ६८२ | २ | °माकर्ण्य |
| ७०६ | १३ | मज्जति–संपू. ॥ |
| ७२१ | ४ | सेसा ण इति |
| ७२५ | ११ | वह्वपायः |
| ७२६ | १४ | संपू. |
| ७२८ | १३ | अन्ध– |
| ७४३ | ४ | व्रतिन्यो |
| ७४३ | १४ | मु मध्ये |
| ७६६ | १५ | चेअ |
| ७७६ | ७ | °वीर° |
| ७८० | ६ | °त्रयोगता° |

पृ० ७२१ पं० ११ इति पञ्चवस्तुकटीकायां स्वोपज्ञायाम्,

| पृ० | पं० | शुद्धः पाठः |
|---|---|---|
| ७८३ | १४ | °निषादि चतुर्थे |
| ७८७ | ४ | काष्ठा-ऽस्थि |
| " | ९ | [विशेषाव० ३५३७–३५३८] |
| ८०३ | १ | एकाभिधाभिलापेण |
| ८०८ | १४ | सप्तमे |
| ८०९ | ४ | वाहुवलिनि |
| ८१२ | १४ | °विधानार्थं° |
| ८१४ | १२ | दोषानाह– |
| ८१५ | १३ | मनस्कस्य |
| ८१६ | ३ | अनिरुद्धमनस्कस्य |
| ८२० | ६ | ततो यथैव |
| " | १० | वन्धशतक |
| ८२६ | ९–१२ | समुद्दिट्ठं ॥४९०॥ |
| | | वण्णोदयेण.....॥४९४॥ |
| | | नट्ठकसाये लेस्सा उच्चवि |
| | | सा भूदपुव्वगदिणाया। अहवा जोगपउत्ती |
| | | मुक्खो त्ति तहिं हवे लेस्सा ॥५३२॥ |

॥ १०५ ॥

| | | |
|---|---|---|
| ८२६ | १३ | ॥५३६॥ |
| ८३२ | ५ | नरकावटे |
| ८३६ | १२ | सर्वजीवानामपि |
| ८३७ | १३ | तत्सन्निधौ |
| ८३८ | २ | विलष्टै |
| " | ५ | ॥८३८॥ |
| ८४० | १० | मित्याविश्लोके |
| ८४१ | १२ | जर्जरीभवत् |
| ८४८ | १० | लघुद्वाराद् |
| ८४९ | ४ | वक- |
| ८५३ | ५ | वृष्ट्वान्येषां |
| " | " | लोर्मिभिः |
| ८५६ | २ | इत्यादि ॥६८॥ |
| ८५६ | १३ | खं. हे. ॥ ३ इत्यादि-नास्ति संपू. मु. ॥ |
| ८७९ | १३ | अवड्ढा दु[भा]ग पत्ता |
| " | १५ | पूरको भणितः |
| ८८२ | १४ | °दशकक्रमेण |
| ९०० | ८ | °ज्वलनं वायो° |

| | | |
|---|---|---|
| ९०६ | ९ | त्वदाज्ञा° |
| ९०७ | १२ | भाष्ये [३११] च |
| ९१२ | १४ | स्थित्वेत्यर्थः |
| ९२० | १२ | गोस्तूप-शिवक-शङ्ख |
| ९२२ | ७ | "रायगिह |
| ९२५ | २ | ॥६॥" [प्रज्ञापनासूत्रे प्रथमपदे गा० ११२-११७]° |
| ९२५ | ४ | "सेग- |
| ९२६ | २ | ॥४॥" [ ] |
| ९२९ | ६ | द्वीपविदिक्षु [ ] |
| ९३१ | ८ | पूर्वादिक्रमात् नामानि पुष्करिणीना |
| ९३५ | २ | [नन्दीश्वरस्तवे गा० २-२५] |
| ९३८ | १३ | परम्परानुसारेण ' अरिष्ट' इति |
| ९४४ | ८ | वर्णनम् |
| ९४९ | २ | तत्स्वाभा° |
| " | ३ | ध्यानसन्ततिर्भवेत् । मुहूर्ता° |
| ९५३ | १ | निन्दन्तीत्येवंशीलाः |

॥ श्रीऋषभदेवस्वामिने नमः ॥

॥ श्रीशंखेश्वरपार्श्वनाथाय नमः ॥

॥ श्रीसद्गुरुदेवेभ्यो नमः ॥

परमार्हतकुमारपालभूपालप्रतिबोधक–कलिकालसर्वज्ञ–श्रीहेमचन्द्राचार्यप्रणीतं

स्वोपज्ञवृत्तिविभूषितं

# योगशास्त्रम् ।

—*—

॥ अर्हम् ॥

## तृतीयः प्रकाशः

अणुव्रतव्यावर्णनानन्तरं गुणव्रतानामवसरः । तत्रापि प्रथमं गुणव्रतमाह—

दशस्वपि कृता दिक्षु यत्र सीमा न लङ्घ्यते ।
ख्यातं दिग्विरतिरिति प्रथमं तद् गुणव्रतम् ॥ १ ॥

ऐन्द्री, आग्नेयी, याम्या, नैर्ऋती, वारुणी, वायव्या, कौबेरी, ऐशानी, नागी, ब्राह्मीति दश दिशस्तासु,

१ द० ॥ अर्ह ॥ मु. विना ॥ २ अथाणुव्रत० मु०॥

॥ ४२५ ॥

अपिशब्दादेकद्वित्र्यादिदिक्ष्वपि, सीमा मर्यादा, कृता प्रतिपन्ना, यत्र व्रते सति, न लङ्घ्यते नातिक्रम्यते, तत् प्रथमं गुणव्रतम्, उत्तरगुणरूपं व्रतं गुणव्रतम्, गुणाय वोपकाराय अणुव्रतानां व्रतं गुणव्रतम्, ख्यातं प्रसिद्धम्, तस्याभिधानं दिग्विरतिरिति ॥१॥

ननु हिंसादिपापस्थानविरतिरूपाणि युक्तान्यणुव्रतानि, दिग्व्रते तु कस्य पापस्थानस्य निवृत्तिर्येनास्य व्रतत्वमुच्यते ? उच्यते—अत्रापि हिंसादीनामेव पापस्थानानां विरतिः। एतदेवाह—

चराचराणां जीवानां विमर्दननिवर्त्तनात्
तप्तायोगोलकल्पस्य सद्व्रतं गृहिणोऽप्यदः ॥ २ ॥

चरास्त्रसा द्वीन्द्रियादयः, अचराः स्थावरा एकेन्द्रियाः, तेषां नियमितसीमाबहिर्वर्त्तिनां जीवानां, यद्विमर्दनं यातायातादिना हिंसा, तस्य निवर्त्तनाद्धेतोरिदमपि हिंसाप्रतिषेधपरमेव गृहस्थस्यापि सद्व्रतम्। हिंसाप्रतिषेधपरत्वे च असत्यादिप्रतिषेधपरताऽपि सुवचैव।

यद्येवं, साधूनामपि दिग्विरतिव्रतप्रसङ्ग इत्याह—तप्तायोगोलकल्पस्येति। गृहस्थो ह्यारम्भपरिग्रहपरत्वाद्यत्र यत्र याति भुङ्क्ते शेते व्यापारान्तरं वा कुरुते, तत्र तत्र तप्तायोगोलक इव जीवोपमर्दं करोति। गृहिणोऽपीत्यपिशब्दस्तप्तायोगोलकल्पस्येत्यत्र सम्बध्यते, तप्तायोगोलकल्पस्यापीत्यर्थः। यदाह—

"[3]तत्तायगोलकप्पो पमत्तजीवोऽणिवारियप्पसरो।

---

१ चोप० मु.॥ २ तत्र तप्ता० मु.॥ ३ आवश्यकचूर्णावपि प्रत्याख्यानाध्ययने (पृ. २९४) गाथेयं दृश्यते।
तप्तायोगोलकल्पः प्रमत्तजीवोऽनिवारितप्रसरः। सर्वत्र किं न कुर्यात् पापं तत्कारणानुगतः॥

सव्वत्थ किं न कुज्जा पावं तक्कारणाणुगओ ॥ १ ॥" [ श्रावकप्रज्ञप्तौ २८१ ]

साधूनां तु समिति-गुप्तिप्रधानव्रतशालिनां नायं दोष इति न तेषां दिग्विरतिव्रतम् ॥ २ ॥

लोभलक्षणपापस्थानविरतिपरमपि चैतद् व्रतमित्याह—

जगदाक्रममाणस्य प्रसरल्लोभवारिधेः ।
स्खलनं विदधे तेन येन दिग्विरतिः कृता ॥ ३ ॥

लोभ एव दुर्लङ्घ्यत्वाद्वारिधिः समुद्रः, प्रसरंश्चासौ नानाविकल्पकल्लोलाकुलतया लोभवारिधिश्च, तस्य विशेषणं जगदाक्रममाणस्य । वारिधिपक्षे जगल्लोकः, लोभपक्षे तु निःशेषमेव भुवनत्रयम् । लोभवशगो हि ऊर्ध्वलोकगतां सुरसम्पदं मध्यलोकगतां च चक्रवर्त्त्यादिसम्पदमधोलोकगतां च पातालप्रभुत्वादिसम्पदमभिलषंस्त्रिभुवनमपि मनोरथैराक्रामतीति लोभस्य जगदाक्रमणम् । तेन स्खलनं प्रसरनिरोधः, तद्विदधे, येन किं? येन पुरुषेण दिग्विरतिर्विहिता । दिग्विरतो हि प्रतिज्ञातसीमातः परतोऽगच्छंस्तत्स्थसुवर्ण-रूप्य-धन-धान्यादिषु प्रायेण लोभं न कुरुते इति लोभलक्षणपापस्थानविरतिपरताऽस्य व्रतस्य ।

अत्रान्तरश्लोकाः—

तदेतद्यावज्जीवं वा सद्व्रतं गृहमेधिनाम् । चतुर्मासादिनियमादथवा स्वल्पकालिकम् ॥ १ ॥

१ ०गतां च ऐन्द्रादिसंपदं-खं० । २ मध्यमलोक ०-शां. । मर्त्यलोकगतानां च-खं ॥ ३ चतुःसीमादि०-खं० ॥

सदा सामायिकस्थानां यतीनां तु [1]यतात्मनाम्। न दिशि क्वचन स्यातां विरत्यविरती इमे ॥ २ ॥
चारणानां हि गमनं यदूर्ध्वं मेरुमूर्द्धनि। तिर्यग् रुचकशैले च नैषां दिग्विरतिस्ततः ॥ ३ ॥
गन्तुं सर्वासु यो दिक्षु विदध्यादवधिं सुधीः। स्वर्गादौ निरवधयो जायन्ते तस्य सम्पदः ॥ ४ ॥ ३ ॥

द्वितीयं गुणव्रतमाह—

भोगोपभोगयोः संख्या शक्त्या यत्र विधीयते।
भोगोपभोगमानं तद् द्वैतीयीकं गुणव्रतम् ॥ ४ ॥

भोगोपभोगयोर्वक्ष्यमाणलक्षणयोः संख्या परिमाणं यत्र व्रते विधीयते, कया? शक्त्या शरीरमनसोरनाबाधया, तद् भोगोपभोगमानं नाम गुणव्रतम्, द्वितीयमेव [2]द्वैतीयीकम्, स्वार्थे टीकण् ॥ ४ ॥

भोगोपभोगयोर्लक्षणमाह—

सकृदेव भुज्यते यः स भोगोऽन्नस्रगादिकः।
पुनः पुनः पुनर्भोग्य उपभोगोऽङ्गनादिकः ॥ ५ ॥

१ जितात्मनाम्-मु. ॥ २ द्वैतीयकम्-खं०। "तीयाट्टीकण् न विद्या चेत्"-सि० ७।२।१५३ ॥

सकृदेव एकवारमेव, भुज्यते सेव्यते इति भोगः, अन्नमोदनादि, स्रग् माल्यम्, आदिशब्दात्ताम्बूल-विलेपनोद्वर्त्तन-धूपन-स्नान-पानादिपरिग्रहः। पुनः पुनरनेकवारं भोग्यः सेव्यः, अङ्गना वनिता, आदिशब्दाद्वस्त्रालङ्कार-गृह-शयनासन-वाहनादिपरिग्रहः ॥ ५ ॥

इदं च भोगोपभोगव्रतं भोक्तुं योग्येषु परिमाणकरणेन भवति, इतरेषु तु वर्जनेनेति श्लोकद्वयेन वर्जनीयानाह—

मद्यं मांसं नवनीतं मधूदुम्बरपञ्चकम् ।
अनन्तकायमज्ञातफलं रात्रौ च भोजनम् ॥ ६ ॥

आमगोरससंपृक्तंद्विदलं पुष्पितौदनम् ।
दध्यहर्द्वितयातीतं कुथितान्नं च वर्जयेत् ॥ ७ ॥

तत्र मद्यं द्विधा -काष्टनिष्पन्नं पिष्टनिष्पन्नं च। मांसं त्रिधा-जल-स्थल-खचरमांसभेदेन। मांसग्रहणेन चर्म-रुधिर-मेदो-मज्जानः परिगृह्यन्ते। नवनीतं गो-महिष्यजा-ऽविसम्बन्धेन चतुर्द्धा। मधु त्रेधा– माक्षिकं भ्रामरं कौत्तिकं च। उदुम्बरपञ्चकादयो यथास्थानं व्याख्यास्यन्ते ॥ ६ ॥ ७ ॥

१ तद्वर्जनी०-मु. ॥ २ ०क्तं द्विदलं-मु. ॥

तत्र मद्यस्य वर्जनीयत्वे[1] हेतून् दोषान् श्लोकदशकेनाह—

मदिरापानमात्रेण बुद्धिर्नश्यति दूरतः ।
वैदग्धीबन्धुरस्यापि दौर्भाग्येणेव कामिनी ॥८॥

वैदग्धीबन्धुरस्यापि छेकस्यापि पुंसो मदिरापानमात्रेण बुद्धिर्नश्यति क्षयं याति, दूरतो दूरं यावत् सर्वथा विनश्यतीत्यर्थः। अत्रोपमानं दौर्भाग्येणेव कामिनीति। वैदग्धीबन्धुरस्यापि दूरत इति चात्रापि सम्बध्यते। तेन यथा विदग्धस्यापि दौर्भाग्यदोषेण कामिनी नश्यति पलायते दूरतो दूरादपि ॥ ८ ॥ तथा—

पापाः कादम्बरीपानविवशीकृतचेतसः ।
जननीं हा प्रियीयन्ति जननीयन्ति च प्रियाम् ॥ ९ ॥

कादम्बरी मदिरा। जननीं मातरम्, हा इति खेदे, प्रियीयन्ति प्रियामिव जायामिवाचरन्ति, प्रियां च जननीयन्ति जननीमिवाचरन्ति। मदिरामदविह्वलत्वाज्जननी-जाययोराचारव्यत्ययेन व्यवहरन्तीत्यर्थः ॥ ९ ॥ तथा—

न जानाति परं स्वं वा मद्याच्चलितचेतनः ।
स्वामीयति वराकः स्वं स्वामिनं किङ्करीयति ॥ १० ॥

---

१ वर्जनीयत्वहेतून्-सं० । वर्जनीयस्य हेतून्-खं० ॥

मद्याद्धेतोः चलितचेतनो नष्टचैतन्यः सन् स्वमात्मानं परं वा आत्मव्यतिरिक्तं न जानाति । अत्र हेतुनाह—यत आत्मानमजानन् स्वं स्वामिनमिवाचरति, वराकश्चैतन्यहीनत्वादनुकम्पनीयः । परमजानन् स्वामिनं नाथं किङ्करमिवाचरति ॥१०॥ तथा—

मद्यपस्य शवस्येव लुठितस्य चतुष्पथे ।
मूत्रयन्ति मुखे श्वानो व्यात्ते विवरशङ्कया ॥ ११ ॥

स्पष्टः ॥ ११ ॥ तथा—

मद्यपानरसे मग्नो नग्नः स्वपिति चत्वरे ।
गूढं च स्वमभिप्रायं प्रकाशयति लीलया ॥ १२ ॥

मद्यस्य पानं तत्र रसः आसक्तिस्तत्र मग्नो निषण्णः मद्यपानव्यसनीत्यर्थः । अत एव वस्त्रमपि स्रस्तमजानन् नग्नः स्वपिति चत्वरे, न तु गृह एव । दोषान्तरं च —गूढं केनाप्यविदितं स्वमभिप्रायं राजद्रोहादिकं प्रकाशयति प्रकटीकरोति लीलया बन्धनताडनादिव्यतिरेकेणापि ॥ १२ ॥ तथा—

वारुणीपानतो यान्ति कान्तिकीर्तिमतिश्रियः ।
विचित्राश्चित्ररचना विलुठत्कज्जलादिव ॥ १३ ॥

१ दोषान्तरं च—नास्ति खं. ॥

वारुणीपानतो मद्यपानात्, यान्त्यपगच्छन्ति, कान्तिः शारीरं तेजः, कीर्तिर्यशः, मतिस्तात्कालिकी प्रतिभा, श्रीः सम्पत्। विचित्रा इत्याद्युपमानं स्पष्टम् ॥ १३ ॥ तथा—

भूतात्तवन्नरीनर्त्ति रारटीति सशोकवत्।
दाहज्वरार्त्तवद् भूमौ सुरापो लोलुठीति च ॥ १४ ॥

भूतात्तो व्यन्तरविशेषपरिगृहीतः, त्रीण्यपि क्रियापदानि भृशाभीक्ष्णयोर्यङ्लुबन्तानि ॥ १४ ॥ तथा—

विदधत्यङ्गशैथिल्यं ग्लपयन्तीन्द्रियाणि च।
मूर्च्छामतुच्छां यच्छन्ती हाला हालाहलोपमा ॥ १५ ॥

हाला सुरा, हालाहलोपमा, हालाहलो विषविशेषस्तत्सदृशी। साधारणधर्मानाह—विदधती कुर्वाणा अङ्गशैथिल्यं शरीरविशंस्थुलत्वम्[1]। ग्लपयन्ती कार्याक्षमाणि कुर्व्वती[2], इन्द्रियाणि चक्षुरादीनि। मूर्च्छा चैतन्याभावस्तामतुच्छां प्रचुरां यच्छन्ती। अङ्गशैथिल्यादयो हालाहालाहलयोः साधारणा धर्माः ॥ १५ ॥ तथा—

---

१ विसंस्थुल० खं०। "कुमुल-तुमुल-निचुल-वञ्जुल-पृथुल-विशंस्थुला-ऽङ्गुल-मुकुल-शष्कुलादयः ॥४८७॥ एते उलप्रत्ययान्ता निपात्यन्ते......विपूर्वात् शंसेस्थोऽन्तश्च विशंस्थुलो व्यग्रः" इति सटीके हैमे उणादिसूत्रे ॥ २ कुर्वती-शां० ॥

विवेकः संयमो ज्ञानं सत्यं शौचं दया क्षमा ।
मद्यात् प्रलीयते सर्वं तृण्या वह्निकणादिव ॥ १६ ॥

विवेको हेयोपादेयज्ञानम्, संयम इन्द्रियवशीकारः, ज्ञानं शास्त्रावबोधः, सत्यं तथ्या भाषा, शौचमाचारशुद्धिः, दया करुणा, क्षमा क्रोधस्यानुत्पाद उत्पन्नस्य वा विफलीकरणम् । मद्यान्मद्यपानात् प्रलीयते नाशमुपयाति सर्वं विवेकादि । यथा वह्निकणात् तृण्या तृणसमूहः । तृणानां समूहस्तृण्या, पाशादित्वाल्ल्यः[1] ॥ १६ ॥ तथा—

दोषाणां कारणं मद्यं मद्यं कारणमापदाम् ।
रोगातुर इवापथ्यं तस्मान्मद्यं विवर्जयेत् ॥ १७ ॥

दोषाणां चौर्यपारदारिकत्वादीनां कारणं हेतुः, मद्यपानरतो हि किं किमकार्यं न कुरुते? दोषकारणत्वादेव चापदां वध-बन्धादीनां कारणम्, तस्मान्मद्यं विवर्जयेदित्युपसंहारः । रोगातुर इवापथ्यमित्युपमानम् ।

अत्रान्तरश्लोकाः—

रसोद्भवाश्च भूयांसो भवन्ति किल जन्तवः । तस्मान्मद्यं न पातव्यं हिंसापातकभीरुणा ॥ १ ॥
दत्तं न दत्तमात्तं च नात्तं कृतं च नो कृतम् । मृषोद्यराज्यादिव हा स्वैरं वदति मद्यपः ॥ २ ॥

---

१ "पाशादेश्च ल्यः"–सि० ६।२।२५।

गृहे बहिर्वा मार्गे वा परद्रव्याणि मूढधीः ।[1] वध–बन्धादिनिर्भीको गृह्णात्याच्छिद्य मद्यपः ॥ ३ ॥
बालिकां युवतीं वृद्धां ब्राह्मणीं श्वपचीमपि । भुङ्क्ते परस्त्रियं सद्यो मद्योन्मादकदर्थितः ॥ ४ ॥
रटन् गायन् लुठन् धावन् कुप्यंस्तुष्यन् रुदन् हसन् । स्तंभन्नमन् भ्रमंस्तिष्ठन् सुरापः पापराट् नटः ॥ ५ ॥
श्रूयते किल शाम्बेन मद्यादन्धम्भविष्णुना । हतं वृष्णिकुलं सर्वं प्लोषिता च पुरी पितुः[2] ॥ ६ ॥
पिबन्नपि मुहुर्मद्यं मद्यपो नैव तृप्यति । जन्तुजातं कवलयन् कृतान्त इव सर्वदा ॥ ७ ॥
लौकिका अपि मद्यस्य बहुदोषत्वमास्थिताः[3] । यत्तस्य परिहार्यत्वमेवं पौराणिका जगुः ॥ ८ ॥
कश्चिदृषिस्तपस्तेपे भीत इन्द्रः सुरस्त्रियः । क्षोभाय प्रेषयामास तस्यागत्य च तास्तकम् ॥ ९ ॥
विनयेन समाराध्य वरदाभिमुखं स्थितम् । जगुर्मद्यं तथा मांसं सेवस्वाब्रह्म चेच्छया ॥ १० ॥
स एवं गदितस्ताभिर्द्वयोर्नरकहेतुताम् । आलोच्य मद्यरूपं च शुद्धकारणपूर्वकम् ॥ ११ ॥
मद्यं प्रपद्य तद्भोगान्नष्टधर्मस्थितिर्मदात्[4] । विदंशार्थमजं हत्वा सर्वमेव चकार सः ॥ १२ ॥
अवद्यमूलं नरकस्य पद्धतिं, सर्वापदां स्थानमकीर्त्तिकारणम् ।
अभव्यसेव्यं गुणिभिर्विगर्हितं, विवर्जयेन्मद्यमुपासकः सदा ॥ १३ ॥ ॥ १७ ॥

१ स्तर्जयन् भ्रमं०–खं० ॥ २ पितुः पुरी–ख. च ॥ ३ ०माश्रिताः–ख. च. ञ. ॥ ४ तद्भोगाद् नष्टधर्मस्थितिरित्यर्थः ॥

अथ मांसदोषानाह—

चिखादिषति यो मांसं प्राणिप्राणापहारतः ।
उन्मूलयत्यसौ मूलं दयाख्यं धर्मशाखिनः ॥ १८ ॥

चिखादिषति खादितुमिच्छति, यः कश्चित्, मांसं पिशितम्, असौ पुमान्, उन्मूलयति उत्खनति, किं तत् ? मूलं दयासंज्ञकम्, कस्य ? धर्मशाखिनः पुण्यवृक्षस्य । मांसखादने कथं धर्मतरोर्दयाख्यं मूलमुन्मूल्यते ? इत्याह–प्राणिप्राणापहारतः प्राणिप्राणापहाराद्धेतोः, न हि प्राणिप्राणापहारमन्तरेण मांसं संभवतीति ॥ १८ ॥

अथ मांसं चिखादिषन्नपि प्राणिदयां करिष्यतीत्याह—

अशनीयन् सदा मांसं दयां यो हि चिकीर्षति ।
ज्वलति ज्वलने वल्लीं स रोपयितुमिच्छति ॥ १९ ॥

सदा सर्वदा, मांसमशनीयन् मांसमशनमिवाचरन्, पुत्रीयति च्छात्रमितिवत् 'आधाराच्चोपमानादाचारे'[सि०।३।४।२४।। इति क्यनि रूपम्, दयां कृपाम्, यः कश्चित्, हि स्फुटम्, चिकीर्षति कर्तुमिच्छति । ज्वलतीत्यादिना निदर्शनम्, यथा ज्वलत्यग्नौ वल्लीरोपणमशक्यं तथा मांसमशनीयता दयाऽपि कर्तुमशक्येत्यर्थः ॥ १९ ॥

नन्वन्यः प्राणिनां घातकोऽन्यश्च मांसभक्षक इति कथं मांसभक्षकस्य प्राणिप्राणापहरणमिति ? उच्यते—भक्षकोऽपि घातक एवेत्याह—

॥ ४३५ ॥

हन्ता पलस्य विक्रेता संस्कर्त्ता भक्षकस्तथा ।
क्रेताऽनुमन्ता दाता च घातका एव यन्मनुः ॥ २० ॥

हन्ता शस्त्रादिना प्राणिनां प्राणापहारकः, पलस्य विक्रेता यो मांसं विक्रीणीते, पलस्येत्युत्तरेष्वपि पदेषु सम्बन्धनीयम्, संस्कर्त्ता यो मांसं संस्करोति, भक्षकः खादकः, क्रेता यो मांसं क्रीणाति, अनुमन्ता यः प्राणिहिंसया मांसमुत्पाद्यमानमनुमोदते, दाता यो मांसमतिथ्यादिभ्यो ददाति, एते साक्षात् पारम्पर्येण वा घातका एव प्राणिप्राणापहारका एव, यन्मनुरिति संवादार्थम् ॥ २० ॥

मानवमेवोक्तं दर्शयति—

"अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः ॥ २१ ॥" [ मनुस्मृति ५।५१ ]

अनुमन्ता अनुमोदकः, विशसिता हतस्याङ्गविभागकरः, निहन्ता व्यापादकः, क्रयविक्रयी क्रयविक्रयौ विद्येते यस्य स तथा, क्रेता विक्रेता चेत्यर्थः, संस्कर्त्ता मांसपाचकः, उपहर्त्ता परिवेष्टा, खादको भक्षकः, एते सर्वे घातकाः ॥ २१ ॥

द्वितीयमपि मानवं श्लोकमाह—

"नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥ २२ ॥" [मनुस्मृति ५।४८]

यावत् प्राणिनो न हतास्तावन्मांसं नोत्पद्यते, हिंसा चातिशयेन दुःखावहा, तस्मान्मांसं विवर्जयेत् । उत्पद्यत इति मांसस्य हिंसानिमित्तत्वात् कर्तृव्यपदेश इति समानकर्तृकत्वमविरुद्धम् । न च स्वर्ग्य इति न स्वर्गानुत्पत्तिमात्रमभिप्रेतम्, अपि तु नरकादिदुःखहेतुता ॥ २२ ॥

इदानीमन्यपरिहारेण भक्षकस्यैव वधकत्वमाह—

ये भक्षयन्त्यन्यपलं स्वकीयपलपुष्टये ।
त एव घातका यन्न वधको भक्षकं विना ॥ २३ ॥

अन्यपलमन्यमांसं स्वमांसपुष्टये ये भक्षयन्ति त एव परमार्थतो घातका न तु हन्तृ-विक्रेतृप्रभृतयः । अत्र युक्तिमाह-यद् यस्मान्न भक्षकं विना वधको भवति, ततो हन्तृप्रभृतिभ्यो भक्षकः पापीयान् । स्वकीयपलपुष्टय इति साभिप्रायम्, स्वपलपोषणमात्रप्रयोजनः कतिपयदिनजीवितः परजीवितप्रहाणं कुर्यात् । यदाह—

०यवल०-शां. ॥ २ घातका ननु हन्तृ०-शां. । घातका तु हन्तृ०-सं० ॥ ३ इति हिंसाभिप्रायं मु. ॥

॥ ४३७ ॥

"हंतूणं परपाणे अप्पाणं जे[1] कुणंति सप्पाणं। अप्पाणं दिवसाणं कएण नासेंति अप्पाणं ॥ १" ॥ [ ] तथा
"एक्कस्स कए नियजीवियस्स बहुयाउ[2] जीवकोडीओ। दुक्खे ठवंति जे केवि ताण किं सासयं जीयं[3]?॥१॥" [ ] २३॥

एतदेव सजुगुप्समाह—

मृष्टान्नान्यपि[4] विष्ठांसादमृतान्यपि मूत्रसात्।
स्युर्यस्मिन्नङ्गकस्यास्य कृते कः पापमाचरेत्? ॥ २४ ॥

मृष्टान्नानि शालि-मुद्ग-माष-गोधूमादीनि, तान्यपि विष्ठांसाद् विष्ठात्वेन स्युः संपद्येरन्। अमृतानि पयःप्रभृतीनि, तान्यपि मूत्रसाद्, मूत्रत्वेन स्युः संपद्येरन्। यस्मिन् अस्य प्रत्यक्षस्य अङ्गकस्य कुत्सितस्य शरीरस्य कृते निमित्तं कः सचेतनः पापं प्राणिघातलक्षणमाचरेत् विदधीत ? ॥ २४ ॥

इदानीं मांसभक्षणं न दोषायेति वदतो निन्दति—

मांसाशने न दोषोऽस्तीत्युच्यते यैर्दुरात्मभिः।
व्याध-गृध्र-वृक-व्याघ्र-शृगालास्तैर्गुरूकृताः ॥ २५ ॥

---

१ ये–खं. सं. ॥ हत्वा परप्राणान् आत्मानं ये कुर्वन्ति सप्राणम्। अल्पानां दिवसानां कृतेन नाशयन्ति आत्मानम्॥ एकस्य कृते निजजीवितस्य बहुका जीवकोटीः। दुःखे स्थापयन्ति ये केऽपि तेषां किं शाश्वतं जीवितम्॥ २ बहुआउ–मु.। बहुयाओ–खं०॥ ३ सासयं जीअं—खं.। सासओ अप्पा—ढ. ॥ ४–६ मिष्टा० मु. ॥ ५, ७, ८ हस्तलिखितादर्शेषु विष्टा० इति पाठः ॥

मांसभक्षणे न दोषोऽस्तीति यैरुच्यते दुरात्मभिर्दुःस्वभावैः, यथा—

"न मांसभक्षणे दोषो न मद्ये न च मैथुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥१॥" [मनुस्मृतौ ५।५६] इति, तैर्व्याधा लुब्धकाः, गृध्रा हिंस्राः पक्षिविशेषाः, वृका अरण्यश्वानः, व्याघ्राः शार्दूलाः, शृगाला जम्बुकाः, गुरूकृताः उपदेशकाः कृताः, न हि व्याधादीन् गुरून् विना कश्चिदेवंविधं शिक्षयति, न चाशिक्षितं महाजनपूज्या एवमुपदिशन्ति। अपि च, निवृत्तिस्तु महाफलेति वदद्भिर्येषां निवृत्तिर्महाफला तेषां प्रवृत्तिर्न दोषवतीति स्वयमेव स्ववचनविरोध आविष्कृत इति किमन्यद् ब्रूमहे ॥ २५ ॥

निरुक्तबलेनापि मांसस्य परिहार्यत्वमाह—

"मां स भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम्।" [मनुस्मृति ५।५५]
एतन्मांसस्य मांसत्वे निरुक्तं मनुरब्रवीत् ॥ २६ ॥

मां स भक्षयितेति अत्र स इति सर्वनाम सामान्यापेक्षं योग्येनार्थेन निराकाङ्क्षीकरोति—यस्य मांसमहमद्मि। इहेति इहलोके, अमुत्रेति परलोके, एतद्मांसस्य मांसत्वे मांसरूपतायां निरुक्तं नामधेयनिर्वचनं मनुरब्रवीत् ॥ २६ ॥

१ "एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः॥" इति उत्तरार्धं मनुस्मृतौ ॥
२ मांसरूपत्वे—शां. ॥

॥ ४३९ ॥

मांसभक्षणे महादोषमाह—

मांसास्वादनलुब्धस्य देहिनं देहिनं प्रति ।
हन्तुं प्रवर्त्तते बुद्धिः शाकिन्या इव दुर्धियः ॥ २७ ॥

मांसभक्षणलम्पटस्य देहिनं देहिनं प्रति यं यं पश्यति जलचरं मत्स्यादिकम्, स्थलचरं मृगवराहादि अजाऽविकादि च, खचरं[1] तित्तिर-[2]लावकादि, अन्ततो मूषिकाद्यपि, तं तं प्रति हन्तुं हननाय बुद्धिः प्रवर्त्तते; दुर्धियो दुर्बुद्धेः । शाकिन्या इव—यथा हि शाकिनी यं यं पुरुषं स्त्रियमन्यं वा प्राणिनं पश्यति तं तं हन्तुं तस्या बुद्धिः प्रवर्त्तते, तथा मांसास्वादनलुब्धस्यापीति ॥ २७ ॥

अपि च मांसभक्षिणामुत्तमपदार्थपरिहारेण नीचपदार्थोपादानं महद् बुद्धिवैगुण्यं दर्शयतीति दर्शयन्नाह—

ये भक्षयन्ति पिशितं दिव्यभोज्येषु सत्स्वपि ।
सुधारसं परित्यज्य भुञ्जते ते हलाहलम् ॥ २८ ॥

दिव्यभोज्येषु सकलधातुबृंहकेषु सर्वेन्द्रियप्रीतिप्रदेषु क्षीर-क्षैरेयी-किलाटी[3]-कूर्चिका-रसाला-दध्यादिषु मोदक-मण्डक-मण्डिका-खाद्यक-पर्पटिका-घृतपूरादिषु इण्डेरिका-पूरण-वटक-वटिका-पर्पटादिषु इक्षु-गुड-खण्ड-शर्करादिषु द्राक्षा-सहकार-

---

१ खेचरं—मु. ॥ २ तित्तिरि० मु. ॥
३ किलाट०—सं. खं. । " उमे क्षीरस्य विकृती किलाटी कूर्चिकाऽपि च ॥ ३-६९ ॥ " इति अभिधानचिन्तामणौ ॥

कदल-दाडिम-नालिकेर-नारङ्ग-खर्जूरा-ऽक्षोट-राजादन-पनसादिषु च सत्स्वपि तान्यनादृत्य ये मूढा विस्रगन्धि जुगुप्साकरं शूकाप्रधानानां वान्तिकरं मांसं भक्षयन्ति ते जीवितवृद्धिहेत्वमृतरसपरिहारेण जीवितान्तकरं हलाहलं विषमेदं भुञ्जते। बालोऽपि हि दृषत्परिहारेण सुवर्णमेवादत्त इति बालादपि मांसभक्षिणो बालाः ॥ २८ ॥

भङ्ग्यन्तरेण मांसभक्षणदोषमाह—

न धर्मो निर्दयस्यास्ति पलादस्य कुतो दया ।
पललुब्धो न तद्वेत्ति विद्याद्वोपदिशेन्न हि ॥ २९ ॥

निर्दयस्य कृपारहितस्य धर्मो नास्ति, धर्मस्य दया मूलमिति ह्यामनन्ति। ततः प्रस्तुते किमायातमत आह—पलादस्य कुतो दया? पलादस्य मांसोपजीविनः कुतो दया? नैव दयेत्यर्थः, भक्षकस्य वधकत्वेनोक्तत्वात्, वधकश्च कथं सदयो नाम इति पलादस्य निर्धर्मतालक्षणो दोषः ।

ननु सचेतनः कथमात्मनि धर्माभावं सहेत? उच्यते—पललुब्धो न तद्वेत्ति, मांसलोभेन न तत्पूर्वार्धोक्तं जानाति। अथ कथञ्चिद्विद्याज्जानीयात्तर्हि स्वयं मांसलुब्धो मांसनिवृत्तिं कर्तुमशक्नुवन् सर्वेऽपि मत्सदृशा[1] भवन्त्विति परेभ्यो मांसनिषेधं नोपदिशेदाजिणकवत्। श्रूयते हि कश्चिदाजिणको मार्गे गच्छन्नेकया सर्पिण्या भक्षितस्तत् सर्वेऽपि भक्ष्यन्तामनयेति

१ मम सदृशा—मु. ॥

॥ ४४१ ॥

बुद्धया परेभ्यो नाख्यातवानिति द्वितीयोऽपि तथैव दष्टो नान्येषां कथितवान्, एवं यावत् सप्त दष्टाः। मांसभक्षकोऽपि मांसभक्षणात्स्वयं नरके पतन्

" स्वयं नष्टा दुरात्मानो नाशयन्ति परानपि "

इति न परेभ्य उपदिशति ॥ २९ ॥

इदानीं मांसभक्षकाणां मूढतामुपदर्शयति—

केचिन्मांसं महामोहादश्नन्ति न परं स्वयम् ।
देव-पित्रतिथिभ्योऽपि कल्पयन्ति यदूचिरे ॥ ३० ॥

केचित् कुशास्त्रविप्रलब्धा महतो मोहान्न केवलं स्वयं मांसमश्नन्ति, किन्तु देवेभ्यः पितृभ्योऽतिथिभ्यश्च कल्पयन्ति, यद् यस्मादूचिरे तद्धर्मशास्त्रकाराः ॥ ३० ॥

उक्तमेवाह—

" क्रीत्वा स्वयं वाऽप्युत्पाद्य परोपहृतमेव वा ।
देवान् पितृन् समभ्यर्च्य खादन् मांसं न दुष्यति ॥ ३१ ॥" [ मनुस्मृति ५।३२ ]

---

१ तथैव—मु. ॥

मृग-पक्षिमांसविषयमेतच्छास्त्रम्, तेन सूनापणमांसं विना व्याध-शाकुनिकादिभ्यः क्रीत्वा मूल्येन, सूनापणमांसे[1] तु देवपूजादावनधिकृते[2], तथा स्वयमुत्पाद्य ब्राह्मणो याच्ञया, क्षत्रियो मृगयाकर्मणा, अथवा परेणोपहृतं ढौकितम्, तेन मांसेन देवानां पितॄणां चार्चनं कृत्वा मांसं खादन्न दुष्यति। एतच्च महामोहादिति वदद्भिरस्माभिर्दूषितमेव। स्वयमपि हि प्राणिघात-हेतुकं मांसं भक्षयितुमयुक्तं किं पुनर्देवादिभ्यः कल्पयितुम्। देवा हि सुकृतसम्भारलब्धात्मानोऽधातुकशरीरा अकावलिकाहाराः कथं मांसं भक्षयेयुः? अभक्षयद्भ्यश्च[3] तत्कल्पनं मोह एव। पितरश्च स्वसुकृत-दुष्कृतवशेन प्राप्तगतिविशेषाः स्वकर्मफल-मनुभवन्तो न पुत्रादिकृतेनापि सुकृतेन तार्यन्ते किं पुनर्मांसढौकनदुष्कृतेन?। न च पुत्रादिकृतं सुकृतं तेषामुपतिष्ठते। न ह्याम्रेषु सेकः कोविदारेषु फलं दत्ते। अतिथिभ्यश्च सत्कारार्हेभ्यो नरकपातहेतोर्मांसस्य ढौकनं महते अधर्माय। एवं परेषां महामोहचेष्टितम्। श्रुति-स्मृतिविहितत्वादनोद्यमेतादिति चेत्, न श्रुतिभाषितेष्वप्रामाणिकेषु प्रत्ययस्य कर्तुमशक्यत्वात्। श्रूयन्ते हि श्रुतिर्वचांसि[4] भूयांसि—'यथा पापघ्नो गोस्पर्शः द्रुमाणां च पूजा, छागादीनां वधः स्वर्ग्यः, ब्राह्मणभोजनं पितृप्रीणनम्, मायावीन्यधिदैवतानि, वह्नौ हुतं देवप्रीतिप्रदम्।' तदेवंविधेषु श्रुतिभाषितेषु युक्तिकुशलाः कथं श्रद्दधीरन्?। यदाह—

"स्पर्शोऽमेध्यभुजां गवामघहरो वन्द्या विसंज्ञा द्रुमाः,
स्वर्गश्छागवधाद्धिनोति च पितॄन् विप्रोपभुक्ताशनम्।

---

१ ०मांसेन देव०० खं.॥ २ ०कृतेः—मु.॥ ३ ०यद्भ्यस्तत्क०—मु.॥ ४ वचांसि यथा—मु.॥

॥ ४४३ ॥

आस्ताश्छन्नपशाः सुराः शिखिहुतं प्रीणाति देवान् हविः,
स्फीतं फल्गु च वल्गु च श्रुतिगिरां को वेत्ति लीलायितम् ? ॥ १ ॥" [ ]

तस्मान्महामोह एवायं मांसेन देवपूजाऽऽदिकमित्यलं विस्तरेण ॥ ३१ ॥

ननु मंत्रसंस्कृतो वह्निर्न दहति पचति वा, तद् मन्त्र–संस्कृतं मांसं न दोषाय स्यात् । यन्मनुः—

"असंस्कृतान् पशून् मन्त्रैर्नाद्याद्विप्रः कथञ्चन ।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥ १ ॥" [ मनुस्मृति ५।३६ ]

शाश्वतो नित्यो वैदिक इत्यर्थः ॥

अत्राह—

मन्त्रसंस्कृतमप्यद्याद्यवाल्पमपि नो पलम् ।
भवेज्जीवितनाशाय हालाहललवोऽपि हि ॥ ३२ ॥

मन्त्रसंस्कृतमपि मन्त्रपूतमपि पलं नाद्यात्, न हि मन्त्रा अग्नेर्दहनशक्तिवन्नरकादिप्रापणशक्तिं मांसस्य प्रतिबध्नन्ति । तथा सति सर्वपापानि कृत्वा पापघ्नमन्त्रानुस्मरणमात्रात् कृतार्था भवेयुः । एवं च सर्वपापप्रतिषेधोऽपि निरर्थकः स्यात्, सर्वपापानां मन्त्रादेव नाशप्रसक्तेः ।

---

१ कृतार्थीभवेयुः खं. मु. । कृतार्थ । भवेयुः—सं. ॥

अथ यथा स्तोकं मद्यं न मदयति तथा स्वल्पं मांसं न पापाय स्यात्। उच्यते—यवाल्पमपि यवतुल्यप्रमाणमपि नाद्यात् पलमिति संबध्यते, तदपि दोषाय, अत्रोत्तरार्द्धेन निदर्शनम् ॥ ३२ ॥

इदानीमनुत्तरं मांसस्य दोषमुपदर्शयन्नुपसंहरति—

सद्यः संमूर्च्छितानन्तजन्तुसन्तानदूषितम् ।
नरकाध्वनि पाथेयं कोऽश्नीयात् पिशितं सुधीः ? ॥ ३३ ॥

सद्यो जन्तुविशसनकाल एव संमूर्च्छिता उत्पन्ना अनन्ता निगोदरूपा ये जन्तवस्तेषां सन्तानः पुनः पुनर्भवनं तेन दूषितम्। यदाहुः—

"आमासु अ पक्कासु अ विपच्चमाणासु मंसपेसीसु ।
सययं चिय उववाओ भणिओ उ निगोअजीवाणं ॥ १ ॥" [ ]

तत एव नरकाध्वनि पाथेयम्, पिशितभक्षणस्य पाथेयत्वे पिशितमपि पाथेयमुक्तम्, कोऽश्नीयात् पिशितं सुधीरित्युपसंहारः। अत्रान्तरश्लोकाः—

मांसलुब्धैरमर्यादैर्नास्तिकैः स्तोकदर्शिभिः । कुशास्त्रकारैर्वैयात्याद्गदितं मांसभक्षणम् ॥ १ ॥

---

१ यदाह—खं. मु. ॥ २ निगोय० खं. ॥—आमासु च पक्वासु च विपच्यमानासु मांसपेशीषु। सततमेव उपपातो भणितस्तु निगोदजीवानाम् ॥

॥ ४४५ ॥

नान्यस्ततो गतघृणो नरकार्चिष्मदिन्धनम् । स्वमांसं परमांसेन यः[1] पोषयितुमिच्छति ॥ २ ॥

स्वाङ्गं पुष्णन्[2] नृगूथेन वरं हि गृहसूकरः[3] । प्राणिघातोद्भवैर्मांसैर्न पुनर्निर्घृणो नरः ॥ ३ ॥

निःशेषजन्तुमांसानि भक्ष्याणीति यँ[4] ऊचिरे । नृमांसं वर्जितं शङ्के स्ववधाशङ्कयैव तैः ॥ ४ ॥

विशेषं यो न मन्येत नृमांस-पशुमांसयोः । धार्मिकस्तु ततो नान्यः पापीयानपि नापरः ॥ ५ ॥

शुक्रशोणितसम्भूतं विष्टारसविवर्द्धितम् । लोहितं स्त्यानतामाप्तं कोऽश्नीयादकृमिः पलम् ? ॥ ६ ॥

अहो द्विजातयो धर्मं शौचमूलं वदन्ति च । सप्तधातुकदेहोत्थं मांसमश्नन्ति चाधमाः ॥ ७ ॥

येषां तु तुल्ये मांसान्ने सतृणाभ्यवहारिणाम् । विषामृते समे तेषां मृत्यु-जीवितदायिनी ॥ ८ ॥

भक्षणीयं सतां मांसं प्राण्यङ्गत्वेन हेतुना । ओदनादिवदित्येवं ये चानुमिमते जडाः[5] ॥ ९ ॥

गोसम्भवत्वात्ते मूत्रं पयोवन्न पिबन्ति किम् ? । प्राण्यङ्गतानिमित्ता च नौदनादिषु भक्ष्यता ॥ १० ॥

शङ्खादि शुचि नास्थ्यादि प्राण्यङ्गत्वे समे यथा । ओदनादि तथा भक्ष्यमभक्ष्यं पिशितादिकम् ॥ ११ ॥

यस्तु प्राण्यङ्गमात्रत्वात् प्राह मांसौदने समे । स्त्रीत्वमात्रान्मातृपत्न्योः[6] स किं साम्यं न कल्पयेत् ? ॥ १२ ॥

पञ्चेन्द्रियस्यैकस्यापि वधे तन्मांसभक्षणात् । यथा हि नरकप्राप्तिर्न तथा धान्यभोजनात् ॥ १३ ॥

न हि धान्यं भवेन्मांसं रसरक्तविकारजम् । अमांसभोजिनस्तस्मान्न पापा धान्यभोजिनः ॥ १४ ॥

---

१ यो वर्धयितु०—ख. च. ञ. ण. ॥ २ पुष्णन् स्वगूथेन—खं. ॥ ३ ०शूकरः—सं. विना ॥ ४ यदूचिरे—खं. ॥ ५ जनाः खं ॥ ६ ०मातृ-पुत्र्योः—खं ॥

धान्यपाके प्राणिवधः परमेकोऽवशिष्यते। गृहिणां देश्ययमिनां स तु नात्यन्तबाधकः ॥ १५ ॥
मांसखादकगतिं विमृशन्तः सस्यभोजनरता इह सन्तः। प्राप्नुवन्ति सुरसम्पदमुच्चैर्जैनशासनजुषो गृहिणोऽपि ॥१६॥—॥३३॥

क्रमप्राप्तं नवनीतभक्षणदोषमाह—

> अन्तर्मुहूर्त्तात् परतः सुसूक्ष्मा जन्तुराशयः।
> यत्र मूर्च्छन्ति तन्नाद्यं नवनीतं विवेकिभिः ॥ ३४ ॥

अन्तर्मध्यं मुहूर्त्तस्य अन्तर्मुहूर्त्तम्, तस्मात् परत ऊर्ध्वम्, अतिशयेन सूक्ष्माः सुसूक्ष्माः, जन्तुराशयो जन्तुसमूहाः, यस्मिन्नवनीते, मूर्च्छन्ति उत्पद्यन्ते, तन्नवनीतं, नाद्यं न भक्षणीयं, विवेकिभिः ॥ ३४ ॥

एनमेवार्थं भावयति—

> एकस्यापि हि जीवस्य हिंसने किमघं भवेत्।
> जन्तुजातमयं तत् को नवनीतं निषेवते? ॥ ३५ ॥

एकस्यापि हि जन्तोर्वधे किं निर्देष्टुमशक्यमघं पापं भवेत्, तत्तस्माज्जन्तुजातं प्रकृतमस्मिंस्तज्जन्तुजातमयं नवनीतं को निषेवते कः सविवेकोऽश्नाति? ॥ ३५ ॥

---

१ ०व्रतिनां—शां ॥ २ शासन। ३,-४ अन्तमु०—खं० ॥

क्रमप्राप्तान् मधुदोषानाह—

अनेकजन्तुसङ्घातनिघातनसमुद्भवम् ।
जुगुप्सनीयं लालावत् कः स्वादयति माक्षिकम् ? ॥ ३६ ॥

अनेकस्य जन्तुसङ्घातस्य यन्निघातनं विनाशस्तस्मात् समुद्भवो यस्य तत्तथा । निघातनमिति "हन्त्यर्थाश्च" [धातुपा० १०।१६९] इति हन्तेश्चुरादिपाठात् णिजन्तस्य रूपम्। अयं परलोकविरोधो दोषः। जुगुप्सनीयं कुत्सनीयं, लालावल्लालामिव, अयमिहलोकविरोधो दोषः । कः सचेतनः, स्वादयति भक्षयति, मक्षिकाभिः कृतं माक्षिकं मधु। एतच्च भ्रामरादीनामुपलक्षणम् ॥ ३६ ॥

इदानीं मधुभक्षकाणां पापीयस्तां दर्शयति—

भक्षयन्माक्षिकं क्षुद्रजन्तुलक्षक्षयोद्भवम् ।
स्तोकजन्तुनिहन्तृभ्यः सौनिकेभ्यो[2]ऽतिरिच्यते ॥ ३७ ॥

"[3]क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः । शतं वा प्रसृतिर्येषां केचिदा नकुलादपि ॥ १ ॥" [ ]

---

१ "१६९ घटन् संघाते......। हन्त्यर्थाश्च, येऽन्यत्र हन्त्यर्था हिंसार्थाः पठ्यन्ते तेऽन्यत्र चुरादौ वेदितव्याः" इति हैमधातुपारायणे चुरादिगणे ॥ २ शौनिके०—मु० ॥ ३ श्लोकोऽयं पाणिनीयव्याकरणस्य २।४।८ सूत्रस्य व्याख्यायां काशिकायां दृश्यते ॥

तेषां क्षुद्रजन्तूनां लक्षाणि, लक्षग्रहणं बहुत्वोपलक्षणम् । तेषां क्षयो विनाशः, तस्मादुद्भवो यस्य तत्तथा, तद्भक्षयन् स्तोकपश्वादिजन्तुनिहन्तृभ्यः सौनिकेभ्यः खट्टिकेभ्योऽतिरिच्यते अधिकीभवति; भक्षकोऽपि घातक इत्युक्तप्रायम् ॥ ३७ ॥

लौकिकानामप्युच्छिष्टभोजनत्याजिनामुच्छिष्टत्वान्मधु परिहर्त्तव्यमेवेत्याह—

एकैककुसुमक्रोडाद्रसमापीय मक्षिकाः ।
यद्वमन्ति मधूच्छिष्टं तदश्नन्ति न धार्मिकाः ॥ ३८ ॥

एकैकस्य कुसुमस्य यः क्रोड उत्सङ्गस्तस्माद्रसं मकरन्दमापीय पीत्वा, मक्षिका यद्वमन्ति उद्गिरन्ति, तदुच्छिष्टं मधु, धर्मं चरन्ति धार्मिकास्ते नाश्नन्ति । अनुच्छिष्टभोजनं हि धर्मो लौकिकानाम् ॥ ३८ ॥

ननु त्रिदोषशमनं मधु, नातः परमौषधमस्तीति रोगोपशान्तये मधुभक्षणे को दोष इत्याह—

अप्यौषधकृते जग्धं मधु श्वभ्रनिबन्धनम् ।
भक्षितः प्राणनाशाय[1] कालकूटकणोऽपि हि ॥ ३९ ॥

आस्तां रसास्वादलाम्पट्येन, यावदौषधकृतेऽपि औषधनिमित्तमपि मधु जग्धं यद्यपि रोगापहारकं तथापि श्वभ्रस्य नरकस्य निबन्धनम्; हि यस्मात् प्रमादाज्जीवितार्थितया वा कालकूटस्य विषस्य कणोऽपि लवोऽपि भक्षितः सन् प्राणनाशाय भवति ॥ ३९ ॥

---

१ प्राणि०—खं० ।

॥ ४४९ ॥

ननु खर्जूर-द्राक्षादिरसवन्मधु मधुरमिति सर्वेन्द्रियाप्यायकत्वात् कथं परिहार्य्यं स्यादित्याह—

मधुनोऽपि हि माधुर्यमबोधैरहहोच्यते ।
आसाद्यन्ते यदास्वादाच्चिरं नरकवेदनाः ॥ ४० ॥

सत्यमस्ति मधुनो माधुर्यं व्यवहारतः, परमार्थस्तु नरकवेदनाहेतुत्वादत्यन्तकटुकत्वमेव । अबोधैरिति परमार्थपरिशील-नाविकलैः, 'नरकवेदनाहेतोरपि मधुनो माधुर्यवर्णनमबोधानाम्' इति अहहेत्यनेन विषादो द्योत्यते। यस्य मधुन आस्वादान्नरकवेदनाश्चिरमासाद्यन्ते प्राप्यन्ते ॥ ४० ॥

पवित्रत्वात् मधु देवस्नानोपयोगीति ये मन्यन्ते तानुपहसति—

मक्षिकामुखनिष्ठ्यूतं जन्तुघातोद्भवं मधु ।
अहो पवित्रं मन्वाना देवस्नाने प्रयुञ्जते ॥ ४१ ॥

मक्षिकाणां मुखानि तैर्निष्ठ्यूतं वान्तं जन्तुघातात् प्राणिघातादुद्भवो यस्य तत्तादृशमपवित्रं मधु पवित्रं शुचि मन्वाना अभिमन्यमानाः, देवानां शङ्करादीनां, स्नाने स्नाननिमित्तं, प्रयुञ्जते व्यापारयन्ति। अहो इत्युपहासे, यथा—

---

१ आभ्राद्यन्ते—खं० ॥ २ अबोधैरपि पर०—खं० ॥

" करभाणां विवाहे[1] तु रासभास्तत्र गायनाः । परस्परं प्रशंसन्ति अहो रूपमहो ध्वनिः ॥ १ ॥" ४१ ॥ [ ]

क्रमप्राप्तान् पञ्चोदुम्बरदोषानाह—

उदुम्बर-वट-प्लक्ष-काकोदुम्बरशाखिनाम् ।
पिप्पलस्य च नाश्नीयात् फलं कृमिकुलाकुलम् ॥ ४२ ॥

उदुम्बर-वट-प्लक्ष-काकोदुम्बरिका-पिप्पलानां पञ्चोदुम्बरसंज्ञितानां फलं नाश्नीयात् । अनशने कारणमाह—कृमिकुलाकुलम्, एकस्मिन्नपि फले तावन्तः कृमयः सम्भवन्ति ये परिसंख्यातुमपि न शक्यन्ते । यल्लौकिका अपि पेठुः—

" कोऽपि क्वापि कुतोऽपि कस्यचिदहो चेतस्यकस्माज्जनः,
केनाऽपि प्रविशत्युदुम्बरफलप्राणिक्रमेण क्षणात् ।
येनास्मिन्नपि पाटिते विघटिते विस्फोटिते[2] त्रोटिते,
निष्पिष्टे परिगालिते विदलिते निर्यात्यसौ वा न वा ॥ १ ॥ " [ ] इति ॥ ४२ ॥

पञ्चोदुम्बरफलविरतानां स्तुतिमाह—

अप्राप्नुवन्नन्यभक्ष्यमपि क्षामो बुभुक्षया ।
न भक्षयति पुण्यात्मा पञ्चोदुम्बरजं फलम् ॥ ४३ ॥

---

१ विवाहे च—खं० ॥ २ वित्रासिते स्फोटिते—मु० ॥

॥ ४५१ ॥

यः पुण्यात्मा पवित्रात्मा पुरुषः स पञ्चोदुम्बरजं फलं न भक्षयति, आस्तां सुलभधान्यफलसमृद्धे देशे काले वा, यावद्देशदोषात् कालदोषाद्वा अप्राप्नुवन्नप्यन्यभक्ष्यं धान्यफलादिभक्ष्यम्, अपिशब्द उत्तरत्रापि सम्बध्यते, बुभुक्षया क्षामोऽपि कृशोऽपि । अबुभुक्षितस्य स्वस्थस्य व्रतपालनं नातिदुष्करम्, यस्तु अप्राप्तभोज्यः क्षुत्क्षामश्च व्रतं पालयति स पुण्यात्मेति प्रशस्यते ॥ ४३ ॥

क्रमप्राप्तमनन्तकायनियमं श्लोकत्रयेण दर्शयति—

आर्द्रः कन्दः समग्रोऽपि सर्वः किशलयोऽपि च ।
स्नुही लवणवृक्षत्वक् कुमारी गिरिकर्णिका ॥ ४४ ॥

शतावरी विरूढानि गुडूची कोमलाम्लिका ।
पल्यङ्कोऽमृतवल्ली च वल्लः सूंकरसंज्ञितः ॥ ४५ ॥

अनन्तकायाः सूत्रोक्ता अपरेऽपि कृपापरैः ।
मिथ्यादृशामविज्ञाता वर्जनीयाः प्रयत्नतः ॥ ४६ ॥

१ किसल० खं० । एवमग्रेऽपि ॥ २ शूकर०—मु. ॥ एवमग्रेऽपि ॥

॥ ४५२ ॥

आर्द्रोऽशुष्कः, शुष्कस्य तु निर्जीवत्वादनन्तकायत्वं न भवति, कन्दो भूमध्यगो[1] वृक्षावयवः समग्रोऽपि, सर्वे कन्दा इत्यर्थः । ते च सूरण-आर्द्रक-लशुन[2]-वज्रकन्द-हरिद्रा-कर्चूर[3]-पलाशकन्द-गृञ्जन-लोढ-कसेरुक[4]-मुद्गर-मुस्ता-मूलक-आलुक-पिण्डालुक-हस्तिकन्द-मनुष्यकन्दप्रभृतयः । किशलयः पत्रादर्वाग् बीजस्योच्छूनावस्था, सर्वो[5] न तु कश्चिदेव । स्नुही वज्रतरुः । लवणनाम्नो वृक्षस्य त्वक्, त्वगेव न त्वन्ये अवयवाः । कुमारी मांसलप्रणालाकारपत्रा । गिरिकर्णिका वल्लीविशेषः । शतावरी वल्लीविशेष एव । विरूढानि अङ्कुरितानि द्विदलधान्यानि । गुडूची वल्लीविशेषः । कोमलाऽम्लिका कोमला अबद्धास्थिका अम्लिका चिञ्चिणिका[6] । पल्यङ्कः शाकभेदः । अमृतवल्ली वल्लीविशेषः । वल्लः सूकरसंज्ञितः, सूकरवल्ल इत्यर्थः, सूकरसंज्ञितग्रहणं धान्यवल्लनिषेधार्थम् । एते आर्यप्रसिद्धाः । म्लेच्छप्रसिद्धास्तु अन्येऽपि सूत्रोक्ताः, सूत्रं जीवाभिगमः[7], अपरेऽपि कृपापरैः सुश्रावकैर्वर्जनीयाः । ते च मिथ्यादृष्टीनामविज्ञाताः; मिथ्यादृशो हि वनस्पतीनपि जीवत्वेन न मन्यन्ते, कुतः पुनरनन्तकायान् ॥ ४४ ॥ ४५ ॥ ४६॥

अथ क्रमप्राप्तमज्ञातफलं वर्जयितुमाह—

स्वयं परेण वा ज्ञातं फलमद्याद्विशारदः ।
निषिद्धे विषफले वा मा भूदस्य प्रवर्तनम् ॥ ४७ ॥

---

१ भूमिमध्यगो—मु. ॥ २ ०लशोन० सं० । लसोन—खं० ॥ ३ ०कच्चूर०—खं० सं० ॥ ४ लोढककसेरुक०—मु. ॥ ५ सर्वो न तु काचिदेव—मु. ॥ ६ चिंचणिका—खं० ॥ ७ दृश्यतां प्रथमायां प्रतिपत्तौ ॥

॥ ४५३ ॥

अज्ञातमिति संनन्धिविशेषानिर्देशात्, स्वयमात्मना परेण वा अन्येन, ज्ञातं फलमद्याद्भक्षयेद्विशारदो धीमान्, यत्तु स्वयं परेण वा न ज्ञातं तदज्ञातफलं वर्जयेत् । अज्ञातफलभक्षणे दोषोऽयम्—निषिद्धे फले विषफले वा अज्ञानादस्य विशारदस्य मा भूत् प्रवृत्तिः । अजानतो हि प्रतिषिद्धे फले प्रवर्त्तमानस्य व्रतभङ्गः, विषफले तु जीवितनाशः ॥ ४७ ॥

अथ क्रमप्राप्तं रात्रिभोजनं निषेद्धुमाह—

अन्नं प्रेत-पिशाचाद्यैः सञ्चरद्भिर्निरङ्कुशैः ।
उच्छिष्टं क्रियते यत्र तत्र नाद्याद् दिनात्यये ॥ ४८ ॥

प्रेता अधमा व्यन्तराः, पिशाचा व्यन्तरा एव, आद्यग्रहणाद्राक्षसादिपरिग्रहः, निशाचरत्वान्निरङ्कुशैः सर्वत्र सञ्चरद्भिः स्पर्शादिनोच्छिष्टमभोज्यं क्रियते यत्र दिनात्यये रात्रौ तत्र नाद्यान्न भुञ्जीत । यदाहुः—

" मालिंति महियलं जामिणीसु रयणीयरा समंतेणं ।
ते विट्टालिंति फुडं रयणीए भुंजमाणं तु ॥ १ ॥" ॥ [ ] ४८ तथा—

---

१ " अनन्तकायमज्ञातफलं रात्रौ च भोजनम् ॥ ६ ॥ " इति पूर्वमुक्तं तदत्र 'अज्ञातम्' इति शब्देन परामृश्यते ॥
२-क. ख. ॥ अज्ञानतो-मु. शां. खं. ॥ ३ निषेधयितु°—शां. ॥
४ महिअलं—मु. ॥ मालयन्ति महीतलं यामिनीषु रजनीचराः समन्तात् । ते विट्टालयन्ति स्फुटं रजन्यां भुञ्जानं तु ॥
५ रयणीभरा—मु. ॥ ६ ते वि छलंति हु फुडं-इति रत्नशेखरसूरिविरचितायां श्राद्धप्रतिक्रमणसूत्रटीकायाम् ॥

घोरान्धकाररुद्धाक्षैः पतन्तो यत्र जन्तवः ।
नैव भोज्ये निरीक्ष्यन्ते तत्र भुञ्जीत को निशि ? ॥ ४९ ॥

प्रबलान्धकारनिरुद्धलोचनैः कृमि-पिपीलिका-मक्षिकादयः पतन्तो घृत-तैल-तक्रादौ भोज्ये न दृश्यन्ते यत्र तत्र तस्यां निशि सचेतनः को भुञ्जीत ? ॥ ४९ ॥

रात्रिभोजने दृष्टान्[१] दोषान् श्लोकत्रयेणाह—

मेधां पिपीलिका हन्ति यूका कुर्याज्जलोदरम् ।
कुरुते मक्षिका वान्तिं कुष्ठरोगं च कोलिकः ॥ ५० ॥

कण्टको दारुखण्डं च वितनोति गलव्यथाम् ।
व्यञ्जनान्तर्निपतितस्तालु विध्यति वृश्चिकः ॥ ५१ ॥

विलग्नश्च गले वालः स्वरभङ्गाय जायते ।
इत्यादयो दृष्टदोषाः सर्वेषां निशि भोजने ॥ ५२ ॥

१ दृष्टदोषान्-खं. ॥

॥ ४५५ ॥

पिपीलिका कीटिका अन्नादिमध्ये भुक्ता सती मेधां बुद्धिविशेषं हन्ति, पिपीलिकेति जातवेकवचनम्। तथा यूका जलोदरमुदररोगविशेषं कुर्यात्। तथैव मक्षिका वान्तिं वमनं करोति। तथैव कोलिको मर्कटकः कुष्ठरोगं करोति। कण्टको बदर्यादिसंबन्धी दारुखण्डं च काष्ठशकलं तथैव गलव्यथां वितनोति। व्यञ्जनानि शाकादीनि, तेषां मध्ये निपतितो वृश्चिकस्तालु विध्यति।

ननु पिपीलिकादयः सूक्ष्मत्वान्न दृश्यन्ते, वृश्चिकस्तु स्थूलत्वाद् दृश्यत एव, तत्कथमयं भोज्ये निविशेत? उच्यते–व्यञ्जनमिह वार्त्ताकशाकरूपमभिप्रेतं तद्वृन्तं च वृश्चिकाकारमेव भवतीति वृश्चिकस्य तन्मध्यपतितस्यालक्ष्यत्वाद्भोज्यता सम्भवति।

विलग्नश्च गले वाल इत्यादि स्पष्टम्; एवमादयो रात्रिभोजने दृष्टा दोषाः सर्वेषां मिथ्यादृशामपि। यदाहुः—

"मेहं पिपीलियाओ हणंति वमणं च मच्छिया कुणइ। जूया जलोयरत्तं कोलियओ कोढरोगं च ॥ १ ॥
वालो सरस्स भङ्गं कण्टो लग्गइ गलम्मि दारुं च। तालुम्मि विंधइ अली वंजणमज्झम्मि भुंजंतो ॥ २ ॥" [ ]

अपि च निशाभोजने[4] क्रियमाणे अवश्यं पाकः संभवी, तत्र च षड्जीवनिकायवधोऽवश्यंभावी, भाजनधावनादौ च

१ वार्त्ताक०—शां०। वार्ताकु—मु. ॥ २ ०वतीति—मु. ॥
३ मेधां पिपीलिका घ्नन्ति वमनं च मक्षिका करोति। यूका जलोदरत्वं कोलिकः कुष्ठरोगं च॥ वालः स्वरस्य भङ्गं कण्टको लगति गले दारु च। तालुनि विध्यति अलिर्व्यञ्जनमध्ये भुज्यमानः ॥ ४ निशि भो०—खं ॥

जलगतजन्तुविनाशः, जलोज्झने च भूमिगतकुन्थु-पिपीलिकादिजन्तुघातश्च भवति, तत्प्राणिरक्षणकाङ्क्षया अपि निशाभोजनं न कर्त्तव्यम् । यदाहुः—

“ जीवाण कुंथुमाईण घायणं भाणधोयणाईसु ।
एमाइरयणिभोयणदोसे को साहिउं तरइ ? ॥ १ ॥” [ ] ५० ॥ ५१ ॥ ५२ ॥

ननु यत्रान्नस्य न पाको न वा भाजनधावनादिसंभवस्तत् सिद्धं मोदकादि खर्जूर-द्राक्षादि च भक्षयतः क इव दोष इत्याह—

नाप्रेक्ष्यसूक्ष्मजन्तुनि निश्यद्यात् प्रासुकान्यपि ।
अप्युद्यत्केवलज्ञानैर्नादृतं यन्निशाशनम् ॥ ५३ ॥

प्रासुकान्यपि अचेतनान्यपि उपलक्षणत्वात्तदानीमपक्वान्यपि मोदक-फलादीनि न निश्यद्यात् । कुतः ? अप्रेक्ष्यसूक्ष्मजन्तूनि, अप्रेक्ष्याः प्रेक्षितुमशक्याः सूक्ष्माः कुन्थु-पनकादयो जन्तवो यत्र तानि, विशेषणद्वारेण हेतुवचनम्, अप्रेक्ष्यसूक्ष्मजन्तुत्वादित्यर्थः यद् यस्मादुत्पन्नकेवलज्ञानैः केवलज्ञानबलेनाधिगतसूक्ष्मेतरजन्तुसंपातैर्निर्जन्तुकस्याहारस्याभावान्नादृतं निशाभोजनम् । यदुक्तं निशीथभाष्ये—

---

१ जलोज्झनेन भूमि०—मु. ॥ २ जीवानां कुन्थ्वादीनां घातनं भाजनधावनादिषु । एवमादिरजनीभोजनदोषान् कः कथयितुं शक्नोति ॥ ३ भायण०—मु. ॥ ४ धोअणा०—खं. ॥ ५ नाप्रेक्षसू०—सं. ॥ ६ अप्रेक्षसू०—सं. ॥

"जइ वि हु फासुगदव्वं कुंथु-पणगावि[1](गादि) तह वि दुप्पस्सा । पच्चक्खनाणिणो वि हु राईभत्तं परिहरंति ॥ १ ॥
जइ वि हु पिवीलिगाई दीसंति पईवमाइउज्जोए । तह वि खलु अणाइन्नं मूलवयविराहणा जेण ॥ २ ॥ ५३ ॥"
[ निशीथभाष्ये गा० ३४११,३४१२ बृहत्कल्पभाष्ये गा० २८६३,२८६४ ]

लौकिकसंवाददर्शनेनापि रात्रिभोजनं प्रतिषेधति—

धर्मविन्नैव भुञ्जीत कदाचन दिनात्यये ।
बाह्या अपि निशाभोज्यं यदभोज्यं प्रचक्षते ॥ ५४ ॥

धर्मवित् श्रुतधर्मवेदी न कदाचिन्निशि भुञ्जीत, बाह्या जिनशासनबहिर्भूता लौकिकास्तेऽपि यत् यस्मात् [3]निशाभोज्यमभोज्यं प्रचक्षते ॥ ५४ ॥

येन शास्त्रेण बाह्या निशाभोज्यमभोज्यं प्रचक्षते तच्छास्त्रोपदर्शनार्थं तद्यथेति तच्छास्त्रमेव पठति—

"त्रयीतेजोमयो भानुरिति वेदविदो विदुः ।
तत्करैः पूतमखिलं शुभं कर्म समाचरेत् ॥ ५५ ॥

---

१ यद्यपि खलु प्रासुकद्रव्यं कुन्थु-पनका अपि (पनकादयः) तथापि दुर्दर्शाः । प्रत्यक्षज्ञानिनोऽपि खलु रात्रिभक्तं परिहरन्ति ॥ यद्यपि खलु पिपीलिकादयो दृश्यन्ते प्रदीपाद्युद्द्योते । तथापि खल्वनाचीर्णं मूलव्रतविराधना येन ॥ २ ०गा य तह य दु०-शां. । ०गा वि तह य दु०—सं. खं. । '०गादि तह वि' इति निशीथभाष्ये पाठः ॥ ३ निशि भोज्य०—मु. ॥

॥ ४५९ ॥

त्रयी ऋग्-यजुः-सामलक्षणा, तस्यास्तेजः प्रकृतं प्रस्तुतमस्मिन् त्रयीतेजोमयो भानुरादित्यः, त्रयीतनुरिति आदित्यस्य नाम इति वेदविदो जानन्ति। तत इति शेषः, तत्करैर्भानुकरैः पूतं पवित्रीकृतमखिलं समस्तं शुभं कर्म समाचरेत्, तदभावे शुभं कर्म न कुर्य्यात् ॥ ५५ ॥ एतदेवाह—

नैवाहुतिर्न च स्नानं न श्राद्धं देवतार्चनम्।
दानं वा विहितं रात्रौ भोजनं तु विशेषतः ॥ ५६ ॥

आहुतिरग्नौ समिदाद्याधानम्, स्नानमङ्गप्रक्षालनम्, श्राद्धं पितृकर्म, देवतार्चनं देवपूजा, दानं विश्राणनम्, न विहितमिति सर्वत्र नञो योगः, भोजनं तु विशेषतो न विहितमिति। ननु नक्तभोजनं श्रेयसे श्रूयते, न च रात्रिभोजनं विना तद्भवति? उच्यते—नक्तशब्दार्थापरिज्ञानादेवमुच्यते ॥ ५६ ॥ तदेवाह—

दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे।
नक्तं तद्धि विजानीयान्न नक्तं निशि भोजनम् ॥ ५७ ॥" [ ]

दिवसस्य दिनस्याष्टमे भागे पाश्चात्येऽर्द्धप्रहरे यद्भोजनं तन्नक्तमिति विजानीयात्। द्विविधा हि शब्दस्य प्रवृत्तिर्मुख्या गौणी च; तत्र क्वचिन्मुख्यया व्यवहारः क्वचिन्मुख्यार्थबाधायां सत्यां गौण्या; नक्तशब्दस्य रात्रिभोजनलक्षणमुख्यार्थबाधा,

१ ०मंगप्रक्षा०—मु. ॥ २ नक्तं तद्विजा०—सं. खं.। नक्तं तु तद्विजा०—मु. ॥

रात्रिभोजनस्य तत्र तत्र प्रतिषिद्धत्वादिति गौणार्थ एव नक्तशब्द इत्यसौ दिवसशेषभोजने वर्त्तते। तत्र निमित्तमुक्तं— मन्दीभूते दिवाकरे, मुख्यार्थप्रतिषेधाच्च न निशि भोजनं नक्तम् ॥ ५७ ॥

रात्रिभोजनप्रतिषेधमेव परकीयेण श्लोकद्वयेनाह—

"देवैस्तु भुक्तं पूर्वाह्णे मध्याह्ने ऋषिभिस्तथा।
अपराह्णे च पितृभिः सायाह्ने दैत्यदानवैः ॥ ५८ ॥

सन्ध्यायां यक्षरक्षोभिः सदा भुक्तं कुलोद्वह !।
सर्ववेलां व्यतिक्रम्य रात्रौ भुक्तमभोजनम् ॥ ५९ ॥" [ ]

पूर्वमह्नः पूर्वाह्णः, तस्मिन् देवैर्भुक्तम्। मध्यमह्नो मध्याह्नः, तस्मिन्नृषिभिर्भुक्तम्। अपरमह्नो अपराह्णः, तस्मिन् पितृभिर्भुक्तम्। सायमह्नः सायाह्नो विकालः, तस्मिन् दैत्यैर्दितिजैर्दानवैर्दनुजैर्भुक्तम्। सन्ध्या रजनीदिनयोः प्रवेशनिष्कांशौ[1], तस्यां यक्षैर्गुह्यकै रक्षोभी राक्षसैर्भुक्तम्। कुलोद्वहेति युधिष्ठिरस्यामन्त्रणम्। सर्वेषां देवादीनां वेला अवसरः, तां व्यतिक्रम्य रात्रौ भुक्तमभोजनमेव[2] ॥ ५८ ॥ ५९ ॥

१ ०ष्कासौ—खं. ॥ २ ०भोजनम् ॥ ५८ ॥ ५९ ॥ पर्व पुराणेन—मु. ॥

पुराणेन रात्रिभोजनप्रतिषेधस्य संवादमभिधायायुर्वेदेन संवादमाह—आयुर्वेदेऽप्युक्तमित्यनेन । आयुर्वेदस्तु—

हृन्नाभिपद्मसङ्कोचश्चण्डरोचिरपायतः ।
अतो नक्तं न भोक्तव्यं सूक्ष्मजीवादनादपि ॥ ६० ॥

इह शरीरे द्वे पद्मे—हृत्पद्मं च यदधोमुखं, नाभिपद्मं च यदूर्ध्वमुखम् । द्वयोरपि च पद्मयो रात्रौ सङ्कोचः, कुतः ? चण्डरोचिषः सूर्यास्यापायादस्तमयात्, अतो हृत्पद्मनाभिपद्मसङ्कोचाद्धेतोर्नक्तं रात्रौ न भोक्तव्यम् । सूक्ष्मजीवादनादपीति द्वितीयं निशाभोजनप्रतिषेधकारणम् । सूक्ष्मा ये जीवास्तेषामदनं भक्षणम्[2], तस्मादपि रात्रौ न भोक्तव्यम् ॥ ६० ॥

परपक्षसंवादमभिधाय स्वपक्षं समर्थयते—

संसजज्जीवसङ्घातं भुञ्जाना निशि भोजनम्[1] ।
राक्षसेभ्यो विशिष्यन्ते मूढात्मानः कथं नु ते ? ॥ ६१ ॥

संबध्यमानजीवसमूहं भोजनं भोज्यं भुञ्जाना निशि रात्रौ, राक्षसेभ्यः क्रव्यादेभ्यः, कथं नु कथं नाम, विशिष्यन्ते भिद्यन्ते ? राक्षसा एव ते इत्यर्थः । मूढात्मानो जडाः[3] । अपिच, लब्धे मानुषत्वे जिनधर्मपरिष्कृते विरतिरेव कर्तुमुचिता, विरतिहीनस्तु शृङ्ग-पुच्छहीनः पशुरेव ॥ ६१ ॥

---

१ निशि भोजन०—मु. ॥ २ भक्षणं करणं तस्मा०—खं. ॥ ३ जनाः—खं. ॥

॥ ४६१ ॥

एतदेवाह—

वासरे च रजन्यां च यः खादन्नेव तिष्ठति ।
शृङ्ग-पुच्छपरिभ्रष्टः स्पष्टं स पशुरेव हि ॥ ६२ ॥

स्पष्टम् ॥ ६२ ॥

रात्रिभोजननिवृत्तेभ्योऽपि सविशेषपुण्यवतो दर्शयति—

अह्नो मुखेऽवसाने च यो द्वे द्वे घटिके त्यजन्[1] ।
निशाभोजनदोषज्ञोऽश्नात्यसौ पुण्यभाजनम् ॥ ६३ ॥

अह्नो मुखे आरम्भे, अवसाने पश्चिमे भागे, द्वे द्वे घटिके मुहूर्त्तं मुहूर्त्तं रात्रेः प्रत्यासन्नं त्यजन् परिहरन्, योऽश्नाति स पुण्यभाजनम् । निशाभोजनदोषज्ञ इति, निशाभोजने सम्पातिमजन्तुसम्पातलक्षणा ये दोषास्तान् जानन् रात्रिप्रत्यासन्नमपि मुहूर्त्तं मुहूर्त्तं[2] सदोषत्वेन जानाति; अत एवागमे सर्वजघन्यं प्रत्याख्यानं मुहूर्त्तप्रमाणं नमस्कारसहितमुच्यते । पाश्चात्यमुहूर्त्तादप्यर्वाक् श्रावको भोजनं करोति, तदनन्तरं रात्रिभोजनं प्रत्याख्याति ॥ ६३ ॥

---

१ त्यजेत्—शां. ॥ २ मुहूर्त्तं सदोष॰—शां. ॥

ननु यो दिवैव भुङ्क्ते तस्य रात्रिभोजनप्रत्याख्याने फलं नास्ति, फलविशेषो वा कश्चिदुच्यतामित्याह—

अकृत्वा नियमं दोषाभोजनाद्दिनभोज्यपि ।
फलं भजेन्न निर्व्याजं न वृद्धिर्भाषितं विना ॥ ६४ ॥

नियमं निवृत्तिं, रात्रिभोजनादकृत्वा दिने भोक्तुं शीलमस्यासौ दिनभोजी सोऽपि निशाभोजनविरतेः फलं निर्व्याजं निश्छद्म, न भजेत् न लभेत। कुत इत्याह—न वृद्धिर्भाषितं विना, वृद्धिः कलान्तरं, भाषितं जल्पितं विना न स्यात्। लौकिकमेतद्, यथा भाषितमेव कलान्तरं भवेदिति ॥ ६४ ॥

पूर्वोक्तस्य विपर्ययमाह—

ये वासरं परित्यज्य रजन्यामेव भुञ्जते ।
ते परित्यज्य माणिक्यं काचमाददते जडाः ॥ ६५ ॥

दिवसं परित्यज्य तच्छीलतया रात्रावेव ये भुञ्जते; दृष्टान्तः स्पष्टः ॥ ६५ ॥

ननु नियमः सर्वत्र फलवान्, ततो यस्य 'रात्रावेव मया भोक्तव्यं, न दिवसे' इति नियमस्तस्य का गतिरित्याह—

वासरे सति ये श्रेयस्काम्यया निशि भुञ्जते ।
ते वपन्त्यूषरक्षेत्रे शालीन् सत्यपि पल्वले ॥ ६६ ॥

॥ ४६३ ॥

श्रेयोहेतौ वासरभोजने सत्यपि कुशास्त्रसंस्कारान्मोहाद्वा श्रेयस्काम्यया ये रात्रावेव भुञ्जते ते शालिवपनयोग्ये पल्वले सत्यपि ऊंषरक्षेत्रे शालीन् वपन्ति। यथा ह्यूंषरक्षेत्रे शालिवपनं निरर्थकं तथा रात्रावेव मया भोक्तव्यमिति निष्फलो नियमः। अधर्मनिवृत्तिरूपो हि नियमः फलवान्, अयं तु धर्मनिवृत्तिरूप इत्यफलो विपरीतफलो वा ॥ ६६ ॥

रात्रिभोजनस्य फलमाह—

उलूक-काक-मार्जार-गृध्र-शंबर-सूकराः।
अहि-वृश्चिक-गोधाश्च जायन्ते रात्रिभोजनात् ॥ ६७ ॥

रात्रिभोजनादुलूकादिषु जन्म भवति। उलूकादय उपलक्षणम्, तेनान्येष्वप्यधमतिर्यक्षु रात्रिभोजिनो जायन्ते ॥ ६७ ॥

वनमालोदाहरणेन रात्रिभोजनदोषस्य महत्तां दर्शयति—

श्रूयते ह्यन्यशपथाननादृत्यैव लक्ष्मणः।
निशाभोजनशपथं कारितो वनमालया ॥ ६८ ॥

---

१ ऊषरे क्षेत्रे—मु. ॥ २ ह्यूषरे—मु. ॥ ३ ०मार्जारा—शां. खं. ॥
४ संवरसूकराः—सं. खं. । "शं वृणोतीति शंवरः, अल्पो हरिणः" इति अभिधानचिन्तामणेः स्वोपज्ञवृत्तौ ४।३५९ ॥

श्रूयते रामायणे दशरथनन्दनो लक्ष्मणः पितृनिदेशात्[1] सह रामेण सीतया च दक्षिणापथे प्रस्थितोऽन्तरा कूर्वरनगरे[2] महीधरराजतनयां वनमालामुपयेमे; ततश्च रामेण सह परतो देशान्तरं यियासन् स्वभार्यां वनमालां प्रतिमोचयति स्म; सा तु तद्विरहकातरा पुनरागमनमसम्भावयन्ती लक्ष्मणं शपथानकारयत्, यथा—प्रिये! रामं मनीषिते देशे परिस्थाप्य यद्यहं भवतीं स्वदर्शनेन न प्रीणयामि, तदा प्राणातिपातादिपातकिनां गतिं यामीति; सा तु तैः शपथैरतुष्यन्ती 'यदि रात्रिभोजनकारिणां शपथं करोषि, तदा त्वां प्रतिमुञ्चामि, नान्यथा' इति तमुवाच; स तथेत्यभ्युपगत्य देशान्तरं प्रस्थितवान्। एवमन्यशपथाननादृत्य लक्ष्मणो वनमालया रात्रिभोजनशपथं कारितः। विशेषचरित तु ग्रन्थगौरवभयान्नेह लिख्यते ॥ ६८ ॥

शास्त्रं निदर्शनं च विना सकलजनानुभवसिद्धं रात्रिभोजनविरतेः फलमाह—

करोति विरतिं धन्यो यः सदा निशि भोजनात्।
सोऽर्द्धं पुरुषायुषस्य स्यादवश्यमुपोषितः ॥ ६९ ॥

यः कश्चिद्धर्मधनार्हो रात्रिभोजनस्य विरतिं करोति सोऽर्द्धं पुरुषायुषस्योपोषितः स्यात्। उपवासस्य चैकस्यापि निर्जराकारणत्वान्महाफलत्वम्, पञ्चाशद्वर्षसम्मितानां तूपवासानां कियत्फलं सम्भाव्यते? इदं च शतवर्षायुषः[3] पुरुषानधिकृत्योक्तम्। पूर्वकोटीजीविनस्तु प्रति तदर्द्धमुपवासानां न्यायसिद्धमेव ॥ ६९ ॥

---

१ ०निर्देशास्–खं.। ०निदेशात्–सं.। २ कूबरनगरे–मु. शां.। "ते क्रामन्तः प्रतिदिनं जानकीरामलक्ष्मणाः। त्यक्त्वारण्यानि विजयपुरं सन्ध्याक्षणे ययुः ॥ १६८ ॥.......पुरे च तस्मिन्नभवद् राजा नाम्ना महीधरः। इन्द्राणी नाम तत्पत्नी वनमालेति तत्सुता ॥ १७० ॥" इति त्रिषष्टिशलाकापुरुषचरित्रे सप्तमे पर्वणि पञ्चमे सर्गे ॥ ३ ०युषान्—खं. ॥

॥ ४६५ ॥

तदेवं रात्रिभोजनस्य भूयांसो दोषाः, तत्परिवर्जने तु ये गुणास्तान् वक्तुमस्माकमशक्तिरेवेत्याह—

रजनीभोजनत्यागे ये गुणाः परितोऽपि तान् ।
न सर्वज्ञादृते कश्चिदपरो वक्तुमीश्वरः ॥ ७० ॥

स्पष्टम् ॥ ७० ॥

अथ क्रमप्राप्तमामगोरससंपृक्तद्विदलादिभोजनप्रतिषेधमाह—

आमगोरससंपृक्तद्विदलादिषु जन्तवः ।
दृष्टाः केवलिभिः सूक्ष्मास्तस्मात्तानि विवर्जयेत् ॥ ७१ ॥

इह हीयं स्थितिः—केचिद्भावा हेतुगम्याः, केचित्त्वागमगम्याः, तत्र ये यथा हेत्वादिगम्यास्ते तथैव प्रवचनधरैः प्रतिपादनीयाः । आगमगम्येषु हेतुन्, हेतुगम्येषु त्वागममात्रं प्रतिपादयन्नाज्ञाविराधकः स्यात् । यदाह—

"जो हेउवायपक्खम्मि हेउओ आगमे यं आगमिओ ।
सो ससमयपन्नवओ सिद्धंतविराहओ अन्नो ॥ १ ॥" [ सन्मति० १४२ ] इति ।

आमगोरससपृक्तद्विदलादौ न हेतुगम्यो जीवसद्भावः, किन्त्वागमगम्य एव । तथाहि—आमगोरससंपृक्ते द्विदले,

१ अ-सं. खं. । यो हेतुवादपक्षे हेतुक आगमे च आगमिकः । स स्वसमयप्रज्ञापकः सिद्धान्तविराधकोऽन्यः ॥

आदिशब्दात् पुष्पितौदने, अहर्द्वितयातीते दध्नि, कुथितान्ने च, ये जन्तवस्ते केवलज्ञानिभिर्दृष्टा इति जन्तुमिश्रामगोरस-मिश्रद्विदलादिभोजनं वर्जयेत्। तद्भोजनाद्धि प्राणातिपातलक्षणो दोषः। न च केवलिनां निर्दोषत्वेनाऽऽप्तानां वचनानि विपरियन्ति[1] ॥ ७१ ॥

अपिच, न मद्यादीनि कुथितान्नपर्यवसानान्येवाभोज्यानि, किन्त्वन्यान्यपि जीवसंसक्तिर्बहुला[2]न्यागमादुपलभ्य वर्जनीयानीत्याह—

जन्तुमिश्रं फलं पुष्पं पत्रं चान्यदपि त्यजेत् ।
सन्धानमपि संसक्तं जिनधर्मपरायणः ॥ ७२ ॥

जन्तुभिर्मिश्रं फलं मधूक-बिल्वादेः, पुष्पमरणि-शिग्रु-मधूकादेः, पत्रं प्रावृषि तण्डुलीयकादेः, अन्यदपि मूलादि त्यजेत्। सन्धानमाम्रफलादीनां यदि संसक्तं भवेत् तदा जिनधर्मपरायणः कृपालुत्वात्त्यजेदिति संबन्धः॥ [3]इदं भोजनतो भोगोपभोगयोर्व्रतमुक्तम्; भोगोपभोगकारणं धनोपार्जनमपि भोगोपभोग उच्यते उपचारात्। तत्परिमाणमपि भोगोपभोगव्रतम्, यथा श्रावकस्य खरकर्मपरिहारेण कर्मान्तरेण जीविका। एतच्च सङ्क्षेपार्थमतिचारप्रकरण एव वक्ष्यति[4]। अवसितं भोगोपभोगव्रतम् ॥ ७२ ॥

---

१ विपर्ज(र्य)यन्ति—खं. ॥ २ ०बहुला०शां. ॥ ३ इदं च भोजनतो—मु. ॥ ४ वक्ष्यति—मु. ॥

॥ ४६७ ॥

अथानर्थदण्डस्य तृतीयगुणव्रतस्यावसरः, तच्चतुर्द्धेति श्लोकद्वयेनाह—

आर्त्तं रौद्रमपध्यानं पापकर्मोपदेशिता ।
हिंसोपकारिदानं च प्रमादाचरणं तथा ॥ ७३ ॥

शरीराद्यर्थदण्डस्य प्रातिपक्षतया स्थितः ।
योऽनर्थदण्डस्तत्त्यागस्तृतीयं तु गुणव्रतम् ७४ ॥

अपकृष्टं ध्यानमपध्यानम्, तदनर्थदण्डस्य प्रथमो भेदः । तच्च द्वेधा—आर्त्तं रौद्रं च, तत्र ऋतं दुःखम्, तत्र भवमार्त्तम्, यदि वा अर्त्तिः पीडा याचनं च, तत्र भवमार्त्तम् । तच्चतुर्द्धा—अमनोज्ञानां शब्दादीनां संप्रयोगे तद्विप्रयोगचिन्तनमसंप्रयोगप्रार्थना च प्रथमम् । शूलादिरोगसम्भवे च तद्वियोगप्रणिधानं तदसंप्रयोगचिन्ता च द्वितीयम् । इष्टानां च शब्दादीनां विषयाणां सातवेदनायाश्चावियोगाध्यवसानं संयोगाभिलाषश्च[2] तृतीयम् । देवेन्द्र-चक्रवर्त्यादिभवप्रार्थनारूपं निदानं चतुर्थम् । यदाहुः—

१ यातनं च—मु.॥"३०१ अर्द गतियाचनयोः ।......। अविदूरेऽभेः [ सि० ४।१।६५] अभ्यर्णे सेने, अविदूरादन्यत्र अभ्यर्दितश्चौरः पीडित इत्यर्थः । अत एव याचनस्थाने यातनेत्येके पठन्ति। अर्दितः खेदित इत्यर्थः ।" इति हैमे धातुपरायणे भ्वादिगणे ॥
२ संप्रयोगा०—मु. ॥

"अमणुण्णाणं सद्दाइविसयवत्थूण दोसमइलस्स । धणिअं विओयचिंतणमसंपओगाणुसरणं च ॥ १ ॥
तह सूलसीसरोगाइवेयणाए विओयपणिहाणं । तदसंपओगचिंता तप्पडियाराउलमणस्स ॥ २ ॥
इट्ठाणं विसयाईण वेयणाए अ रागरत्तस्स । अविओगज्झवसाणं तह संयोगाभिलासो य ॥ ३ ॥
देविंद-चक्कवट्टित्तणाइगुणरिद्धिपत्थणामइयं । अहमं नियाणचिंतणमण्णाणाणुगयमच्चंतं ॥ ४ ॥
एयं चउव्विहं रागदोसमोहंकियस्स जीवस्स । अट्टं झाणं संसारवद्धणं तिरियगइमूलं ॥ ५ ॥"

[ ध्यानशतक ६–१० ]

रोदयत्यपरानिति रुद्रो दुःखहेतुः, तेन कृतं तस्य वा कर्म रौद्रम् । तच्चतुर्द्धा—हिंसानुबन्धि मृषानुबन्धि स्तेयानुबन्धि धनसंरक्षणानुबन्धि च । यदाहुः—

अमनोज्ञानां शब्दादिविषयवस्तूनां द्वेषमलिनस्य । अत्यर्थं वियोगचिन्तनमसम्प्रयोगानुस्सरणं च ॥ तथा शूल-शीर्षरोगादि-वेदनाया वियोगप्रणिधानम् । तदसम्प्रयोगचिन्ता तत्प्रतीकाराकुलमनसः ॥ इष्टानां विषयादीनां वेदनायाश्च रागरक्तस्य । अवियोगाध्यवसानं तथा संयोगाभिलाषश्च ॥ देवेन्द्र-चक्रवर्तित्वादिगुणर्द्धिप्रार्थनामयम् । अधमं निदानचिन्तनमज्ञानानुगत-मत्यन्तम् ॥ एतच्चतुर्विधं रागद्वेषमोहाङ्कितस्य जीवस्य । आर्तं ध्यानं संसारवर्धनं तिर्यग्गतिमूलम् ॥

१ धणियं—सं. ॥ २ विओअ–मु. ॥ ३ वेयणाइ–सं. ॥ ४ विओअ०–मु. ॥ ५ ०पयोग० –खं. ॥ ६ य—सं. ॥ ७ संजोगा०–मु. ॥ ८ अ–मु. ॥ ९ ०मच्चत्थं–सं. खं. ॥

" संतवह-वेह-बंधण-दहणंकण-मारणाइपणिहाणं । अइकोह-ग्गहघत्थं निग्घिणमणसोऽहमविवागं ॥ १ ॥
पिसुणासब्भासब्भूयघायाइवयणपणिहाणं । मायाविणोऽइसंधणपरस्स पच्छन्नपावस्स ॥ २ ॥
तह तिव्वकोहलोहाउलस्स भूओवघायणमणज्जं । परदव्वहरणचित्तं परलोगावायनिरवेक्खं ॥ ३ ॥
सद्दाइविसयसाहणधणसंरक्खणपरायणमणिट्ठं । सव्वाभिसंकणपरोवघायकलुसाउलं चित्तं ॥ ४ ॥
एयं चउव्विहं रागदोसमोहंकियस्स जीवस्स । रोद्दं झाणं संसारवद्धणं निरयगइमूलं ॥ ५ ॥"

[ ध्यानशतक १८–२४ ]

एवमार्त्तरौद्रध्यानात्मकमपध्यानमनर्थदण्डस्य प्रथमो भेदः । पापकर्मोपदेशिता वक्ष्यमाणा द्वितीयः । हिंसोपकारिणां शस्त्रादीनां दानमिति तृतीयः । प्रमादानां गीत-नृत्तादीनामाचरणं चतुर्थः । शरीरादिनिमित्तं यः प्राणिनां दण्डः सोऽर्थाय प्रयोजनाय दण्डोऽर्थदण्डः, तस्य शरीराद्यर्थदण्डस्य यः प्रतिपक्षरूपोऽनर्थदण्डो निष्प्रयोजनो दण्ड इति यावत्, तस्य त्यागोऽनर्थदण्डविरतिस्तृतीयं गुणव्रतम् । यदाह—

१ सत्त्ववध-वेध-बन्धन-दहना-ऽङ्कन-मारणादिप्रणिधानम् । अतिक्रोध-ग्रहग्रस्तं निर्घृणमनसोऽधमविपाकम् ॥ पिशुना-ऽसभ्या-ऽसद्भूत-भूतघातादिवचनप्रणिधानम् । मायाविनोऽतिसन्धानपरस्य प्रच्छन्नपापस्य ॥ तथा तीव्रक्रोध-लोभाकुलस्य भूतोपघातनमनार्यम् । परद्रव्यहरणचित्तं परलोकापायनिरपेक्षम् ॥ शब्दादिविषयसाधनधनसंरक्षणपरायणमनिष्टम् । सर्वाभिशङ्कनपरोपघातकलुषाकुलं चित्तम् ॥ एतच्चतुर्विधं राग-द्वेषमोहाङ्कितस्य जीवस्य । रौद्रं ध्यानं संसारवर्धनं निरयगतिमूलम् ॥

२ ०परिहाणं–खं. ॥ ३ ०किअस्स–खं. ॥ ४ ०वद्धणं–खं. ॥

"जं इंदिय-सयणाई पडुच्च पावं करेज्ज सो होइ।
अत्थे दंडो एत्तो अन्नो उ अणत्थदंडो उ ॥ १ ॥" [ ] ॥ ७३ ॥ ७४ ॥

अपध्यानस्य स्वरूपं परिमाणं चाह—

वैरिघातो नरेन्द्रत्वं पुरघाता–ऽग्निदीपने ।
खचरत्वाद्यपध्यानं मुहूर्त्तात् परतस्त्यजेत् ॥ ७५ ॥

वैरिघात-पुरघाता-ऽग्निदीपनादिविषयं रौद्रध्यानमपध्यानम्। नरेन्द्रत्वं खचरत्वम्, आदिशब्दादप्सरो-विद्याधरीपरिभोगादि, तेष्वार्त्तध्यानरूपमपध्यानं तस्य, तत्परिमाणरूपं व्रतं – मुहूर्त्तात् परतस्त्यजेदिति ॥ ७५ ॥

अथ पापोपदेशस्वरूपं तद्विरतिं चाह—

वृषभान् दमय क्षेत्रं कृषषण्ढय वाजिनः ।
दाक्षिण्याविषये पापोपदेशोऽयं न कल्पते ॥ ७६ ॥

वृषभान् वत्सतरान् प्रासङ्गादिना दमय दान्तान् कुरु, प्रत्यासीदति खलु वर्षाकालः। तथा क्षेत्रं बीजावापभुवं कृष,

१ यदिन्द्रिय–शयनादि प्रतीत्य पापं कुर्यात् स भवति। अर्थे दण्डः, इतोऽन्यस्तु अनर्थदण्डस्तु ॥ २ तस्य–नास्ति शां. ॥
३ प्रस०—मु. ॥

वृष्टः खलु मेघः, यास्यति वापकालः, भृता वा केदारा गांह्यन्तां, सार्द्धदिनत्रयमध्ये उप्यन्तां च व्रीहयः, तथा नेदीयोऽश्वैः प्रयोजनं राज्ञामिति षण्ढय वर्द्धितकान् कुरु वाजिनोऽश्वान्। उपलक्षणं चैतदन्येषां ग्रीष्मे दवाग्निदानादीनाम्। अयं पापरूप उपदेशः श्रावकाणां न कल्पते न युज्यते। सर्व्वत्र पापोपदेशनियमं कर्तुमशक्तेभ्योऽपवादोऽयमुच्यते—दाक्षिण्याविषय इति। बन्धु-पुत्रादिविषयदाक्षिण्यवतः पापोपदेशोऽशक्यपरिहारः। दाक्षिण्याभावे तु यथा तथा मौखर्येण पापोपदेशो न कल्पते ॥ ७६ ॥

अथ हिंसोपकारीणि तद्दानपरिहारं चाह—

यन्त्र-लाङ्गल-शस्त्रा-ऽग्नि-मुशलोदूखलादिकम्।
दाक्षिण्याविषये हिंस्रं नार्पयेत्करुणापरः ॥ ७७ ॥

यन्त्रं शकटादि, लाङ्गलं हलम्, शस्त्रं खड्गादि, अग्निर्वह्निः, मुशलमयोऽग्रम्, उदूखलमुलूखलम्, आदिशब्दाद्धनुर्भस्त्रादिपरिग्रहः। हिंस्रं वस्तु करुणापरः श्रावको नार्पयेत्; दाक्षिण्याविषय इति पूर्ववत् ॥ ७७ ॥

अथ प्रमादाचरणमनर्थदण्डस्य चतुर्थभेदं तत्परिहारं च श्लोकत्रयेणाह—

कुतूहलाद् गीत-नृत्त-नाटकादिनिरीक्षणम्।
कामशास्त्रप्रसक्तिश्च द्यूत-मद्यादिसेवनम् ॥ ७८ ॥

---

१ ग्राह्यन्तां-खं. ॥

जलक्रीडा-ऽन्दोलनादिविनोदो जन्तुयोधनम् ।
रिपोः सुतादिना वैरं भक्त-स्त्री-देश-राट्[1]कथा ॥ ७९ ॥
रोग-मार्गश्रमौ मुक्त्वा स्वापश्च सकलां निशाम् ।
एवमादि परिहरेत् प्रमादाचरणं सुधीः ॥ ८० ॥

कुतूहलात् कौतुकाद्धेतोर्गीतस्य नृत्तस्य नाटकस्य आदिशब्दात् प्रकरणादेर्निरीक्षणं तेन तेनेन्द्रियेण यथोचितं विषयीकरणम् । कुतूहलग्रहणाज्जिनयात्रादौ प्रासङ्गिकनिरीक्षणे च न प्रमादाचरणम् । तथा कामशास्त्रे वात्स्यायनादिकृते प्रसक्तिः पुनः पुनः परिशीलनम् । तथा द्यूत[2]मक्षादिभिः क्रीडनम्, मद्यं सुरा, आदिशब्दान्मृगयादि, तेषां सेवन परिशीलनम् । तथा जलक्रीडा तडाग-जलयन्त्रादिषु मज्जनोन्मज्जन-शृङ्गिकाच्छोटनादिरूपा । तथा [3]अन्दोलनं वृक्षशाखादौ दोलाखेलनम्, आदिशब्दात् पुष्पावचयादि । तथा जन्तूनां कुक्कुटादीनां योधनं परस्परेणा[4]भ्याघातनम् । तथा रिपोः शत्रोः सम्बन्धिना पुत्र-पौत्रादिना वैरम्, अयमर्थः-येन तावत् कथञ्चिदायातं वैरं तद्यः परिहर्तुं न शक्नोति तस्यापि पुत्र-पौत्रादिना यद्वैरं तत् प्रमादाचरणम् । तथा भक्तकथा, यथा 'इदं चेदं च मांसपाक-माष-मोदकादि साधु भोज्यम्, साध्वनेन भुज्यते, अहमपि वा इदं भोक्ष्ये' इत्यादिरूपा । तथा स्त्रीकथा, स्त्रीणां नेपथ्या-ऽङ्गहार-हाव-भावादिवर्णनरूपा " कर्णाटी सुरतोपचारचतुरा लाटी विदग्धप्रिया " [ ]

१ कथाः-मु. ॥ २ ०मक्षकादिभिः—मु. ॥ ०मक्षिकादिभिः—खं. ॥ ३ आन्दोलनं—मु. ॥
" १२६ दुलण् उत्क्षेपे । दोलयति । ···· अन्दोलयतीति तु रूढेः " इति हैमधातुपारायणे ॥ ४ ०भ्याहननं—मु. ॥

॥ ४७३ ॥

इत्यादिरूपा वा। तथा देशकथा, यथा 'दक्षिणापथः प्रचुरान्नपानः स्त्रीसम्भोगप्रधानः; पूर्वदेशो विचित्रवस्त्र-गुड-खण्ड-शालि-मद्यादिप्रधानः; उत्तरापथे शूराः पुरुषाः, जविनो वाजिनः, गोधूमप्रधानानि धान्यानि, सुलभं कुङ्कुमं, मधुराणि द्राक्षा-दाडिम-कपित्थादीनि; पश्चिमदेशे सुखस्पर्शानि वस्त्राणि, सुलभा इक्षवः, शीतं वारि' इत्येवमादि। राट्कथा राजकथा, यथा 'शूरोऽस्मदीयो राजा, सधनश्चौडः, गजपतिर्गौडः, अश्वपतिस्तुरुष्कः' इत्यादि। एवं प्रतिकूला अपि भक्तादिकथा वाच्याः। तथा रोगो ज्वरादिः, मार्गश्रमो मार्गखेदः, तौ मुक्त्वा सकलां निशां स्वापो निद्रा। रोग-मार्गश्रमयोस्तु न प्रमादाचरणम्। एवमादि पूर्वोक्तस्वरूपं प्रमादाचरणं परिहरेत्। सुधीः श्रमणोपासकः। प्रमादाचरितं च–

"मंज्ज विसयकसाया निद्दा विगहा य पंचमी भणिया।
एए पंच पमाया जीवं पाडेंति संसारे ॥ १ ॥" [उत्तराध्ययननिर्युक्ति १८० ]

इति पञ्चविधस्य प्रमादस्य प्रपञ्चः ॥ ७८ ॥ ७९ ॥ ८० ॥

देशविशेषे प्रमादपरिहारमाह—

विलास-हास-निष्ठ्यूतं-निद्रा-कलह-दुष्कथाः।
जिनेन्द्रभवनस्यान्तराहारं च चतुर्विधम् ॥ ८१ ॥

१ मद्यं विषय-कषाया निद्रा विकथा च पञ्चमी भणिता। एते पञ्च प्रमादा जीवं पातयन्ति संसारे॥ २ ०तं निद्रा०-खं. ॥

जिनेन्द्रभवनस्यान्तरित्यादित आरभ्य संबध्यते; तेन जिनेन्द्रभवनस्य मध्ये विलासं कामचेष्टाम्, हासं कहकहध्वानं हसनम्, निष्ठ्यूतं निष्ठीवनम्, निद्रां स्वापम्, कलहं राटीम्, दुष्कथां चौर-पारदारिकादिकथाम्, चतुर्विधं चाहारम् अशन-पान-खाद्य-स्वाद्यरूपं परिहरेत्। परिहरेदिति पूर्वतः सम्बन्धनीयम्। तत्राशनं शाल्यादि मुद्गादि सत्त्वादि पेयादि मोदकादि क्षीरादि सूरणादि मण्डकादि च। यदाह—

"असणं[2] ओयण-सत्तुग-मुग्ग-जगारादि[3] खज्जगविही य। खीराइ सूरणाइ मंडगपभिई अ विण्णेयं[4]॥१॥" [पञ्चाशक ५।२७]

पानं सौवीरं यवादिधावनं सुरादि सर्वश्चाप्कायः कर्कटकजलादिक[5] च। यदाह—

"पाणं[6] सोवीर-जवोदगाइ चित्तं सुराइयं चेव। आउक्काओ सव्वो कक्कडगजलाइयं[7] च तहा॥१॥" [पञ्चाशक ५।२८]

खाद्यं भृष्टधान्यं[8] गुलपर्पटिका-खर्जूर-नालिकेर-द्राक्षा-कर्कट्याम्र-पनसादि। यदाह—

---

१ ०द्यस्वरूपं-मु.॥ २ असणं ओअण० मु.। "ओदन-सक्तुक-मुद्ग-जगार्यादि अशनं भवति, विज्ञेयमिति योगः। इह 'जगारी' शब्दः समयसिद्धः, ओदनादयस्तु लोकरुढाः। आदिशब्दात् क्षैरेयी-करम्बकादिग्रहः। खाद्यकविधिश्च अशोकवृत्तिमोदकादिलक्षणो भोजनप्रकारः। तथा क्षीरादि ......सूरणादि ...... मण्डकप्रभृति च मण्डका-ऽपूप-पोलिकादि च विज्ञेयम्।" इति अभयदेवसूरिविरचितायां पञ्चाशकवृत्तौ पृ. १००॥ ३ ०जगाराइ—मु॥ ४ विण्णेअं-मु.॥ ५ कर्कटजला०—सं.॥ ६. "पानं . सौवीर-यवोदकादि। सौवीरं काञ्जिकं, यवोदकं यवधावनजलम्।......चित्रं बहुविधं......सुरादिकं चैव.....। अप्कायः शस्त्रानुपहतोदकम्, सर्वः समस्तः......तथा......कर्कटकजलादिकं कर्कटाख्यफलविशेषरसमिश्रोदकादिकम्......च-शब्दः समुच्चये। पानमिति वर्तते।" इति अभयदेवसूरिविरचितायां पञ्चाशकवृत्तौ पृ. १०१॥ ७ ०जलाइगं-खं. सं.॥ ८ सृष्ट०-खं.॥

"[1]भत्तोसं दंताई खज्जूरं [2]नालिकेर-[3]दक्खाई। [4]कक्कडि-अंबग-फणसाइ बहुविहं खाइमं णेयं ॥१॥" [पञ्चाशक ५।२९]

स्वाद्यं दन्तकाष्ठं [5]ताम्बूलं तुलसिका-पिण्डार्जक-मधु-पिप्पली-सुण्ठी-मरिच-जीरक-हरीतकी-बिभीतक्यामलक्यादि। यदाह—

"[6]दंतवणं तबोलं चित्तं तुलसीकुहेडगाई[7] य। महु-पिप्पलि[8]-सुंठाई अणेगहा साइमं होइ ॥१॥" [पञ्चाशक ५।३०] ८१॥

उक्तानि त्रीणि गुणव्रतानि। अथ चत्वारि शिक्षाव्रतान्युच्यन्ते, तत्रापि सामायिक-देशावकाशिक-पौषधोपवासा[9]-ऽतिथिसंविभागलक्षणेषु चतुर्षु शिक्षाव्रतेषु प्रथमं सामायिकाख्यं शिक्षाव्रतमाह—

**त्यक्तार्त्त-रौद्रध्यानस्य त्यक्तसावद्यकर्मणः।**
**मुहूर्त्तं समता या तां विदुः सामायिकव्रतम् ॥ ८२ ॥**

---

१ "भक्त च तद् भोजनम् ओसं च दाह्यम् भक्तौषम्, रूढितः परिभृष्टचनक-गोधूमादि। दन्तादि गुडसंस्कृतदन्तपवनादि देशविशेषप्रसिद्धम्। खर्जूरं प्रसिद्धं। नालिकेर-द्राक्षादि प्रतीतमेव।"""" "कर्कटका-ऽऽम्रक-पनसादि प्रसिद्धम्। बहुविधं बहुप्रकारं खादनेन खादनाय निर्वृत्तं खादिमं ज्ञेयम्" इति अभयदेवसूरिविरचितायां पञ्चाशकवृत्तौ पृ. १०१ ॥

२ नालिएर०–मु. ॥ ३ दक्खाइं–खं. सं. ॥ ४ कक्कडिगंबग०–सं. विना ॥ ५ ताम्बूलतुलसिका०–मु. ॥ ६ "दन्ताः पूयन्तेऽनेनेति दन्तपवनं दशननिर्लेपनकाष्ठं यष्टीमध्वादि। ताम्बूलं प्रतीतम्, तच्च चित्रं बहुप्रकारम्""""। तुलसीका सुरसा, कुहेडकः पिण्डार्यकः, ... मधु माक्षिकं, पिप्पली कृष्णा, सुंठ्यादि नागरप्रभृति""इत्येवमनेकधा स्वादनेन स्वादनाय निर्वृत्तं स्वादिमं भवति" इति अभयदेवसूरिविरचितायां पञ्चाशकवृत्तौ पृ. १०१ ॥ ७ ०गाईयं–खं. विना ॥ ८ ०पिंपली०–सं. खं. ॥ ९ पोषधो०–खं. ॥

मुहूर्त्तं मुहूर्त्तकालं या समता रागद्वेषहेतुषु मध्यस्थता तां सामयिकव्रतं विदुः। समस्य राग-द्वेषविमुक्तस्य सतः आयो ज्ञानादीनां लाभः प्रशमसुखरूपः समायः। समाय एव सामायिकम्, विनयादित्वादिकण्। समायः प्रयोजनमस्येति वा सामायिकम्। तच्च सामायिकं मनोवाक्कायचेष्टापरिहारं विना न भवतीति त्यक्तार्त्तरौद्रध्यानस्येत्युक्त त्यक्तसावद्यकर्मण इति च; त्यक्तं सावद्यं वाचिकं कायिकं च कर्म येन तस्य। सामायिकस्थश्च श्रावकः गृहस्थोऽपि यतिरिव भवति। यदाह—

"सामाइयम्मि[2] उ कए समणो इव सावओ हवइ जम्हा।
एएण कारणेणं बहुसो सामाइय कुज्जा ॥ १ ॥" [आव० नि० ८०१ वि० भा० २६९०]

अत एव तस्य देवस्नात्रपूजनादौ[3] नाधिकारः। नन्वगर्हितं कर्म कुर्वाणस्य देवस्नात्रादौ को दोषः, सामायिकं हि सावद्यव्यापारनिषेधात्मक निरवद्यव्यापारविधानात्मकं च, तत् स्वाध्याय-पठन-परिवर्त्तनादिवत् देवपूजादौ को दोषः? नैवम्, यतेरिव देवस्नात्रपूजनादौ नाधिकारः। भावस्तवार्थं च द्रव्यस्तवोपादानम्; सामायिके च सति संप्राप्तो भावस्तव इति किं द्रव्यस्तवकरणेन?। यदाह—

"दव्वत्थओ[4] य[5] भावत्थओ य दव्वथओ बहुगुणो त्ति बुद्धि सिया।
अणिउणजणवयणमिणं छज्जीवहियं जिणा बिंति ॥ १ ॥" [आवश्यकभाष्य गा० १९४] इति।

---

१ ०विनिर्मुक्तस्य-मु.॥ २ सामायिके वृत्ते श्रमण इव श्रावको भवति यस्मात्। एतेन कारणेन बहुशः सामयिकं कुर्यात्॥ ३ ०पूजादौ-मु.॥ ४ द्रव्यस्तवश्च भावस्तवश्च द्रव्यस्तवो बहुगुण इति बुद्धिः स्यात्। अनिपुणजनवचनमिदं षड्जीवहितं जिना ब्रुवन्ति॥ ५ अ-खं. सं.॥

इह श्रावकः सामायिककर्त्ता द्विविधो भवति—ऋद्धिमाननृद्धिकश्च योऽसावनृद्धिकः स चतुर्षु स्थानेषु सामायिकं

१ " सामातियं नाम सावज्जजोगपरिवज्जणं णिरवज्जजोगपरिसेवणं च। तं सावएण कहं कायव्वं? सो दुविहो इड्ढिपत्तो अणड्ढिपत्तो य। जो सो अणिड्ढिपत्तो सो चेइयघरे वा साधुसमीवे वा घरे वा पोसहसालाए वा जत्थ वा वीसमति अच्छति वा णिव्वावारो सव्वत्थ करेति सव्वं (तत्थ–हा०), चउसु ठाणेसु वा (वा–नास्ति हा०) णियमा कायव्वं, तंजहा–चेतियघरे साहुमूले पोसहसालाए वा घरे वा आवासं करेंतो त्ति, तत्थ जदि साहुसगासे करेति तत्थ का विही?, जदि पारं (परं–हा०) परभयं णत्थि जइवि य केणइ समं विवादो णत्थि जदि कस्सति ण धरेति मा तेण अंछवियंछियं कड्ढिज्जति (कज्जिहिति–हा०), जदि धारणगं दट्ठूण ण गिण्हति मा पडिभज्जिहि, जति य वावारं ण वावारेति ताहे घरे चेव सामातियं काऊण, ⊞ उवाहणातो मोत्तूणं सच्चित्तदव्वविरहितो ⊞ वच्चति, पंचसमिओ तिगुत्तो इरियाए उवउत्तो जहा साहू भासाए सावज्जं परिहरंतो, एसणाए कट्ठं लेट्ठुं वा पडिलेहित्तु पमज्जित्तु, एवं आदाणणिक्खेवणे. खेलसिंघाणे ण विगिंचति, विगिंचिन्तो वा पडिलेहिय पमज्जिय थंडिले, जत्थ चिट्ठति तत्थ गुत्तिणिरोधं करेति, एताए विहीए गंता (गत्ता–हा०) तिविहेण णमिऊण साधुणो पच्छा साधुसक्खियं सामातियं करेति–करेमि भंते। सामाइयं० दुविहं तिविहेणं जाव साहू पज्जुवासामिति काऊणं, ⊞ जइ चेतियाइं अत्थि तो पढमं वंदति, साहूणं सगासातो रयहरणं निसेज्जं वा मग्गति, अह घरे तो से ओग्गहितं रयहरणं अत्थि, तस्स असति पोत्तस्स अंतेणं ⊞, पच्छा–इरियावहियाए पडिक्कमइ, पच्छा आलोइत्ता वंदइ आयरियादी जहारायणियाए, पुणोवि गुरुं वंदित्ता पडिलेहेत्ता णिविट्ठो पुच्छइ पढइ वा, एवं चेइएसु वि, असइ साहूचेइयाणं पोसहसालाए सगिहे वा, एवं सामाइयं वा आवस्सयं वा करेइ तत्थ, नवरि गमणं नत्थि, भणइ–जाव णियमं समाणेमि। जो इड्ढिपत्तो सो किर एंतो सव्विड्ढीए एइ तो जणस्स अत्था होति, आढिता य साहुणो सप्पुरिसपरिग्गहेणं, जति सो कयसामातितो एति ताए आस-हत्थिमादि [णा–हा०] जणेण य अहिगरणं पवट्टति ताहे ण करेति, कयसामातिएण य पाएहिं आगंतव्वं तेण ण करेति, आगतो साहुसमीवे करेति, जदि सो सावतो, ण कोति उट्ठेति, अह अहाभद्दउ त्ति पूया कया होहि त्ति भणति ताहे पुव्वरतियं आसणं कीरति, आयरिया उट्ठिता अच्छंति, तत्थ उट्ठंतमणुट्ठंते दोसा भासियव्वा

करोति—जिनगृहे, साधुसमीपे, पोषध[1]शालायाम्, स्वगृहे वा, यत्र वा विश्राम्यति निर्व्यापरो वा आस्ते तत्र च। तत्र यदा साधुसमीपे करोति तदायं विधिः—यदि कस्माच्चिदपि भयं नास्ति, केनचिद्विवादो नास्ति, ऋणं वा न धारयति, मा भूत् तत्कृताकर्षणापकर्षणनिमित्तश्चित्तसंक्लेशः, तदा स्वगृहेऽपि सामायिकं कृत्वा ईर्यां शोधयन्, सावद्यां भाषां परिहरन्, काष्ठलेष्ट्वादिना यदि कार्यं तदा तत्स्वामिनमनुज्ञाप्य प्रतिलिख्य प्रमार्ज्य च गृह्णन्, खेल-सिङ्घाणकादींश्चाविवेचयन् विवेचयंश्च स्थण्डिलं प्रत्युपेक्ष्य[2] प्रमृज्य च, एवं पञ्चसमितिसमितस्त्रिगुप्तिगुप्तः साध्वाश्रयं गत्वा साधून्नमस्कृत्य सामायिकं करोति यथा—

करेमि भंते! सामाइयं सावज्जं जोगं पच्चक्खामि जाव साहू पज्जुवासामि, दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भंते पडिमक्कामि निंदामि गरिहामि अप्पाणं वोसिरामि।

सामायिकसूत्रस्यायमर्थः—करेमि अभ्युपगच्छामि, भंते इति गुरोरामन्त्रणम्, हे भदन्त! भन्दते सुखवान् कल्याणवांश्च भवति; "भदुङ् सुखकल्याणयोः[3]" [ धा. पा. ७२२ ], अस्य औणादिकान्तप्रत्ययान्तस्य निपातनात् रूपम्। आमन्त्रणं च

१ पौषध०—मु.॥ २ प्रत्यपेक्ष्य-शां. खं.॥ ३ भदते-सं.। भदन्ते-जैमु.॥ "उदित्त्वाद् ने भन्दते।" इति हैमे धातुपारायणे। "सीमन्त-हेमन्त-भदन्त-दुष्यन्तादयः॥ २२२॥" इति हैमे उणादिसूत्रे॥

पच्छा सो इड्ढिपत्तो सामातिय काऊण पडिक्कतो वंदित्ता पुच्छति, सो य किर सामातियं करेंतो मउडं ण अवणेति, कुंडलाणि णाममुद्दं पुप्फतंबोलपावारगमादि वोसिरति, अण्णे भणंति-मउडंपि अवणेइ, एसा विधी सामातियस्स" इति आवश्यकसूत्रस्य प्रत्याख्यानाध्ययनचूर्णौ पृ० २९९-३००। अयमेव विधिः आवश्यकसूत्रस्य हरिभद्रसूरिविरचितायां वृत्तौ [ पृ० ८३२ ] अपि क्वचित् किञ्चिच्छब्दभेदेन वर्णितोऽस्ति। ▦ ▦ एतादृशचिह्नान्तर्गतः पाठो हारिभद्र्यां वृत्तौ नास्ति, ये तु विशिष्टाः पाठभेदास्ते हा० इति संकेतेन ( ) एतादृशे [ ] एतादृशे वा कोष्ठके निवेशिताः॥

॥ ४७९ ॥

प्रत्यक्षस्य गुरोस्तदभावे परोक्षस्यापि बुद्धया प्रत्यक्षीकृतस्य भवति; यथा जिनानामभावे जिनप्रतिमाया आरोपितजिनत्वायाः स्तुति-पूजा-सम्बोधनादिकं भवति। गुरोश्चाभिमुखीकरणं 'तदायत्तः सर्वो धर्मः' इति प्रदर्शनार्थम्। यदाह—

[1]नाणस्स होइ भागी थिरयरओ दंसणे चरित्ते य।
धन्ना आवकहाए गुरुकुलवासं न मुचंति ॥ १ ॥ [वि० भा० ३४५९]

अथवा भवान्तहेतुत्वाद्भवान्तः, भंते इत्यार्षत्वात् मध्यमव्यञ्जनलोपे रूपं, भंते इति "अत एत्सौ पुंसि मागध्याम्" [सि० ८।४।२८७] इत्येकारोऽर्द्धमागधत्वादार्षस्य। सामायिकमुक्तनिर्वचनम्। [2]अवद्यं पापम्, सहावद्येन सावद्यः, युज्यते इति योगो व्यापारस्तं प्रत्याख्यामि; प्रतीति प्रतिषेधे, आङाभिमुख्ये, 'ख्यांक् [3]प्रकथने' [धा. पा. १०७१], ततश्च प्रतीपमभिमुखं [4]ख्यापनं सावद्ययोगस्य करोमीत्यर्थः। अथवा पच्चक्खामीति प्रत्याचक्षे, "चक्षिक् व्यक्तायां वाचि" [है० धा. ११२२] इत्यस्य प्रत्याङ्पूर्वस्य रूपम्; प्रतिषेधस्यादरेणाभिधानं करोमीत्यर्थः। जाव साहू पज्जुवासामि; यावच्छब्दः परिमाण-मर्यादा-ऽवधारणवचनः, तत्र परिमाणे यावत् साधुपर्युपासनं मम तावत् प्रत्याख्यामिति; मर्यादायां साधुपर्युपासनादर्वाक्, अवधारणे यावत्साधुपर्युपासनं तावदेव, न तस्मात्परत इत्यर्थः। दुविहं तिविहेणं; द्वे विधे यस्य स द्विविधः सावद्यो योगः, स च प्रत्याख्येयत्वेन कर्म सम्पद्यते; अतस्तं द्विविधं योगं करण-कारणलक्षणम्, अनुमतिप्रतिषेधस्य [5]गृहस्थेन कर्तुमशक्यत्वात्

---

१ ज्ञानस्य भवति भागी स्थिरतरको दर्शने चारित्रे च। धन्या यावत्कथया गुरुकुलवासं न मुञ्चन्ति ॥
२ तुलना-आवश्यकवृत्तिः हारिभद्री पृ. ४५५ B. ॥ ३ प्रथने-खं. ॥ "१३ ख्यांक् प्रथने। प्रकथने इत्यन्ये" इति हैमे धातुपारायणे अदादिगणे ॥ ४ ख्यापकं-मु. ॥ ५ गृहस्थैः-मु. ॥

पुत्र-भृत्यादिकृतस्य व्यापारस्य स्वयमकरणेऽप्यनुमोदनात्। त्रिविधेनेति करणे तृतीया। मणेणं वायाए काएणं इति त्रिविधस्यैव सूत्रोपात्तं विवरणं मनसा वाचा कायेन चेति त्रिविधेन करणेन। न करोमि न कारयामीति सूत्रोपात्तमेव द्विविधमित्यस्य विवरणम्। किं पुनः कारणमुद्देशक्रममतिलङ्घ्य व्यत्यासेन निर्देशः कृतः? उच्यते—योगस्य करणाधीनतोपदर्शनार्थम्। करणाधीनता हि योगानाम्, करणभावे भावात्तदभावे चाभावाद्योगस्य। तस्सेति तस्य, अत्राधिकृतो योगः संबध्यते; अवयवावयविभावलक्षणसंम्बन्धे[2] षष्ठी, योऽयं योगस्त्रिकालविषयस्तस्यातीतमवयवं प्रतिकामामि निवर्त्ते प्रतीपं क्रामामीत्यर्थः; निन्दामि जुगुप्से, गर्हामि स एवार्थः; केवलमात्मसाक्षिकी निन्दा, गुरुसाक्षिकी गर्हा। भन्ते इति[3] पुनर्गुरोरामन्त्रणं भक्त्यतिशयख्यापनार्थमपुनरुक्तम्[4], अथवा सामायिकक्रियाप्रत्यर्पणाय[5] पुनर्गुरोः सम्बोधनम्। अनेन चैतत् ज्ञापितं भवति, सर्वक्रियावसाने गुरोः प्रत्यर्पणं कार्यमिति। उक्तं च भाष्यकारेण—

"सामाइयपच्चप्पणवयणो[6] वाऽयं भयंतसद्दो त्ति। सव्वकिरियावसाणे भणियं पच्चप्पणमणेण ॥१॥" [वि.भा.३५७१]

अप्पाणमिति आत्मानमतीतकालसावद्ययोगकारिणम्, वोसिरामीति व्युत्सृजामि, विशब्दो विविधार्थो विशेषार्थो वा, उच्छब्दो भृशार्थः, विविध विशेषेण वा भृशं सृजामि त्यजामीत्यर्थः।

---

१ तुलना-आवश्यकसूत्रस्य हारीभद्री वृत्तिः पृ. ४८०॥ २ सम्बन्धिषष्ठी-सं.। तुलना-आवश्यकसूत्रस्य हारिभद्री वृत्तिः पृ. ४८४,४५६॥ ३ इति गुरोरा०—खं.॥ ४ ०नार्थं न पुन०-मु.॥ ५ तुलना-आवश्यकसूत्रस्य हारिभद्री वृत्तिः पृ. ४८४ B. ३८६ B. ४५५॥ ६ सामायिकप्रत्यर्पणवचनो वाऽयं भदन्तशब्द इति। सर्वक्रियावसाने भणितं प्रत्यर्पणमनेन॥

अत्र च करेमि भंते सामाइयमिति वर्त्तमानस्य सावद्ययोगस्य प्रत्याख्यानम्, सावज्जं जोगं पच्चक्खामीत्यनागतस्य, तस्स भंते पडिक्कमामीत्यतीतस्येति त्रैकालिकं प्रत्याख्यानमुक्तमिति त्रयाणां वाक्यानां न पौनरुक्त्यम्। उक्तश्च—"[1] अईयं[2] निंदामि पडुपन्नं संवरेमि अणागयं पच्चक्खामि"[3]। [ पाक्षिकसूत्रे ] इति।

एवं कृतसामायिक ईर्यापथिकायाः प्रतिक्रामति, पश्चादागमनमालोच्य यथाज्येष्ठमाचार्यादीन् वन्दते, पुनरपि गुरुं वन्दित्वा प्रत्युपेक्ष्य निविष्टः शृणोति, पठति, पृच्छति वा। एवं चैत्यभवनेऽपि द्रष्टव्यं। यदा तु स्वगृहे पोषधशालायां वा सामायिक गृहीत्वा तत्रैवाऽऽस्ते तदा गमनं नास्ति।

यस्तु राजादिर्महर्द्धिकः[4] स गन्धसिन्धुरस्कन्धाधिरूढश्छत्रचामरादिराजालङ्करणालङ्कृतो हास्तिका-ऽश्वीय-पादाति-रथ-[5] कट्यापरिकरितो भेरीभाङ्कारभरिताम्बरतलो वन्दिवृन्दकोलाहलाकुलीकृतनभस्तलोऽनेकसामन्तमण्डलेश्वराहमहमिकासंप्रेक्ष्य-माणपादकमलः पौरजनैः सश्रद्धमङ्गुल्योपदर्श्यमानो[6] मनोरथैरुपस्पृश्यमानस्तेषामेवाञ्जलिबन्धान्[7] लाजाञ्जलिपातान् शिरःप्रणामा-ननुमोदमानः 'अहो धन्यो धर्मो य एवंविधैरप्युर्पसेव्यः'[8] इति प्राकृतजनैरपि श्लाघ्यमानोऽकृतसामायिक एव जिनालयं

१ तुलना-आवश्यकसूत्रस्य हरिभद्रीवृत्तिः पृ. ४८३ B. ॥ २ अइयं—सं. खं. ॥ ३ अतीतं निन्दामि प्रत्युत्पन्नं संवृणोमि अनागतं प्रत्याख्यामि ॥ ४ राजादिमह०—खं. सं. ॥ ५ पादाति०-मु. ॥ "षष्ठ्याः समूहे ६।२।९। कवचिहस्त्यचित्ताच्चेकण् ६।२।१४। वाश्वादीयः ६।२।१९। गोरथवातात् त्रल्-कट्यलूलम् ६।२।२४ ॥" इति सिद्धहेमशब्दानुशासने ॥ ६ ०दर्श्य मनोमनोरथै०-सं. ॥ ७ ०ञ्जलिं बन्धान्—खं. सं. ॥ ८ सेव्यत इति—शां ॥

साधुवसतिं वा गच्छति, तत्र गतो राजककुदानि छत्र-चामरोपानद्-मुकुट-खड्गरूपाणि परिहरति, जिनार्चनं साधुवन्दनं वा करोति। यदि त्वसौ कृतसामायिक एव गच्छेत् तदा गजा-ऽश्वादिभिरधिकरणं स्यात्; तच्च न युज्यते कर्तुम्। तथा कृतसामायिकेन पादाभ्यामेव गन्तव्यम्, तच्चानुचितं भूपतीनामिति। आगतस्य च यद्यसौ श्रावको भवति तदा न कोऽप्यभ्युत्थानादि करोति। अथ यथाभद्रकस्तदा पूजा कृता भवत्विति पूर्वमेवासनं रच्यते, आचार्याश्च पूर्वमेवोत्थिता आसते मा उत्थानानुत्थानकृता दोषा भूवन्निति, आगतश्चासौ सामायिकं करोतीत्यादि पूर्ववत् ॥ ८२ ॥

सामायिकस्थितश्च[1] महानिर्जरो भवतीति दृष्टान्तद्वारेणाह—

सामायिकव्रतस्थस्य गृहिणोऽपि स्थिरात्मनः।
चन्द्रावतंसकस्येव क्षीयते कर्म सञ्चितम् ॥ ८३ ॥

गृहस्थस्यापि कृतसामायिकस्य कर्मनिर्जरा भवतीति चन्द्रावतंसक उदाहरणम्। तच्च सम्प्रदायगम्यम्। स चायम्—
अस्ति साकेतनगरं श्रीसङ्केतनिकेतनम्। हसितेन्द्रपुरश्रीकं सितार्हच्चैत्यकेतनैः ॥ १ ॥
तत्र लोकदृगानन्दो द्वितीय इव चन्द्रमाः। चन्द्रावतंसो राजाऽसीदवतंस इवावनेः ॥ २ ॥
स यथा धारयामास शस्त्राणि त्राणहेतवे। तीक्ष्णानि शिक्षावशतो व्रतान्यपि तथा सुधीः ॥ ३ ॥
माघमासे विभावर्यां सोऽन्यदा वासवेश्मनि। आदीपज्वलनं स्थास्यामीति सामायिके स्थितः ॥ ४ ॥

---
१ ०कस्थश्च—मु. ॥

तच्छय्यापालिका ध्वान्तं स्वामिनो मा स्म भूदिति । याते प्राग्यामिनीयामे प्रदीपे तैलमक्षिपत् ॥ ५ ॥
गते यामे द्वितीयस्मिन्नपि सा भक्तमानिनी । जाग्रती दीपके क्षीणतैले तैलं न्यधात् पुनः ॥ ६ ॥
त्रियामायास्तृतीयस्मिन्नपि यामे व्यतीयुषि । मल्लिकायां प्रदीपस्य तैलं चिक्षेप सा पुनः ॥ ७ ॥
विभातायां विभावर्यामवसानमथासदत् । श्रमोत्पन्नव्यथाक्रान्तो राजा स इव दीपकः ॥ ८ ॥
सामायिक समधिगम्य निहत्य कर्म, चन्द्रावतसनृपतिस्त्रिदिवं ततोऽगात् ।
सामायिकव्रतजुषो गृहिणोऽपि सद्यः, । क्षीयेत कर्म निचितं सुगतिर्भवेच्च ॥ ९ ॥ ८३ ॥

[ ॥ इति चन्द्रावतंसराजर्षिकथानकम् ॥ ]

द्वितीयं शिक्षाव्रतमाह—

**दिग्व्रते परिमाणं यत्तस्य संक्षेपणं पुनः ।**
**दिने रात्रौ च देशावकाशिकव्रतमुच्यते ॥ ८४ ॥**

दिग्व्रते प्रथमगुणव्रते यद्दशस्वपि दिक्षु गमनपरिमाणं तस्य दिवा रात्रौ चोपलक्षणत्वात् प्रहरादौ च यत् सङ्क्षेपणं, तद्देशावकाशिकव्रतम् । देशे दिग्व्रतगृहीतपरिमाणस्य विभागे अवकाशोऽवस्थानं देशावकाशः, सोऽत्रास्तीति देशावकाशिकम्, "अतोऽनेकस्वरात्" [ सि० ७।२।६ ] इतीकः ।

१ [ ] एतन्दतर्गतः पाठो मु० विना नास्ति ॥

दिग्व्रतसंक्षेपकरणमणुव्रतादिसंक्षेपकरणस्याप्युपलक्षणं द्रष्टव्यम्, एषामपि संक्षेपस्यावश्यं कर्त्तव्यत्वात्। प्रतिव्रतं च संक्षेपकरणस्य भिन्नव्रतत्वे[2] द्वादश व्रतानीति संख्याविरोधः स्यात् ॥ ८४ ॥

अथ तृतीयं शिक्षाव्रतमाह—

चतुष्पर्व्यां चतुर्थादि कुव्यापारनिषेधनम्।
ब्रह्मचर्यक्रिया स्नानादित्यागः पोषधव्रतम् ॥ ८५ ॥

चतुष्पर्वी अष्टमी-चतुर्दशी-पूर्णिमा-ऽमावास्यालक्षणा, चतुर्णां पर्वाणां समाहारश्चतुष्पर्वी। पर्वशब्दोऽकारान्तोऽप्यस्ति। तस्यां चतुर्थादिकं तपः, कुव्यापारस्य सावद्यव्यापारस्य निषेधः, ब्रह्मचर्यक्रिया ब्रह्मचर्यस्य करणम्, स्नानादेः शरीर-सत्कारस्य त्यागः। आदिशब्दादुद्वर्त्तन-वर्णक-विलेपन-पुष्प-गन्ध-विशिष्टवस्त्रा-ऽऽभरणादिपरिग्रहः। पोषं पुष्टिं प्रक्रमाद्धर्म्मस्य धत्ते पोषधः[3], स एव व्रतं पोषधव्रतम्, सर्वतः पोषध इत्यर्थः।

---

१ तुलना-पञ्चाशकवृत्तिः पृ० २५, धर्मबिन्दुटीका पृ० ४४, धर्मसंग्रहवृत्तिः पृ० ८७ ॥ २ विभिन्न०-मु. ॥ ३ पौषधः-खं. ॥ ४ " पोसहो चउव्विहो—सरीरे पोसहो २ (=सरीरपोसहो ?)। देसे अमुगं ण्हाणादि न करेति, सव्वे ण्हाण-मद्दण-वन्नग-विलेवण-पुप्फ-गंधाणं तथा आभरणाण य परिच्चातो। अव्वावारपोसहो णाम देसे य सव्वे य। देसे अमुगं वा वावारं ण करेमि, सव्वे ववहार-सेवा-हल-सगड-घरपरिकम्ममातितो ण करेति। बंभचेरं २ (बंभचेरे पोसहो बंभचेरपोसहो ?)। देसे दिवा रत्तिं वा एक्कसिं दो वा, सव्वे अहोरत्तं बंभयारी। आहारे २ (पोसहो आहार पोसहो ?)। देसे अमुगा विगती आयंबिलं वा एक्कसिं वा, सव्वे चउव्विहो आहारो अहोरत्तं। जो देसे पोसहं करेइ सो सामातियं करेति वा ण वा। जो सव्वपोसहं करेति सो

द्विविधं हि पोषधव्रतं देशतः सर्वतश्च। तत्राहारपोषधो[1] देशतो विवक्षितविकृतेरविकृतेराचामाम्लस्य वा सकृदेव द्विरेव वा भोजनमिति। सर्वतस्तु चतुर्विधस्याप्याहारस्याहोरात्रं यावत् प्रत्याख्यानम्। कुव्यापारनिषेधपोषधस्तु[2] देशत एकतरस्य कस्यापि कुव्यापारस्याकरणम्, सर्वतस्तु सर्वेषामपि कृषि-सेवा-वाणिज्य-पाशुपाल्य-गृहकर्मादीनामकरणम्। ब्रह्मचर्यपोषधोऽपि देशतो दिवैव रात्रावेव वा सकृदेव द्विरेव वा स्त्रीसेवां मुक्त्वा ब्रह्मचर्यकरणम्, सर्वतस्तु अहोरात्रं यावत् ब्रह्मचर्यपालनम्। देशतः स्नानादेः शरीरसत्कारस्यैकतरस्याकरणम्, सर्वतस्तु सर्वस्यापि तस्याकरणम्।

पोषधव्रत-स्वरूपम्

इह च देशतः कुव्यापारनिषेधपोषधं यदा करोति तदा सामायिकं करोति वा न वा, यदा तु सर्वतः करोति तदा सामायिकं नियमात् करोति, अकरणे तु तत्फलेन वञ्च्यते। सर्वतः पोषधव्रतं च चैत्यगृहे वा, साधुमूले वा, गृहे वा, पोषधशालायां वा त्यक्तमणिसुवर्णाद्यलङ्कारो व्यपगतमाला-विलेपन-वर्णकः परिहृतप्रहरणः प्रतिपद्यते। तत्र च कृते पठति, पुस्तकं वाचयति, धर्मध्यानं ध्यायति यथैतान् साधुगुणानहं मन्दभाग्यो न समर्थो धारयितुमिति। इह च यद्याहार-शरीरसत्कार-ब्रह्मचर्यपोषधवत् कुव्यापारपोषधमपि[3] 'अन्यत्रानाभोगेन' इत्याद्याकारोच्चारणपूर्वकं प्रतिपद्यते तदा सामायिकमपि सार्थकं[4]

१ ०पौषधो-खं.॥ तुलना-पञ्चाशकवृत्तिः पृ० २५, नवपदप्रकरणबृहद्वृत्तिः पृ० २७१, धर्मसंग्रहवृत्तिः पृ० ८८।

२ ०निषेधस्तु--खं.॥ ३ ०पौषधमपि-खं.। ०पोषधव्रतमपि-मु.॥ ४ सार्थकं स्यात्-मु.॥

नियमा करेति, जदि ण करेति वंचिज्जति। तं कहिं? चेतियघरे साधुमूले घरे वा पोसहसालाए वा तोम्मुक्कमणि-सुवण्णो पढंतो पोत्थगं वा वायंतो धम्मज्झाणं झियायति, जथा एते साहुगुणा अहं मंदभग्गो असमत्थो त्ति विभासा" इति आवश्यकसूत्रस्य प्रत्याख्यानचूर्णौ पृ. ३०४। एतादृशमेव वर्णनं किञ्चिच्छब्दभेदेन क्रमभेदेन च आवश्यकसूत्रस्य हारिभद्र्यां वृत्तावपि वर्तते पृ. ८३५॥

भवति, स्थूलत्वात् पो[1]षधप्रत्याख्यानस्य सूक्ष्मत्वाच्च सामायिकस्येति। तथा पो[2]षधवताऽपि सावद्यव्यापारा न कार्या एव। ततः सामायिकमकुर्वंस्तल्लाभाद् भ्रश्यतीति। यदि पुनः सामाचारीविशेषात् सामायिकमिव 'द्विविधं त्रिविधेन' इ[3]त्येवं पोषध प्रतिपद्यते तदा सामायिकार्थस्य पोषधेनैव गतत्वान्न सामायिकमत्यन्तं फलवत्। यदि परं पो[4]षध-सामायिकलक्षणं व्रतद्वयं प्रतिपन्नं मयेत्यभिप्रायात् फलवदिति ॥ ८५ ॥

इदानीं पोषधव्रतकर्तॄन् प्रशंसति—

गृहिणोऽपि हि धन्यास्ते पुण्यं ये पोषधव्रतम्।
दुष्पालं पालयन्त्येव यथा स चुलनीपिता ॥ ८६ ॥

यतयस्तावद् धन्या एव, गृहिणोऽपि गृहस्था अपि ते धन्याः धर्मधनं लब्धारः ये निःसत्त्वजनदुष्पालं पुण्यं पवित्रं पोषधव्रतं पालयन्ति, यथा स चुलनीपितेति दृष्टान्तः; स च सम्प्रदायगम्यः। स चायम्—

अ[5]स्ति वाराणसी नामानुगङ्गं नगरी वरा। विचित्ररचनारम्या तिलकश्रीरिवावनेः ॥ १ ॥

सुत्रामेवामरावत्यामविस्रत्रितविक्रमः। जितशत्रुरभूत्तत्र धरित्रीधवपुङ्गवः ॥ २ ॥

आसीद् गृहपतिस्तस्यां महेभ्यश्चुलनीपिता। प्राप्तो मनु[6]ष्यधर्मेव मनुष्यत्वं कुतोऽपि हि ॥ २ ॥

---

१ पौष०–शां. ॥ २ पौष०–शां. ॥ ३ इत्येव–खं. ॥ ४ पौष०–शां. खं. ॥ ५ दृश्यतामुपासकदशाङ्गे तृतीयमध्ययनम्। इत आरभ्य अष्टादश श्लोकाः त्रिषष्टिशलाकापुरुषचरित्रे दशमे पर्वणि प्रायोऽक्षरशो वर्तन्ते ८।२७६–२९२ ॥ ६ मनुष्यधर्मा कुबेरः॥

जगदानन्दिनस्तस्यानुरूपा रूपशालिनी । श्यामा नामाभवद्भार्या श्यामेव तुहिनद्युतेः ॥ ४ ॥
अष्टौ निधानेऽष्टौ वृद्धावष्टौ च व्यवहारगाः । इति तस्याभवन् हेम्नश्चतुर्विंशतिकोटयः ॥ ५ ॥
एकैकशो गोसहस्रैर्दशभिः प्रमितानि तु । तस्यासन् गोकुलान्यष्टौ कुलवेश्मानि सम्पदाम् ॥ ६ ॥
तस्यां पुर्यामथान्येद्युरुद्याने कोष्ठकाभिधे । भगवान् समवसृतो विहरंश्चरमो जिनः ॥ ७ ॥
ततो भगवतः पादवन्दनाय सुरासुराः । सेन्द्राः समाययुस्तत्र जितशत्रुश्च भूपतिः ॥ ८ ॥
पद्भ्यां चचाल चुलनीपिताऽप्युचितभूषणः । वन्दितुं नन्दितमनाः श्रीवीरं त्रिजगत्पतिम् ॥ ९ ॥
भगवन्तं ततो नत्वोपविश्य चुलनीपिता । शुश्राव परया भक्त्या प्राञ्जलिर्धर्मदेशनाम् ॥ १० ॥
अथोत्थितायां सदसि प्रणम्य चरणौ प्रभोः । इति विज्ञपयामास विनीतश्चुलनीपिता ॥ ११ ॥
स्वामिन्नस्मादृशां बोधहेतोर्विहरसे महीम् । जगद्बोधं विना नान्यो ह्यर्थश्चङ्क्रमणे रवेः ॥ १२ ॥
सर्वोऽपि याच्यते गत्वा स दत्ते यदि वा न वा । आगत्याऽयाचितो धर्मं दत्से हेतुः कृपाऽत्र ते ॥ १३ ॥
जानामि यतिधर्मं चेत् गृह्णामि स्वामिनोऽन्तिके । योग्यता परमियती मन्दभाग्यस्य नास्ति मे ॥ १४ ॥
याचे श्रावकधर्मं तु स्वामिन् ! देहि प्रसीद मे । आदत्तेऽब्धावप्युदङ्को भरणं निजमेव हि ॥ १५ ॥
यथासुखं गृहाणेति स्वामिनाऽनुमतस्ततः । स प्रत्याख्यत् स्थूलां हिंसां मृषावादं च चौरिकाम् ॥ १६ ॥
प्रत्याख्यच्च स्वभार्यायाः श्यामाया अपरस्त्रियम् । अष्टाष्टकोट्यभ्यधिकं स्वर्णं निध्यादिषु त्रिषु ॥ १७ ॥
व्रजेभ्योऽन्यानथाष्टाभ्यः प्रत्याचख्यौ व्रजानपि । हलपञ्चशतीतोऽन्यां कृषियोग्यां महीमपि ॥ १८ ॥

अनःशतेभ्यः पञ्चभ्यो दिग्यायिभ्योऽपरं त्वनः । संवहद्भ्यश्च पञ्चभ्यः प्रत्याचख्यौ महामतिः ॥ १९ ॥

---

१ तुलना—"तयाणंतरं च णं सगडविहिपरिमाणं करेइ—नन्नत्थ पंचहिं सगडसएहिं दिसायत्तिएहिं पंचहिं सगडसएहिं संवाहणिएहिं, अवसेसं सव्वं सगडविहिं पच्चक्खामि। तयाणंतरं च णं वाहणविहिपरिमाणं करेइ—नन्नत्थ चउहिं वाहणेहिं दिसायत्तिएहिं चउहिं वाहणेहिं संवाहणिएहिं, अवसेसं सव्वं वाहणविहिं पच्चक्खामि। तयाणंतरं च णं उवभोगपरिभोगविहिं पच्चक्खाएमाणे उल्लणियाविहिपरिमाणं करेइ—नन्नत्थ एगाए गंधकासाइए, अवसेसं सव्वं उल्लणियाविहिं पच्चक्खामि। तयाणतरं च णं दंतवणविहिपरिमाणं करेइ—नन्नत्थ एगेणं अल्ललट्ठीमहुएणं, अवसेसं दंतवणविहिं पच्चक्खामि। तयाणंतरं च णं फलविहिपरिमाणं करेइ—नन्नत्थ एगेणं खीरामलएणं, अवसेसं फलविहिं पच्चक्खामि। तयाणंतरं च णं अब्भंगणविहिपरिमाणं करेइ—नन्नत्थ सयपाग-सहस्सपागेहिं तेल्लेहिं, अवसेसं अब्भंगणविहिं पच्चक्खामि।..... नन्नत्थ एगेणं सुरहिणा गंधट्टएणं, अवसेसं उव्वट्टणविहिं पच्चक्खामि।. .नन्नत्थ अट्ठहिं उट्टिएहिं उदगस्स घडएहिं, अवसेसं मज्जणविहिं पच्चक्खामि।..........नन्नत्थ एगेणं खोमजुयलेणं, अवसेसं वत्थविहिं पच्चक्खामि।.......नन्नत्थ अगुरु-कुंकुम-चंदणमादिएहिं, अवसेसं विलेवणविहिं पच्चक्खामि। .. नन्नत्थ एगेणं सुद्धपउमेणं मालइकुसुमदामेणं वा, अवसेसं पुप्फविहिं पच्चक्खामि।.... नन्नत्थ मट्ठकण्णेज्जएहिं नाममुद्दाए य, अवसेसं आभरणविहिं पच्चक्खामि।... नन्नत्थ अगुरु-तुरुक्क धूवमादिएहिं, अवसेसं धूवणविहिं पच्चक्खामि।......नन्नत्थ एगाए कट्ठपेज्जाए, अवसेसं पेज्जविहिं पच्चक्खामि।......नन्नत्थ एगेहिं घयपुण्णेहिं खंडखज्जएहिं वा, अवसेसं भक्खविहिं पच्चक्खामि। . नन्नत्थ कलमसालिओदणेणं, अवसेसं ओदणविहिं पच्चक्खामि।. नन्नत्थ कलायसूवेण वा मुग्ग-माससूवेण वा, अवसेसं सूवविहिं पच्चक्खामि।.... .नन्नत्थ सारइएणं गोघयमंडेणं, अवसेसं घयविहिं पच्चक्खामि।... नन्नत्थ वत्थुसाएण वा सुत्थियसाएण वा मंडुक्कियसाएण वा, अवसेसं सागविहिं पच्चक्खामि।. ..नन्नत्थ एगेणं पालंगामाहुरएणं, अवसेसं माहुरयविहिं पच्चक्खामि।......नन्नत्थ सेहंब-दालियंबेहिं, अवसेसं जेमणविहिं पच्चक्खामि।... .नन्नत्थ एगेणं अंतलिक्खोदएणं, अवसेसं पाणियविहिं पच्चक्खामि।...नन्नत्थ पंचसोगंधिएणं तंबोलेणं, अवसेसं मुहवासविहिं पच्चक्खामि।" इति उपासकदशाङ्गे प्रथमेऽ-

दिग्यात्रिकाणि[1] चत्वारि चत्वारि प्रवहन्ति च । वहनानि[2] विना सोऽथ प्रत्याख्यादितराणि[3] तु ॥ २० ॥

१ इत आरभ्य ३० श्लोकं यावत् कथञ्चित् समानत्वं त्रिषष्टि० १०।८।२४८–२५७.॥ २ वाहनानि–मु.। दृश्यतां पृ० ४८९ टि० १ ॥ ३ प्रत्याख्यदि०–मु. ॥

ध्ययने। अस्य अभयदेवसूरिविरचिता वृत्तिः—“ दिसायत्तिएहिं ति दिग्यात्रा–देशान्तरगमनं प्रयोजनं येषां तानि दिग्यात्रिकानि तेभ्योऽन्यत्र, ‘संवाहणिएहिं’ ति संवाहनं क्षेत्रादिभ्यस्तृणकाष्ठधान्यादेर्गृहादावानयनं तत्प्रयोजनानि सांवाहनिकानि तेभ्योऽन्यत्र, ‘वाहणेहिं’ति यानपात्रेभ्यः, ‘उवभोगपरिभोग’ त्ति उपभुज्यते–पौनः पुन्येन सेव्यत इत्युपभोगो–भवनवसनवनितादिः, परिभुज्यते सकृदासेव्यत इति परिभोग आहारकुसुमविलेपनादिः, व्यत्ययो वा व्याख्येय इति।‘उल्लणिय’त्ति स्नानजलार्द्रशरीरस्य जललूषणवस्त्रं ‘गन्धकासाईए’ त्ति गन्धप्रधाना कषायेण रक्ता शाटिका गन्धकाषायी तस्याः, ‘दन्तवण’ ति दन्तपावनं–दन्तमलापकर्षणकाष्ठम्, ‘अल्ललट्ठीमहुएणं’ ति आर्द्रेण यष्टीमधुना–मधुररसवनस्पतिविशेषेण, ‘खीरामलएणं’ति अबद्धास्थिकं क्षीरमिव मधुरं वा यदामलकं तस्मादन्यत्र, ‘सयपागसहस्सपागेहिं’ ति द्रव्यशतस्य सत्कं क्वाथशतेन सह यत् पच्यते कार्षापणशतेन वा तच्छतपाकम्, एवं सहस्रपाकमपि, ‘गन्धट्टएणं’ ति गन्धद्रव्याणामुपलकुष्ठादीनां ‘अट्टओ’ त्ति चूर्णं गोधूमचूर्णं वा गंधयुक्तं तस्मादन्यत्र, ‘उट्टिएहिं उदगस्स घडएहिं’ ति उष्ट्रिका–बृहन्मृन्मयभाण्डं, तत्पूरणप्रयोजना ये घटास्त उष्ट्रिकाः, उचितप्रमाणा नातिलघवो महान्तो वेत्यर्थः। इह च सर्वत्रान्यत्रेति शब्दप्रयोगेऽपि प्राकृतत्वात् पञ्चम्यर्थे तृतीया द्रष्टव्येति। ‘खोमजुयलेणं’ ति कार्पासिकवस्त्रयुगलादन्यत्र, ‘अगरु’ त्ति अगुरुर्गन्धद्रव्यविशेषः, ‘सुद्धपउमेणं’ति कुसुमान्तरवियुतं पुण्डरीकं वा शुद्धपद्मं ततोऽन्यत्र, ‘मालइकुसुमदाम’ त्ति जातिपुष्पमाला, ‘मट्ठकण्णेज्जएहिं’ ति मृष्टाभ्याम्–अचित्रवद्भ्यां कर्णाभरणविशेषाभ्यां, ‘नाममुद’ त्ति नामाङ्किता मुद्रा–अङ्गुलीयकं नाममुद्रा, ‘तुरुक्कधूव’ त्ति सेल्हकलक्षणो धूपः, ‘पेज्जविहिं’ति पेयाहारप्रकारं ‘कट्ठपेज्ज’त्ति मुद्गादियूषो घृततलिततण्डुलपेया वा, ‘भक्ख’ त्ति खरविशदमभ्यवहार्यं भक्षमित्यन्यत्र रूढम्, इह तु पक्वान्नमात्रं तद्विवक्षितं, ‘घयपुण्ण’त्ति

अन्यत्र गन्ध[1]काषाय्याः [2]प्रत्याख्यादङ्गपुंसनम् । आर्द्राया मधुकयष्टेरितरद्दन्तधावनम् ॥ २१ ॥
अन्यतः क्षीरामलकात् प्रत्याचख्यौ फलान्यपि । सहस्र-शतपाकाभ्यां तैलाभ्यां म्रक्षणान्तरम् ॥ २२ ॥
[3]गन्धाट्टादन्यतः प्रत्याचख्यावुद्वर्त्तनान्यपि । अष्टाभ्य औष्ट्रिकेभ्योऽम्भःकुम्भेभ्योऽधिकमज्जनम् ॥ २३ ॥
वस्त्रं प्रत्याख्यदन्यच्च कार्पासाद्वस्त्रयुग्मकात् । विलेपनानि चान्यत्र कुङ्कुमागरुचन्दनात् ॥ २४ ॥
पुष्पं प्रत्याख्यदन्यच्च पद्माज्जातिस्रजोऽपि च । कर्णिका-नाममुद्राभ्यामन्यानि भूषणानि च ॥ २५ ॥
मुमोच धूपमगरु-[4]तुरुष्काभ्यामथापरम् । अन्याश्च काष्ठपेयायाः पेया अपि समन्ततः ॥ २६ ॥
खण्डखाद्याद् घृतपूराच्चेतरत् खाद्यमत्यजत् । ओदनान्यपि निःशेषाण्यन्यतः कलमौदनात् ॥ २७ ॥

---

१ ०काषायात्–खं. ॥ २ प्रत्याख्यद०–मु. ॥ ३ गन्धाढ्याद०–मु. । दृश्यतां पृ० ४८९ टि० १ ॥ ४ तुरष्का०–खं. ॥

---

घृतपूराः प्रसिद्धाः, 'खण्डखज्ज'त्ति खण्डलिप्तानि खाद्यानि अशोकवर्त्तयः खण्डखाद्यानि, 'ओदण'त्ति ओदनः–कूरं, 'कलत्त(म)-सालि' त्ति पूर्वदेशप्रसिद्धः, 'सूप' त्ति सूपः कूरस्य द्वितीयाशनं प्रसिद्ध एव, 'कलायसूवे' त्ति कलायाः चणकाकारा धान्यविशेषा मुद्गा माषाश्च प्रसिद्धाः, 'सारइएणं गोघयमण्डेणं' ति शारदिकेन शरत्कालोत्पन्नेन गोघृतमण्डेन–गोघृतसारेण, 'साग'त्ति शाको वस्तुलादिः, 'चूचुसाए' त्ति चूचुशाकः, सौवस्तिकशाको मण्डूकिकाशाकश्च लोकप्रसिद्धा एव, 'माहुरय' त्ति अनम्लरसानि शालनकानि, 'पालङ्ग' त्ति वल्लीफलविशेषः, 'जेमण' त्ति जेमनानि वटकपूरणादीनि, 'सेहंबदालियंबेहिं' ति सेधे सिद्धौ सति यानि अम्लेन तीमनादिना संस्क्रियन्ते तानि सेधाम्लानि, यानि दाल्या मुद्गादिमय्या निष्पादितानि अम्लानि च तानि दालिकाम्लानीति सम्भाव्यन्ते, 'अन्तलिक्खोदयं' ति यज्जलमाकाशात् पतदेव गृह्यते तदन्तरिक्षोदकम्, 'पञ्चसोगन्धिएणं'ति पञ्चभिः—एला-लवङ्ग-कर्पूर-कक्कोल-जातीफललक्षणैः सुगन्धिभिर्द्रव्यैरभिसंस्कृतं पञ्चसौगन्धिकम् ॥"

पोषधव्रते चुलनीपितुः कथानकम्

कलाय-मुद्ग-माषेभ्य इतरं सूपमत्यजत् । शरत्कालभवात् सर्वं गोघृतादपरं घृतम् ॥ २८ ॥
शाकं पल्यङ्क-मण्डूकीशाकाभ्यामन्यमत्यजत् । विना स्नेहाम्ल-दाल्यम्ले तीमनान्यपि सर्वतः ॥ २९ ॥
अन्तरिक्षोदकादन्यदुदकं पर्यवर्जयत् । मुखवासं च ताम्बूलात् पञ्चसौगन्धिकादृते ॥ ३० ॥
अपध्यानं हिंस्रदानं प्रमादाचरितं तथा । पापकर्मोपदेशं चानर्थदण्डानवर्जयत् ॥ ३१ ॥
एवं श्रावकधर्मं स सम्यक् सम्यक्त्वपूर्वकम् । सर्वातिचाररहितं प्रपेदे पुरतः प्रभोः ॥ ३२ ॥
भगवन्त ततो नत्वा गत्वा च निजवेश्मनि । प्रतिपन्नं तथा धर्मं स्वभार्यायै न्यवेदयत् ॥ ३३ ॥
तेनाथ साऽप्यनुज्ञाता रथमारुह्य तत्क्षणम् । उपेत्य भगवत्पार्श्वे गृहिधर्ममशिश्रियत् ॥ ३४ ॥
तदा च गौतमो नत्वा पप्रच्छेति जगत्पतिम् । महाव्रतधरः किं स्यान्न वाऽयं चुलनीपिता ? ॥ ३५ ॥
अथोचे स्वामिना नैष यतिधर्मं प्रपत्स्यते । गृहिधर्मरतः किं तु मृत्वा सौधर्ममेष्यति ॥ ३६ ॥
अरुणाभे विमाने च चतुष्पल्योपमस्थितिः । ततश्च्युत्वा विदेहेषूत्पद्य निर्वाणमेष्यति ॥ ३७ ॥ [ युग्मम् ]
गृहभारं ज्येष्ठपुत्रे न्यस्याथ चुलनीपिता । तस्थौ पोषधशालायां[2] पालयन् पोषधव्रतम् ॥ ३८ ॥
तस्याथ पोषधस्थस्य[3] मायामिथ्यात्ववान् सुरः । निशीथे कश्चिदागच्छत् पार्श्वं व्रतजिघांसया ॥ ३९ ॥
घोराकारः पुरोभूय खड्गमाकृष्य भीषणम् । स इत्यूचे तमत्युच्चैश्चुलनीपितरं सुरः ॥ ४० ॥

---

१ इदं श्लोकत्रयं समानं त्रिषष्टि० १०।८।२९४-२९६ ॥ २ पौषध०–खं. ॥ ३ पौषध०–शां. ॥

अप्रार्थितप्रार्थक रे ! श्रमणोपासकव्रतम् । त्वया किमिदमारब्धं मदादेशेन मुच्यताम् ॥ ४१ ॥
मुञ्चसीदं न चेत्तेऽग्रे ज्येष्ठपुत्रमहं तदा[1] । कूष्माण्डमिव खड्गेन खण्डयिष्यामि खण्डशः ॥ ४२ ॥
भवतः प्रेक्षमाणस्य[2] पुरस्तात् पिशितान्यहम् । क्षिप्त्वा कटाहे पक्ष्यामि शूलैर्भ्रक्ष्यामि[3] च क्षणात् ॥ ४३ ॥
आचमिष्यामि तन्मांसशोणितानि तथाऽधुना । प्रेक्षमाणो[4] यथा हि त्वं स्वयमेव विपत्स्यसे ॥ ४४ ॥
देवब्रुवे विब्रुवति तत्रैवं चुलनीपिता । न चकम्पे केसरीव गर्जत्यूर्जितमम्बुदे ॥ ४५ ॥
अक्षोभं प्रेक्षमाणस्तु चुलनीपितरं सुरः । बिभीषयितुकामस्तं तथैवोचे पुनः पुनः ॥ ४६ ॥
एवं विभाषमाणस्य सुरस्य चुलनीपिता । न सन्मुखमपि प्रेक्षाञ्चक्रे शुन इव द्विपः ॥ ४७ ॥
स विकृत्य पुरो ज्येष्ठतनयं चुलनीपितुः । निस्त्रिंशेन[5] नृशंसात्मा पशुवद् व्यशसत्ततः ॥ ४८ ॥
छित्त्वा क्षिप्त्वा कटाहान्तस्तन्मांसानि पपाच च । बभ्रज्ज च शितैः शूलैराचचाम च सोऽमरः ॥ ४९ ॥
अधिसेहे च तत्सर्वं तत्त्वज्ञः चुलनीपिता । अन्यत्वभावनाभाजां स्वाङ्गच्छेदोऽपि नार्त्तये ॥ ५० ॥
अथोचे स सुरो रे रे ! व्रतमद्यापि नोज्झसि । तद् ज्येष्ठमिव ते पुत्रं हन्मि मध्यममप्यहम् ॥ ५१ ॥
ततोऽहन् मध्यमं पुत्रं तथैवोचे पुनः पुनः । निरीक्ष्याक्षुभितं तं च कनिष्ठं चावधीत् सुतम् ॥ ५२ ॥

१ तव–खं. सं. विना ॥ २ प्रेक्ष्यमा०–खं. सं. ॥ ३ भंक्ष्यामि–सं. । ०भंक्ष्यामि तत्क्षणात्–मु० ॥ ४ प्रेक्ष्यमाणो–मु. ॥ ५ निस्तृंशेन–खं. सं. ॥

॥ ४९३ ॥

पोषधव्रते चुलनीपितुः कथानकम्

तत्राप्यालोक्य निष्कम्प तं क्रुद्धः स सुरोऽब्रवीत् । नाद्याप्युज्झसि पाखण्डं मातरं ते विहन्मि तत् ॥ ५३ ॥
भद्रां नामाथ चुलनीपितुर्मातरमातुराम् । विकरोति स्म रुदतीं करुणं कुररीमिव ॥ ५४ ॥
स सुरः पुनरप्यूचे मुच्यतां प्रकृतं त्वया । स्वकुटुम्बप्रणाशाय कृत्यातुल्यमिदं व्रतम् ॥ ५५ ॥
अन्यथा कुलमेढिं ते मातरं हरिणीमिव । हत्वा भ्रक्ष्यामि पक्ष्यामि भक्षयिष्यामि च क्षणात् ॥ ५६ ॥
ततोऽप्यभीतं चुलनीपितरं वीक्ष्य सोऽमरः । भद्रामाराटयत्तारं स्तनान्यस्तामजामिव ॥ ५७ ॥
यया भार इवोढस्त्वमुदरेणोदरंभरिः । मातरं हन्यमानां तां पश्येत्यूचे पुनः सुरः ॥ ५८ ॥
अथैवं चिन्तयामास चेतसा चुलनीपिता । अहो दुरात्मा कोऽप्येष परमाधार्मिकोपमः ॥ ५९ ॥
पुत्रत्रयं मे पुरतो जघान च चखाद च । क्रव्यादिव ममाम्बामप्यधुना हन्तुमुद्यतः ॥ ६० ॥
यावन्न हन्त्यमूं तावद्रक्षामीति चचाल सः । कुर्वाणेन महाशब्दमुत्पेते च सुरेण खे ॥ ६१ ॥
तं च कोलाहलं श्रुत्वा भद्रा द्रुतमुपेत्य तम् । किमेतदिति चापृच्छत् सोऽशंसत्तदशेषतः ॥ ६२ ॥
ततोऽभाषिष्ट भद्रैव मिथ्यादृक् कोऽप्ययं सुरः । पोषधव्रतविघ्नं ते चक्रे कृत्रिमभीषणैः ॥ ६३ ॥
पोषधव्रतभङ्गस्य कुरुष्वालोचनां ततः । पापाय व्रतभङ्गस्य स्यादनालोचनं यतः ॥ ६४ ॥
तथैव प्रतिपेदेऽथ तद्वाचं चुलनीपिता । चकारालोचनां तस्य व्रतभङ्गस्य शुद्धधीः ॥ ६५ ॥
अथैकादश भेजेऽसौ श्रावकप्रतिमाः क्रमात् । सोपानानीव स स्वर्गसौधारोहणकर्मणे ॥ ६६ ॥

१ ०मु[प]त्य—मु. ॥ २ ०चनं—मु. ॥

निस्त्रिंशधारानिशितं स एवं श्रावकव्रतम् । सुचिरं पालयामास भगवद्वचनोचितम् ॥ ६७ ॥
ततः संलेखनापूर्वं प्रपद्यानशनं सुधीः । मृत्वा सौधर्म उत्पेदे विमाने सोऽरुणप्रभे ॥ ६८ ॥

दुष्पालमेवं चुलनीपिता यथा, तत् पालयामास स पोषधव्रतम् ।
ये पालयन्त्येव तथा परेऽप्यदो, दृढव्रतास्ते खलु मुक्तिगामिनः ॥ ६९ ॥

[ इति चुलनीपितुः कथानकम् ][1] ॥ ८६ ॥

इदानीं चतुर्थं शिक्षाव्रतमाह—

## दानं चतुर्विधाहार-पात्रा-ऽऽच्छादन-सद्मनाम् ।
## अतिथिभ्योऽतिथिसंविभागव्रतमुदीरितम् ॥ ८७ ॥

अतिथिभ्यस्तिथि-पर्वाद्युत्सवरहितेभ्यो भिक्षार्थं भोजनकाले उपस्थितेभ्यः साधुभ्यो दानं विश्राणनं चतुर्विधस्याशन-पान-खाद्य-स्वाद्यरूपस्याहारस्य, पात्रस्यालाब्वादेः, आच्छादनस्य वस्त्रस्य कम्बलस्य वा, सद्मनो वसतेः, उपलक्षणात् पीठ-फलक-शय्यासंस्तारकादीनामपि । अनेन हिरण्यादिदाननिषेधः, तेषां यतेरनधिकारात् । तदेतदतिथिसंविभागव्रतमुच्यते । अतिथेः सङ्गतो निर्दोषो विभागः पश्चात्कर्मादिदोषपरिहारायांशदानरूपोऽतिथिसंविभागः, तद्रूपं व्रतमतिथिसंविभागव्रतम् ।

१ [ ] एतदन्तर्गतः पाठो मु. विना नास्ति॥ २ इत आरभ्य तुलना—पञ्चाशकवृत्तिः पृ० २७, धर्मसंग्रहवृत्तिः पृ० ९४–९५ ।

आहारादीनां च न्यायार्जितानां प्रासुकैषणीयानां कल्पनीयानां च देश-काल-श्रद्धा-सत्कारपूर्वकमात्मानुग्रहबुद्ध्या यतिभ्यो दानमतिथिसंविभागः। यदूचुः—

"नायागयाणं कप्पणिज्जाणं अन्नपाणाईणं दव्वाणं देश-काल-सद्धा-सक्कार-कमजुअं पराए भत्तीए आयाणुग्गहबुद्धीए संजयाणं दाण अतिहिसंविभागो।" [आव० प्रत्या०]।

अनूदितं चैतत्—"प्रायः शुद्धैस्त्रिविधविधिना प्रासुकैरेषणीयैः, कल्प्यप्रायैः स्वयमुपहितैर्वस्तुभिः पानकाद्यैः।

काले प्राप्तान् सदनमसमश्रद्धया साधुवर्गान्, धन्याः केचित् परमवहिता हन्त! संमानयन्ति ॥ १ ॥

---

१ "अतिहिसंविभागो नाम नायागयाणं कप्पणिज्जाणं अन्नपाणाईणं दव्वाणं देसकालसद्धासक्कारकमजुयं पराए भत्तीए आयाणुग्गहबुद्धीए संजयाणं दाणं।" इति आवश्यकसूत्रे प्रतिक्रमणाध्ययने। अस्य हारिभद्री व्याख्या—'इह भोजनार्थं भोजनकालोपस्थायी अतिथिरुच्यते, तत्रात्मार्थं निष्पादिताहारस्य गृहिव्रतिनः मुख्यः साधुरेवातिथिः, तस्य संविभागोऽतिथिसंविभागः, संविभागग्रहणात् पश्चात्कर्मादिदोषपरिहारमाह, नामशब्दः पूर्ववत्, न्यायागतानामिति न्यायः द्विज-क्षत्रिय-विट्-शूद्राणां स्ववृत्त्यनुष्ठानम्, स्वस्ववृत्तिश्च प्रसिद्धैव प्रायो लोकहेर्या, तेन तादृशेन न्यायेनागतानां प्राप्तानाम्, अनेनान्यायागतानां प्रतिषेधमाह। कल्पनीयानामुद्गमादिदोषपरिवर्जितानाम्, अनेनाऽकल्पनीयानां निषेधमाह। अन्नपानादीनां द्रव्याणाम्, आदिग्रहणाद् वस्त्र-पात्रौषध-भैषजादिपरिग्रहः, अनेन हिरण्यादिव्यवच्छेदमाह। देश-काल-श्रद्धा-सत्कार-क्रमयुक्तम्, तत्र नानाव्रीहि-कोद्रव-कङ्गु-गोधूमादिनिष्पत्तिभाग् देशः, सुभिक्षदुर्भिक्षादिः कालः, विशुद्धश्चित्तपरिणामः श्रद्धा, अभ्युत्थाना-ऽऽसनदान-वन्दना-ऽनुव्रजनादिः सत्कारः, पाकस्य पेयादिपरिपाट्या प्रदानं क्रमः, एभिर्देशादिभिर्युक्तं समन्वितम्, अनेनापि विपक्षव्यवच्छेदमाह। परया प्रधानया भक्त्येति, अनेन फलप्राप्तौ भक्तिकृतमतिशयमाह। आत्मानुग्रहबुद्ध्या, न पुनर्यत्यनुग्रहबुद्ध्येति, तथाहि—आत्मपरानुग्रहपरा एव यतयः। संयता मूलगुणोत्तरगुणसम्पन्नाः साधवः तेभ्यो दानमिति सूत्रार्थः।"—पृ. ८३७ ॥ २ ०मुपहतै०—सं. विना ॥ ३ सन्मान०—शां. ॥ धर्मसंग्रहवृत्तौ च पृ० ९५ ॥

अशनमखिलं खाद्यं स्वाद्यं भवेदथ पानकं, यतिजनहितं वस्त्रं पात्रं सकम्बल-प्रोञ्छनम् ।
वसति-फलकप्रख्यं मुख्यं चरित्रविवर्द्धनं, निजकमनसः प्रीत्याधायि प्रदेयमुपासकैः ॥ २ ॥" [ ]

तथा—

"साहूण[1] कप्पणिज्जं जं न वि दिन्नं कहिंचि किंचि तहिं । धीरा जहुत्तकारी[2] सुसावगा तं न भुंजंति ॥ १ ॥
वसही-सयणा-ऽऽसण-भत्त-पाण-भेसज्ज-वत्थ-पाआई[3] । जइ वि न पज्जत्तधणो थोवा[4] वि हु थोवयं देइ ॥ २ ॥"

[ उपदेशमाला गा० २३९-२४० ]

वाचकमुख्यस्त्वाह—

"किञ्चिच्छुद्धं कल्प्यमकल्प्यं स्यात् स्यादकल्प्यमपि कल्प्यम् । पिण्डः शय्या वस्त्रं पात्रं वा भेषजाद्यं[5] वा ॥ १ ॥
देशं कालं पुरुषमवस्थामुपयोगशुद्धिपरिणामान् । प्रसमीक्ष्य भवति कल्प्यं नैकान्तात् कल्पते कल्प्यम् ॥ २ ॥"

[प्रशमरति० १४६-१४७]

ननु यथा शास्त्रे आहारदातारः श्रूयन्ते न तथा वस्त्रादिदातारः, न च वस्त्रादिदानस्य फलं श्रूयते, तन्न वस्त्रादिदानं युक्तम् । नैवम् । भगवत्यादौ वस्त्रादिदानस्य[6] साक्षादुक्तत्वात् । यथा—

१ साधूनां कल्पनीयं यद् नापि दत्तं कस्मिंश्चित् किञ्चित् तस्मिन् । धीरा यथोक्तकारिणः सुश्रावकाः तद् न भुञ्जते ॥ वसति-शयना-ऽऽसन-भक्त-पान-भैषज्य-वस्त्र-पात्रादि । यद्यपि न पर्याप्तधनः स्तोकादपि स्तोकं ददाति ॥ २ ०त्तगारी-खं. सं. ॥ ३ ०पत्ताई-मु. । ०पत्ताई-इति उपदेशमालायाम् ॥ ४ थोवाउ वि थोवयं-खं. सं. । थोवाओ वि थोवयं-मु. ॥ ५ भैष०-शां. ॥ ६ वस्त्रादेर्दानस्य-खं. ॥

"[1]समणे निग्गंथे [2]फासुअएसणिज्जेणं असण-पाण-खाइम-साइमेणं वत्थ-पडिग्गह-कंबल-पायपुंछणेणं पीढ-फलग-सेज्जा-संथारएण पडिलाभेमाणे विहरइ।" [ भगवती० ]

इत्याहारवत् संयमाधारशरीरोपकारकत्वाद्वस्त्रादयोऽपि साधुभ्यो देयाः। संयमोपकारित्वं च वस्त्रस्य तावत् तृणग्रहणा-ऽनल-सेवानिवारणार्थत्वेन, धर्म-शुक्लध्यानसाधनार्थत्वेन, ग्लानपीडापरिहारार्थत्वेन, मृतकपरिष्ठापनार्थत्वेन च, यदाहुः—

"[3]तणगहणा-ऽनलसेवानिवारणा धम्म-सुक्कझाणट्ठा। दिट्ठं कप्पग्गहणं गिलाण-मरणट्ठया चेव॥१॥" [ओघनि० ७०६]

वाचकोऽप्याह—

"शीत-वाता-ऽऽतपैर्दंशैर्मशकैश्चापि खेदितः। मा सम्यक्त्वादिषु ध्यानं न सम्यक् संविधास्यति॥ १ ॥" [ ]

अतिथिसंविभागव्रतस्वरूपम्

इत्यादि। पात्रस्याप्युपयोगः—अशुद्धस्यान्नादेर्ग्रहणे[4] तत्परिष्ठापनम्, संसक्तान्नस्याविराधना,[5] प्रमादात् पूतरकसहितस्य [6]तण्डुलोदकादेर्ग्रहणे सति तत्परिष्ठापनासुखं च। एवमादयोऽन्येऽपि पात्रग्रहणे गुणाः। यदाहुः—

---

१ समणे अ निग्गंथे-शां. खं.॥ श्रमणान् निर्ग्रन्थान् प्रासुकैषणीयेन अशन-पान-खादिम-स्वादिमेन वस्त्र-पतद्ग्रह-कम्बल-पादप्रोञ्छनेन-पीठ-फलक-शय्या-संस्तारकेन प्रतिलम्भयन् विहरति। "तुंगियाए नयरीए बहवे समणोवासया परिवसंति ..समणे निग्गंथे फासुएसणिज्जेणं असणपाणखाइमसाइमेणं वत्थपडिग्गहकंबलपायपुंछणेणं पीढफलगसेज्जा-संथारएणं ओसहभेसज्जेण य पडिलाभेमाणा अहापडिग्गहिएहिं तवोकम्मेहिं अप्पाणं भावेमाणा विहरंति" इति भगवतीसूत्रे द्वितीये शतके पञ्चम उद्देशके सू० १०७॥ २ फासुएसणिज्जेणं-सं०। फासुएणं एसणिज्जेणं-मु.॥ ३ तृणग्रहणानलसेवानिवारणाय धर्मशुक्लध्यानार्थम्। दृष्टं कल्पग्रहणं ग्लान-मरणार्थं चैव॥ ४ ०र्ग्रहणेन तत्परि०-मु.॥ ५ ०राधनात्-मु.॥ ६ तंदुलो०-खं. सं.॥

“ छक्कायरक्खणट्ठा पायग्गहणं जिणेहिं पण्णत्तं । जे अ गुणा संभोए हवंति ते पायगहणे वि ॥ १ ॥
अतरंत-बाल-वुड्ढा सेहा-ऽऽएसा गुरू असहवग्गो । साहारणोग्गहाऽलद्धिकारणा पायगहणं तु ॥ २ ॥”

[ ओघनि० ६९१–६९२ ]

ननु तीर्थकराणां वस्त्रपात्रपरिभोगो न श्रूयते, तीर्थकरचरितानुकारश्च तच्छिष्याणां युक्तः । वदन्ति हि—

“ [2]जारिसयं गुरुलिंगं सीसेण वि तारिसेण [3]हवियव्वं ।” [ ] इति ।

मैवं वोचः । अच्छिद्रपाणयस्तीर्थकराः, अपि चन्द्रादित्यौ यावच्छिखा गच्छति न तु पानीयबिन्दुरप्यधः पतति चतुर्विधज्ञानबलाच्च ते संसक्तासंसक्तमन्नं सत्रसमत्रसं च जलादि ज्ञात्वा निर्दोषमेवोपाददते, इति नैषां पात्रधारणे गुणः । वस्त्रं तु दीक्षाकाले तीर्थकरा अपि गृह्णन्ति । यदाहुः—

“ [4]सव्वे वि एगदूसेण निग्गया जिणवरा चउव्वीसं ।
न य नाम अन्नलिंगे न य गिहिलिंगे कुलिंगे वा ॥ १ ॥” [ आवश्यकनि० २२७ ]

---

१ षट्कायरक्षणार्थं पात्रग्रहणं जिनैः प्रज्ञप्तम् । ये च गुणाः संभोगे भवन्ति ते पात्रग्रहणेऽपि ॥ अतरद्–बाल–वृद्धाः शैक्षका-ऽऽदेशाः गुरुः असहवर्गः । साधारणावग्रहाद् अलब्धिकारणात् पात्रग्रहणं तु ॥ २ यादृशं गुरुलिङ्गं शिष्येणापि तादृशेन भवितव्यम् । न हि भवति बुद्धशिष्यः श्वेतपटो नग्नश्रमणो वा ॥ ३ “ ण हि होई बुद्धसीसो सेयवडो णग्गसमणो वा । ” इति उत्तरार्धम् ॥
४ सर्वेऽपि एकदूष्येण निर्गता जिनवराश्चतुर्विंशतिः । न च नाम अन्यलिङ्गे न च गृहिलिङ्गे कुलिङ्गे वा ॥

॥ ४९९ ॥

परमार्षं च—

"से बेमि–जे[1] अईया[2] जे अणागया जे अ वट्टमाणा ते सव्वे सोवही[3] धम्मो देसियव्वो त्ति कट्टु एगं देवदूसमादाय निक्खमिंसु[4] निक्खमंति[5] निक्खमिस्संति[6] वा[7]।" [ ]

प्रव्रज्योत्तरकालं च सर्वबाधासहत्वान्न वस्त्रेण प्रयोजनमिति यथाकथञ्चित्तदपैतु नाम। गुरुलिङ्गानुवर्त्तनं च तच्छिष्याणां यदुक्तं तदैरावणानुकरणमिव सामान्यकरिणाम्। किं च, तीर्थकरानुकारमिच्छद्भिर्मठे निवसनमाधाकर्मिकादिपरिभोगस्तैलाभ्यङ्गोऽङ्गारशकटीसेवनं तृणपटीपरिधानं कमण्डलुधारणं बहुसाधुमध्ये निवासश्छद्मस्थानां धर्मदेशनायाः करणं शिष्यशिष्यादीक्षादिकं सर्वमविधेयं स्यात्, तच्च कुर्वन्ति।



कम्बलस्य च वर्षासु बहिर्निर्गतानां तात्कालिकवृष्टावप्कायरक्षणमुपयोगः, बाल-वृद्ध-ग्लाननिमित्तं वर्षत्यपि जलधरे भिक्षार्थं निःसरतां कम्बलावृतदेहानां न तथाविधाप्कायविराधना, उच्चार-प्रस्रवणादिपीडितानां कम्बलावृतदेहानां गच्छतामपि न तथाविधा विराधना। छत्राद्याच्छादितानां कम्बलमन्तरेणापि गच्छतां को दोष इति चेत्, न, "छत्तस्स य धारणट्ठाए" [ दशवै० ३।४ ] इत्यागमेन छत्रस्य प्रतिषिद्धत्वात्। रजोहरणं पुनः साक्षाज्जीवरक्षार्थं प्रतिलेखनाकारित्वा-

१ सः [ अहं ] ब्रवीमि–येऽतीता येऽनागता ये च वर्तमानास्ते सर्वे सोपधिर्धर्मो देशितव्य इति कृत्वा एकं देवदूष्यमादाय निरक्रमिषुः निष्क्रामन्ति निष्क्रमिष्यन्ति वा॥ २ अईआ–खं.॥ ३ सोवहिधम्मो–मु.॥ ४ निक्खिमिंसु–शां. खं.। निखिमंसु–सं॥ ५ निक्खमंति–शां.। निक्खिमिंति–खं.। ६ निक्खिमिस्संति–शां. खं. सं.॥ ७ "तथा चागमः" इत्युल्लेखपुरस्सरं पाठोऽयं किञ्चिच्छब्दभेदेन आचाराङ्गसूत्रस्य नवमाध्ययने प्रथमोद्देशके द्वितीयगाथाया वृत्तौ शीलाङ्काचार्यैरपि उद्धृतः पृ० ३०१॥

दुपयोगीति कस्तत्र विवादं कुर्यात् ? । मुखवस्त्रमपि सम्पातिमजीवरक्षणादुष्णमुखवातविराध्यमानबाह्यवायुकायजीवरक्षणान्मुखे धूलिप्रवेशरक्षणाच्चोपयोगि । पीठ-फलकयोर्वर्षासु पनक-कुन्थ्वादिसंसक्तायां भुवि भूशयनस्य प्रतिषिद्धत्वाच्छयनासनादावुपयोगः । शय्या-संस्तारकयोश्च शीतोष्णकालयोः शयनादावुपयोगः । वसतिश्च निवासार्थं यतीनामत्यन्तोपकारिणी । यदाह—

“ जो[1] देइ उवस्सयं मुणिवराण णेगगुणजोगधारीणं । तेणं दिण्णा वत्थ-ऽन्न-पाण-सयणा-ऽऽसणविकप्पा ॥ १ ॥
जं तत्थ ठिआण भवे सव्वेसिं तेण तेसिमुवओगो । रक्खपरिपालणा वि अ, तो दिण्णा एव ते सव्वे ॥ २ ॥
सीया-ऽऽयव-चोराणं दंसाणं तह य वाल-मसगाणं । रक्खंतो मुणिवसभे सुरलोगसुहं समज्जिणइ ॥ ३॥” [ ]

एवं यदन्यदप्यौघिकमौपग्रहिकं वा धर्मोपकरणं तत् साधूनां धारयतां न दोषः, तद्दातॄणां तु सुतरां गुण एव ।

उपकरणमानं तु—

“ जिणा[2] बारसरूवा[3] उ, थेरा चोद्दसरूविणो । अज्जाणं पण्णवीसं तु, अओ उड्ढं उवग्गहो ॥१॥” [ओघनि० ६७१]

इत्याद्यागमादवगन्तव्यम्, इह तु ग्रन्थगौरवभयान्न प्रतन्यते ।

---

१ जो अ देइ–खं. । यो ददात्युपाश्रय मुनिवरेभ्योऽनेकगुणयोगधारिभ्यः । तेन दत्ता वस्त्रा-ऽन्न-पान-शयना-ऽऽसनविकल्पाः ॥ यत् तत्र स्थितानां भवेत् सर्वेषां तेन तेषामुपयोगः । रक्षा परिपालनाऽपि च ततो दत्ता एव ते सर्वे ॥ शीता-ऽऽतप-चौरेभ्यो दंशेभ्यो तथा च व्याल-मशकेभ्य । रक्षन् मुनिवृषभान् सुरलोकसुखं समर्जयति ॥ २ जिना द्वादशरूपाः, स्थविराः चतुर्दशरूपाः । आर्याणां पञ्चविंशतिः, अत ऊर्ध्वमुपग्रहः ॥ ३ ०रूवाइं–ओघ० । जिनानां “जिनकल्पिकानां द्वादश रूपाणि स्थविराणां चतुर्दश रूपाणि .. , आर्याणां भिक्षुणीनां पञ्चविंशत्यवयव ओघतः ..., अत ऊर्ध्वमुपग्रहः प्रमाणात् सर्वेषामेव य उपधिर्भवति स उपग्रहो वेदितव्यः” इति ओघनिर्युक्तिवृत्तौ ॥

“ पत्तं १ पत्ताबंधो २ पायट्ठवणं च ३ पायकेसरिया ४ । पडलाइं ५ रयत्ताणं ६ गुच्छओ ७ पायनिज्जोगो ॥ ६६८ ॥ तिन्नेव य पच्छागा १० रयहरणं चेव ११ होई मुहपत्ती १२ । एसो दुवालसविहो उवही जिणकप्पियाणं तु ॥ ६६९ ॥ एए चेव

॥ ५०१ ॥

इह वृद्धोक्ता सामाचारी—श्रावकेण पोषधं पारयता नियमात् साधुभ्यो दत्त्वा भोक्तव्यम्। कथम्? यदा भोजनकालो भवति तदा आत्मनो विभूषां कृत्वा प्रतिश्रयं गत्वा साधून् निमन्त्रयते भिक्षां गृह्णीतेति।

१ तुलना—पञ्चाशकवृ० पृ० २७। श्रावकप्रज्ञप्तिवृत्तिः [ हरिभद्रसूरिविरचिता ] [ गाथा ३२६ ]। धर्मसंग्रहवृत्तिः पृ० ९५। "एत्थ सामाचारी-सावगेण पोसधं पारेंतेण णियमा साधूणमदातुं ण पारेयव्वं, अन्नदा पुण अनियमो-दातुं वा पारेति, पारितो वा देइ त्ति। तम्हा पुव्वं साधूणं दातुं पच्छा पारेतव्वं, कधं?, जाधे देशकालो ताधे अप्पणो सरीरस्स विभूसं काउं साधुपडिस्सयं गंतुं णिमंतेति—भिक्खं गेण्हध त्ति। साधूण का पडिवत्ती?, ताधे अण्णो पडलं अण्णो मुहणंतयं अण्णो भाणं पडिलेहेति, मा अतराइयदोसा ठविंतगदोसा य भविस्संति। सो जति पढमाए पोरुसीए णिमंतेति, अत्थि णमोक्कारसहिताइतो तो गेज्झति, अधव णत्थि ण गेज्झति, तं वहितव्वयं होति, जति घणं लगेज्जा ताधे गेज्झति, संचिक्खाविज्जति, जो वा उग्घाडाए पोरिसीए पारेति पारणइत्तो अण्णो वा तस्स दिज्जति, पच्छा तेण सावगेण समगं गम्मति, संघाडगो वच्चति, एगो ण वट्टति पेसितुं, साधू पुरओ, सावगो मग्गतो। घरं णेऊण आसणेण उवणिमंतिज्जति, जति णिविट्ठगा तो लट्ठयं, अध ण णिवेसंति तधा वि विणयो पउत्तो, ताधे भत्तं पाणं सयं चेव देति, भाणं धरेति भज्जा देति, अथवा ठितीओ अच्छति जाव दिण्णं, साधू वि सावसेसं दव्वं गेण्हति, पच्छाकम्मपरिहरणट्ठा, दातूण वंदित्तुं विसज्जेति, विसज्जेत्ता अणुगच्छति, पच्छा सयं भुंजति, जं च किर साधूण ण दिण्णं तं सावगेण ण भोतव्वं, जति पुण साधू णत्थि ताधे देसकालवेलाए दिसालोगो कातव्वो, विसुद्धभावेण चिंतियव्वं-जति साधुणो होंता तो णित्थारितो होंतो त्ति विभासा।" इति हरिभद्रसूरिविरचितायाम् आवश्यकसूत्रवृत्तौ प्रत्याख्यानाध्ययने पृ० ८३७–८३८। एतदेव आवश्यकचूर्णावपि क्वचित् किञ्चिच्छन्दभेदेन वर्णितमस्ति पृ० ३०५–३०६॥

........ पत्तं १ पत्ताबंधो २ दुवालस, मत्तग १३ अइरेग चोलपट्टो य १५। एसो चउद्दसविहो उवही पुण थेरकप्पम्मि॥ ६७०॥.... पायट्ठवणं च ३ पायकेसरिया ४। पडलाइं ५ रयत्ताणं च ६ गोच्छओ ७ पायनिज्जोगो॥ ६७४॥ तिन्नेव य पच्छागा १० रयहरणं चेव ११ होइ मुहपत्ती १२। तत्तो य मत्तगो खलु १३ चउदसमो कमढगो चेव १४ ॥ ६७५॥ उग्गहणंतग १५ पट्टो १६ अद्धोरुग १७ चलणिया य बोद्धव्वा १८। अब्भितर १९बाहिरियंसणियं २० तह कंचुगे चेव २१॥ ६७६॥ उक्कच्छिय २२ वेकच्छी २३ संघाडी चेव २४ खंधकरणी य २५॥ ओहोवहिम्मि एए अज्जाणं पन्नवीसं तु॥ ६७७॥" इति ओघनिर्युक्तौ॥

साधूनां च तं प्रति का प्रतिपत्तिः ? उच्यते—तदैकः पटलकमन्यो मुखानन्तकमपरो भाजनं प्रत्यवेक्षते, माऽन्तरायदोषाः स्थापनादोषा वा भूवन्निति। स च यदि प्रथमायां पौरुष्यां निमन्त्रयते, अस्ति च नमस्कारसहितप्रत्याख्यानी, ततस्तद् गृह्यते। अथ नास्त्यसौ तदा न गृह्यते, यतस्तद्वोढव्यं भवति। यदि पुनर्घनं लगेत्, तदा गृह्यते संस्थाप्यते च; यो वा उद्घाटपौरुष्यां पारयति [1]पारणकवानन्यो वा तस्मै तद्दीयते। पश्चात्तेन श्रावकेण समं सङ्घाटको व्रजति, एको न वर्तते प्रेषयितुं, साधू पुरतः, श्रावकस्तु मार्गतो गच्छति। ततोऽसौ गृहं नीत्वा तावासनेनोपनिमन्त्रयते; यदि निविशेते तदा भव्यम्, अथ न निविशेते तथापि विनयः प्रयुक्तो भवति। ततोऽसौ भक्तं पानं च स्वयमेव ददाति, भाजनं वा धारयति, स्थित एव वाऽऽस्ते यावद्दीयते। साधू अपि पश्चात्कर्मपरिहरणार्थं सावशेषं गृह्णीतः। ततो वन्दित्वा विसर्ज्जयति, अनुगच्छति च कतिचित् पदानि, ततः स्वयं भुङ्क्ते।

यदि पुनस्तत्र ग्रामादौ साधवो न भवन्ति तदा भोजनवेलायां द्वारावलोकनं करोति, विशुद्धभावेन च चिन्तयति—यदि साधवोऽभविष्यन् तदा निस्तारितोऽहमभविष्यमिति। एष पोषधपारणके विधिः। अन्यदा तु दत्त्वा भुङ्क्ते, भुक्त्वा वा ददातीति।

[2]अत्रान्तरश्लोकाः—

अन्नादीनामिदं दानमुक्तं धर्मोपकारिणाम्। धर्मोपकारबाह्यानां स्वर्णादीनां न तन्मतम् ॥ १ ॥

---

१ पारणके दातव्यो वा तस्मै–ख. घ. ॥ २ अत्रान्तरे–खं.।

दत्तेन येन दीप्यन्ते क्रोध-लोभ-स्मरादयः । न तत् स्वर्णं चरित्रिभ्यो दद्याच्चारित्रनाशनम् ॥ २ ॥
यस्यां विदार्यमाणायां म्रियन्ते जन्तुराशयः । क्षितेस्तस्याः प्रशंसन्ति न दानं करुणापराः ॥ ३ ॥
यद्यच्छस्त्रं महाहिंस्रं तत्तद्येन विधीयते । तदहिंस्रमना लोहं कथं दद्याद्विचक्षणः ? ॥ ४ ॥
संमूर्च्छन्ति सदा यत्र भूयांसस्त्रसजन्तवः । तेषां तिलानां को दानं मनागप्यनुमन्यते ? ॥ ५ ॥
दद्यादर्द्धप्रसूतां गां यो हि पुण्याय पर्वणि । म्रियमाणामिव हहा ! वर्ण्यते सोऽपि धार्मिकः ॥ ६ ॥
यस्या अपाने तीर्थानि मुखेनाश्नाति याऽशुचिम् । तां मन्वानाः पवित्रां गां धर्माय ददते जडाः ॥ ७ ॥
प्रत्यहं दुह्यमानायां यस्यां वत्सः प्रपीड्यते । खुरादिभिर्जन्तुघ्नीं तां दद्याद् गां श्रेयसे कथम् ? ॥ ८ ॥
स्वर्णमयी रूप्यमयी तिलमय्याज्यमय्यपि । विभज्य भुज्यते धेनुस्तद्दातुः किं फलं भवेत् ? ॥ ९ ॥
कामगर्द्धकरी बन्धुस्नेहद्रुमदवानलः । कलेः कलितरुर्दुर्गदुर्गतिद्वारकुञ्चिका ॥ १० ।
मोक्षद्वारार्गला धर्मधनचौरी विपत्करी । या कन्या दीयते साऽपि श्रेयसे कोऽयमागमः ? ॥ ११ ॥

विवाहसमये मूढैर्धर्मबुद्ध्या विधीयते । यत्तु यौतकदानं[1] तत् स्याद् भस्मनि हुतोपमम् ॥ १२ ॥
यत् संक्रान्तौ व्यतीपाते वैधृते पर्वणोरपि । दानं प्रवर्त्तितं लुब्धैर्मुग्धसंमोहनं हि तत् ॥ १३ ॥
मृतस्य तृप्त्यै ये दानं तन्वन्ति तनुबुद्धयः । ते हि सिञ्चन्ति मुसलं सलिलैः पल्लवेच्छया ॥ १४ ॥

---

१ " यौतकं युतयोर्देयम् ·······युतयोर्वधूवरयोरिदं यौतकम् " इणि सवृत्तिकेऽभिधानचिन्तामणौ श्लो० ५२० ॥

विप्रेभ्यो भोजने दत्ते प्रीयन्ते पितरो यदि । एकस्मिन् भुक्तवत्यन्यः पुष्टः किं न भवेदिह ? ॥ १५ ॥
अपत्यदत्तं चेद्दानं पितॄणां पापमुक्तये । पुत्रेण[1] तप्ते तपसि तदा मुक्तिं पिताऽऽप्नुयात् ॥ १६ ॥
गङ्गा-गयादौ दानेन तरन्ति पितरो यदि । तत्रोक्ष्यन्तां[2] प्ररोहाय गृहे दग्धा[3] द्रुमास्तदा ॥ १७ ॥
गतानुगतिकैः क्लृप्तं न दद्यादुपयाचितम् । फलन्ति हन्त ! पुण्यानि, पुण्याभावे मुधैव तत् ॥ १८ ॥
न कोऽपि शक्यते त्रातुं पूर्णे काले सुरैरपि । दत्तोपयाचितैस्तेषां विम्बैस्त्राणं महाद्भुतम् ॥ १९ ॥
महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयन् । दाताऽऽत्मानं च पात्रं च पातयेन्नरकावटे ॥ २० ॥
ददद्धर्मधिया दाता न तथाऽघेन लिप्यते । जानन्नपि यथा दोषं ग्रहीता मांसलोलुपः ॥ २१ ॥
अपात्रप्राणिनो हत्वा[ऽ]पात्रं पुष्णन्ति ये पुनः । अनेकभेकघातेन ते प्रीणन्ति भुजङ्गमम् ॥ २२ ॥
न स्वर्णादीनि दानानि देयानीत्यर्हतां मतम् । अन्नादीन्यपि पात्रेभ्यो दातव्यानि विपश्चिता ॥ २३ ॥
ज्ञान-दर्शन-चारित्ररूपरत्नत्रयान्विताः । समितीः पञ्च बिभ्राणा गुप्तित्रितयशालिनः ॥ २४ ॥
महाव्रतमहाभारधरणैकधुरन्धराः । परीषहोपसर्गारिचमूजयमहाभटाः ॥ २५ ॥
निर्ममत्वाः शरीरेऽपि किमुतान्येषु वस्तुषु ? । धर्मोपकरणं मुक्त्वा परित्यक्तपरिग्रहाः ॥ २६ ॥
द्विचत्वारिंशता दोषैरदुष्टं भैक्षमात्रकम् । आददाना वपुर्धर्मयात्रामात्रप्रवृत्तये ॥ २७ ॥
नवगुप्तिसनाथेन ब्रह्मचर्येण भूषिताः । दन्तशोधनमात्रेऽपि परस्वे विगतस्पृहाः ॥ २८ ॥

१ पुत्रेणा०-खं ॥ २ तत्रोप्यन्तां—क ख च ॥ ३ वह्निदग्धा—ञ ॥

माना-ऽपमानयोर्लाभा-ऽलाभयोः सुख-दुःखयोः । प्रशंसा-निन्दयोर्हर्ष-शोकयोस्तुल्यवृत्तयः ॥ २९ ॥
कृत-कारिता-ऽनुमतिप्रभेदारम्भवर्जिताः । मोक्षैकतानमनसो यतयः पात्रमुत्तमम् ॥ ३० ॥
सम्यग्दर्शनवन्तस्तु देशचारित्रयोगिनः । यतिधर्मेच्छवः पात्रं मध्यमं गृहमेधिनः ॥ ३१ ॥
सम्यक्त्वमात्रसतुष्टा व्रत-शीलेषु निःसहाः[1] । तीर्थप्रभावनोद्युक्ता जघन्यं पात्रमुच्यते ॥ ३२ ॥
कुशास्त्रश्रवणोत्पन्नवैराग्या[2] निष्परिग्रहाः । ब्रह्मचर्यरताः स्तेय-मृषा-हिंसापराङ्मुखाः ॥ ३३ ॥
घोरव्रता मौनजुषः कन्द-मूल-फलाशिनः । शिलोञ्छवृत्तयः पत्रभोजिनो भैक्षजीविनः ॥ ३४ ॥
कषायवस्त्रा निर्वस्त्राः शिखा-मौण्ड्य-जटाधराः । एकदण्डास्त्रिदण्डा वा गृहा-ऽरण्यनिवासिनः ॥ ३५ ॥
पञ्चाग्निसाधका ग्रीष्मे गलन्तीधारिणो हिमे । भस्माङ्गरागाः खट्वाङ्ग-कपाला-ऽस्थिविभूषणाः ॥ ३६ ॥
स्वबुद्ध्या धर्मवन्तोऽपि मिथ्यादर्शनदूषिताः । जिनधर्मद्विषो मूढाः कुपात्रं स्युः कुतीर्थिनः[3] ॥ ३७ ॥
प्राणिप्राणापहरणा मृषावादपरायणाः । परस्वहरणोद्युक्ताः अकामं कामगर्दभाः ॥ ३८ ॥
परिग्रहारम्भरता न सन्तुष्टाः कदाचन । मांसाशिनो मद्यरताः कोपनाः कलहप्रियाः ॥ ३९ ॥
कुशास्त्रमात्रपाठेन सदा पण्डितमानिनः । तत्त्वतो नास्तिकप्राया अपात्रमिति शंसिताः ॥ ४० ॥
इत्यपात्र कुपात्रं च परिहृत्य विवेकिनः । पात्रदाने प्रवर्त्तन्ते सुधियो मोक्षकाङ्क्षिणः ॥ ४१ ॥
दानं स्यात् सफलं पात्रे कुपात्रा-ऽपात्रयोरपि[4] । पात्रे धर्माय तच्च स्यादधर्माय तदन्ययोः ॥ ४२ ॥

१ निःस्पृहाः—ग ण ॥ २ ०ग्यान्निष्प०—सं. मु. ॥ ३ कुतीर्थिकाः—ख च ञ ॥ ४ न त्वपात्रकुपात्रयोः—ञ ण ॥

पयःपानं पन्नगानां[1] यथा विपविवृद्धये। कुपात्रा-ऽपात्रयोर्दानं तद्वद्[2] भवविवृद्धये ॥ ४३ ॥
स्वादु क्षीरं यथा क्षिप्तं कटुवलाबुनि दुष्यति। दानं दत्तं शुद्धमपि कुपात्रा-ऽपात्रयोस्तथा ॥ ४४ ॥
दत्ता कुपात्रा-ऽपात्राभ्यां सर्वोर्व्यपि फलाय न। पात्राय दत्तो ग्रासोऽपि श्रद्धया स्यान्महाफलः ॥ ४५ ॥
इयं मोक्षफले दाने पात्रापात्रविचारणा। दयादानं तु तत्त्वज्ञैः कुत्रापि न निषिध्यते ॥ ४६ ॥

शुद्ध्यशुद्धिकृता भङ्गाश्चत्वारः पात्र-दानयोः। आद्यः शुद्धो [3]द्वितीयस्तु पाक्षिकोऽन्यौ तु निष्फलौ ॥ ४७ ॥
दानेन भोगानाप्नोतीत्यविमृश्यैव भाष्यते। अनर्घ्यपात्रदानस्य क्षुद्रा भोगाः कियत् फलम्? ॥ ४८ ॥
पात्रदाने फलं मुख्यं मोक्षः सस्यं[4] कृषेरिव। पलालमिव भोगस्तु फलं स्यादानुषङ्गिकम् ॥ ४९ ॥
जिनानां दानदातारः प्रथमे[5] मोक्षगामिनः। धनादयो दानधर्माद् बोधिबीजमुपार्जयन् ॥ ५० ॥
जिनानां पारणे भिक्षादातॄणां मन्दिराजिरे। सुगन्ध्युदक-पुष्पस्रग्-रत्नवृष्टिं[6] व्यधुः सुराः ॥ ५१ ॥
इत्यतिथिसंविभागव्रतमेतदुदीरितं प्रपञ्चेन। देयादेये पात्रापात्रे ज्ञात्वा यथोचितं कुर्यात् ॥ ५२ ॥ ८७ ॥

यद्यपि विवेकिनः श्रद्धावतः सत्पात्रदाने साक्षात् पारम्पर्येण वा मोक्षः फलं, तथापि मुग्धजनानुग्रहार्थं पात्रदानस्य प्रासङ्गिकं फलमाह—

१ भुजङ्गानां-मु. ॥ २ तथा भ०-शां.। तद्वत् भवति पाप्मने-क ॥ ३—ग ण ॥ द्वितीयो वैकल्पिकोऽन्यौ-मु. ॥ ४ शस्यं-शां. ॥ ५ प्रथमा-खं. ॥ ६—क ग ञ ड ण ॥ हर्षोत्कर्षपराः सद्यः पुष्पवृष्टिं-मु. ॥

पश्य सङ्गमको नाम सम्पदं वत्सपालकः ।
चमत्कारकरीं प्राप मुनिदानप्रभावतः ॥ ८८ ॥

पश्येत्यनेन मुग्धबुद्धिमभिमुखयति। सङ्गमको नामेति सङ्गमकाभिधानः, वत्सपालो वत्सपालनजीविकः, चमत्कारकरीं सम्पदं प्राप, कुतः ? मुनिदानप्रभावतः । अत्र सङ्गमकस्य पारम्पर्येण मोक्षोऽपि फलमस्ति तथापि प्रासङ्गिकफलाभिधानरभसेन स नोक्तः। सङ्गमकचरितं च सम्प्रदायगम्यम् । स चायम्—

मगधेष्वस्ति निःसीमरत्नप्राग्भारभासुरम् । पुरं समुद्रवद् राजगृहं कुलगृहं श्रियः ॥ १ ॥
राजा पुरं तदपरैरनुल्लङ्घितशासनः । शशास श्रेणिकः पाकशासनः स्वःपुरीमिव ॥ २ ॥
शालिग्रामेऽथ धन्येति काचिदुंच्छन्नवशिका । बालं सङ्गमकं नाम समादाय समाययौ ॥ ३ ॥
वसंस्तत्र स पौराणां वत्सरूपाण्यचारयत् । अनुरूपा ह्यसौ रोरबालानां मृदुजीविका ॥ ४ ॥
[3]अथापरेद्युः संजाते तत्र कस्मिंश्चिदुत्सवे । पायसं सङ्गमोऽपश्यद् भुज्यमानं गृहे गृहे ॥ ५ ॥
गत्वा स्वगेहे जननीं ययाचे सोपि पायसम् । साऽप्युवाच दरिद्राऽस्मि मद्गेहे पायसं कुतः ? ॥ ६ ॥
बालेन तेनाज्ञतया याच्यमाना मुहुर्मुहुः । स्मरन्ती पूर्वविभवं तारतारं रुरोद सा ॥ ७ ॥

---

१ ०जीवकः-मु. ॥ २ ०दुच्छिन्न०-मु. त्रिषष्टि० १०।१०।५७॥ ३ इत आरभ्य १२५ श्लोकपर्यन्तं प्रायः समानाः श्लोकाः त्रिषष्टिशलाकापुरुषचरिते १०।१०।५९-१८० ॥ ४ तारं तारं-ख. ग च ड ॥

तस्या रुदितदुःखेनानुविद्धहृदया इव । आगत्य प्रतिवेशिन्यः[1] पप्रच्छुर्दुःखकारणम् ॥ ८ ॥
ताभ्योऽभ्यधत्त सा दुःखकारणं गद्गदाक्षरैः । क्षीराद्यदुश्च तास्तस्यै साऽपचत् पायसं ततः ॥ ९ ॥
खण्डाज्यपायसैर्भृत्वा स्थालं बालस्य तस्य सा । आर्पयत् प्रययौ चान्तर्गृहं कार्येण केनचित् ॥ १० ॥
अत्रान्तरे च कोऽप्यागान्मुनिर्मासमुपोषितः । पारणाय भवोदन्वत्तारणायास्य नौरिव ॥ ११ ॥
सोऽचिन्तयदिदं चिन्तामाणिक्यमिव चेतनम् । जङ्गमः कल्पशाखीव कामधेनुरिवापशुः ॥ १२ ॥
साधु साधु महासाधुर्मद्भाग्यैरयमाययौ । कुतोऽन्यथा वराकस्य ममेदृक्पात्रसङ्गमः ॥ १३ ॥
भाग्योदयेन केनापि ममाद्य समपद्यत । चित्तं वित्तं च पात्रं च त्रिवेणीसङ्गमो ह्ययम् ॥ १४ ॥
इत्यसौ स्थालमुत्पाट्य पायसं साधवे ददौ । जग्राहानुग्रहायास्य महाकारुणिको मुनिः ॥ १५ ॥
ययौ च स मुनिर्गेहान्मध्याद् धन्याऽपि निर्ययौ । मन्ये भुक्तमनेनेति ददौ सा पायसं पुनः ॥ १६ ॥
तत्पायसमतृप्तः सन्नाकण्ठं बुभुजेऽथ सः । तदजीर्णेन यामिन्यां स्मरन् साधुं व्यपद्यत ॥ १७ ॥
तेन दानप्रभावेण सोऽथ राजगृहे पुरे । गोभद्रेभ्यस्य भार्याया भद्राया उदरेऽभवत् ॥ १८ ॥
शालिक्षेत्रं सुनिष्पन्नं स्वप्नेऽपश्यच्च सा ततः । भर्तुः शशंस सोऽप्यस्याः सूनुः स्यादित्यचीकथत् ॥ १९ ॥
चेद्दानधर्मकर्माणि करोमीति बभार सा । दोहदं तं तु गोभद्रः पूरयामास भद्रधीः ॥ २० ॥
पूर्णे काले ततो भद्रा द्युतिद्योतितदिग्मुखम् । असूत तनयं रत्नं विदूरगिरिभूरिव ॥ २१ ॥

---

१ प्रतिवेशान्यः—सं. ॥ प्रतिवेश्मिन्यः—मु. । त्रिषष्टि० १०।१०।६३ ॥ प्रातिवेश्मिन्यः—क ख च ॥

॥ ५१० ॥

अतिथिसंविभागव्रते लङ्मकस्य [ शालिभद्रस्य ] कथा

दृष्टस्वप्नानुसारेण सूनोस्तस्य शुभे दिने । चक्रतुः पितरौ शालिभद्र इत्यभिधां शुभाम् ॥ २२ ॥
धात्रीभिः[1] पञ्चभिः पाल्यमानः स ववृधे क्रमात् । किञ्चिदूनाष्टवर्षः सन् पित्राऽप्यध्यापितः कलाः ॥ २३ ॥
[2]संप्राप्तयौवनश्चासौ युवतीजनवल्लभः । सवयोभिः समं रेमे प्रद्युम्न इव नूतनः ॥ २४ ॥
तत्पुरश्रेष्ठिनोऽथैत्य कन्या द्वात्रिंशतं निजाः । प्रदातुं शालिभद्राय भद्रानाथं ययाचिरे ॥ २५ ॥
अथ प्रहृष्टो गोभद्रः शालिभद्रेण सादरम् । सर्वलक्षणसंपूर्णाः कन्यकाः पर्यणाययत् ॥ २६ ॥
शालिभद्रस्ततो रम्ये विमान इव मन्दिरे । विललास समं ताभिः पतिर्दिविषदामिव ॥ २७ ॥
विवेदानन्दमग्नोऽयं न रात्रिं न च वासरम् । तस्यापूरयतां भोगसामग्रीं पितरौ स्वयम् ॥ २८ ॥
श्रीवीरपादमूलेऽथ गोभद्रो व्रतमग्रहीत् । कृत्वा चानशनं मृत्वा देवलोकं जगाम च[3] ॥ २९ ॥
अवधिज्ञानतो ज्ञात्वा शालिभद्रं निजात्मजम् । तत्पुण्यावर्जितः सोऽभूत् पुत्रवात्सल्यतत्परः ॥ ३० ॥
दिव्यानि वस्त्रनेपथ्यादीन्यस्य प्रतिवासरम् । सभार्यस्यार्पयामास कल्पशाखीव सोऽमरः ॥ ३१ ॥
यद्यन्मर्त्योचितं कार्यं भद्रा तत्तदसाधयत् । पूर्वदानप्रभावेण भोगान् सोऽभुङ्क्त केवलम् ॥ ३२ ॥
वणिग्भिः कैश्चिदन्येद्युर्गृहीत्वा रत्नकम्बलान् । शिश्रिये श्रेणिकस्तांश्च महार्घत्वेन नाग्रहीत् ॥ ३३ ॥
ततस्ते वणिजो जग्मुः शालिभद्रनिकेतनम् । तदुक्तार्घेण तान् भद्राऽप्यग्रहीद् रत्नकम्बलान् ॥ ३४ ॥

---

१ पाल्यमानः स धात्रीभिः पञ्चभिर्ववृधे क्रमात्—शां. खं. ॥ २ स प्राप्त०—शां. खं. ॥ ३ स–शां. । सः–क ॥

मद्योग्यो गृह्यतामेको महामूल्यो[1]ऽपि कम्बलः । इत्यूचे चेल्लणादेव्या तदा च श्रेणिको नृपः ॥ ३५ ॥
राज्ञाऽपि मूल्यपूर्वं ते कम्बलं वणिजोऽर्थिताः । भद्रा जग्राह तान् सर्वान् कम्बलानित्यचीकथन् ॥ ३६ ॥
श्रेणिकः प्राहिणोदेकं प्रवीणं पुरुषं ततः । भद्रापार्श्वे मूल्यदानात् कम्बलादानहेतवे ॥ ३७ ॥
याचिता तेन भद्रोचे छित्त्वा तान् रत्नकम्बलान् । शालिभद्रप्रियापादप्रो[2]ञ्छनीकृतवत्यहम् ॥ ३८ ॥
कार्यं निष्पद्यते किञ्चिज्जीर्णैश्चेद्रत्नकम्बलैः । तद्[3] गच्छाऽऽपृच्छय राजानमागच्छामून् गृहाण च ॥ ३९ ॥
आख्यद् गत्वा स तद्राज्ञे[4] राज्यूचे चेल्लणाऽप्यदः । पश्यास्माकं वणिजां च रीति-हेम्नोरिवान्तरम् ॥ ४० ॥
तमेव पुरुषं प्रेष्य श्रेणिकेन कुतूहलात् । आकारिते शालिभद्रे भद्रोपेत्य व्यजिज्ञपत् ॥ ४१ ॥
बहिर्नहि महीनाथ ! जातु याति मदात्मजः । प्रसादः क्रियतां देव ! तद् गृहागमनेन मे ॥ ४२ ॥
कौतूहलाच्छ्रेणिकोऽपि तत्तथा प्रत्यपद्यत । तं च क्षणं प्रतीक्ष्याथ साऽग्रे भूत्वा गृहं ययौ ॥ ४३ ॥
विचित्रवस्त्र-माणिक्य-चित्रकत्वङ्मयीं ततः । आराजहर्म्यं स्वगृहादट्टशोभां व्यधत्त सा ॥ ४४ ॥
तयाऽऽहूतस्ततो राजा कृतां सद्यः सुरैरिव । विभावयन् हट्टशोभां शालिभद्रगृहं ययौ ॥ ४५ ॥
स्वर्णस्तम्भोपरि प्रेङ्खदिन्द्रनीलाश्मतोरणम् । मौक्तिकस्वस्तिकश्रेणिदन्तुरद्वारभूतलम् ॥ ४६ ॥
दिव्यवस्त्रकृतोल्लोचं सुगन्धिद्रव्यधूपितम् । भुवि दिव्यविमानानां प्रतिमानमिव स्थितम् ॥ ४७ ॥

१ ०मूल्येपि-खं. । ०मूल्येन-त्रिषष्टि० १०।१०।९० ॥ २ प्रोञ्छनी०-खं. ॥ ३ तद् गत्वाऽऽपृ०-त्रिषष्टि० १०।१०-९४ ॥
४ तद् राज्ञो-शां.

॥ ५११ ॥

अतिथिसंविभागव्रते सङ्गमकस्य [शालिभद्रस्य] कथा

तद्विवेश विशामीशो विस्मयस्मेरलोचनः । भूमिकायां चतुर्थ्यां तु सिंहासन उपाविशत् ॥ ४८ ॥
सप्तम्यां भुवि भद्रैत्य शालिभद्रं ततोऽवदत् । इहायातः श्रेणिकोऽस्ति तं द्रष्टुं क्षणमेहि तत् ॥ ४९ ॥
अम्ब ! त्वमेव यं वेत्सि तमर्घं कारय स्वयम् । किं मया तत्र कर्त्तव्यं स भद्रामित्यभाषत ॥ ५० ॥
ततो भद्राऽप्युवाचैनं क्रेतव्यं वस्तु न ह्यदः । किन्त्वसौ सर्वलोकानां युष्माकमपि च प्रभुः ॥ ५१ ॥
तच्छ्रुत्वा शालिभद्रोऽपि सविषादमचिन्तयत् । धिक् सांसारिकमैश्वर्यं यन्ममाप्यपरः प्रभुः ॥ ५२ ॥
भोगिभोगैरिवैभिर्मे भोगैरलमतः परम् । दीक्षां मङ्क्षु ग्रहीष्यामि श्रीवीरचरणान्तिके ॥ ५३ ॥
एवं संवेगयुक्तोऽपि स मातुरुपरोधतः । सभार्योऽभ्येत्य राजानमनमद्विनयान्वितः ॥ ५४ ॥
सस्वजे श्रेणिकेनाथ स्वाङ्के सुत इवासितः । स्नेहाच्छिरसि चाघ्रातः क्षणाच्चाश्रूणि सोऽमुचत् ॥ ५५ ॥
ततो भद्रा जगादैवं देवायं मुच्यतां यतः । मनुष्यमाल्यगन्धेन मनुष्योऽप्येष बाध्यते ॥ ५६ ॥
देवभूयं गतः श्रेष्ठी सभार्यस्यास्य यच्छति । दिव्यनेपथ्यवस्त्राङ्गरागादीन् प्रतिवासरम् ॥ ५७ ॥
ततो राज्ञा विसृष्टोऽसौ ययौ सप्तमभूमिकाम् । इहैव भोक्तव्यमिति विज्ञप्तो भद्रया नृपः ॥ ५८ ॥
भद्रादाक्षिण्यतो राजा प्रत्यपद्यत तत्तथा । सद्यः साऽसाधयत् सर्वं श्रीमतां किं न सिध्यति ? ॥ ५९ ॥
सस्नौ स्नानीयतैलाम्बुचूर्णैस्तूर्णं ततो नृपः । अङ्गुलीयं तदङ्गुल्याः क्रीडावाप्यां पपात चँ ॥ ६० ॥

१ भद्रेत्य-शां. । त्रिषष्टि० १०।१०।१०४ ॥ २ ०वाचैवं-ख च ॥ ३ ०च्चास्रूणि-शां. ॥ ४ तत्-क ॥

यावदन्वेषयामास भूपतिस्तदितस्ततः । तावद्भद्राऽऽदिशद्दासीं वाप्यम्भोऽन्यत्र नाप्यताम् ॥ ६१ ॥
तथा कृते तया चित्रदिव्याभरणमध्यगम् । अङ्गाराभं स्वाङ्गुलीयं दृष्ट्वा राजा विसिष्मिये ॥ ६२ ॥
किमेतदिति राज्ञोक्ता दास्यवोचदिहान्वहम् । निर्माल्यं शालिभद्रस्य सभार्यस्य निधीयते ॥ ६३ ॥
सर्वथा धन्य एवैष धन्योऽहंमपि संप्रति । राज्ये यस्येदृशाः सन्ति विममर्शेति भूपतिः ॥ ६४ ॥
बुभुजे सपरीवारो भूभुजामग्रणीस्ततः । चित्रालङ्कारवस्त्राद्यैरर्चितश्च गृहं ययौ ॥ ६५ ॥
शालिभद्रोऽपि संसारविमोक्षं यावदिच्छति । अभ्येत्य धर्मसुहृदा विज्ञप्तस्तावदीदृशम् ॥ ६६ ॥
आगाच्चतुर्ज्ञानधरः सुरासुरनमस्कृतः । मूर्त्तो धर्म इवोद्याने धर्मघोषाभिधो मुनिः ॥ ६७ ॥
शालिभद्रस्ततो हर्षादधिरुह्य रथं ययौ । आचार्यपादान् वन्दित्वा साधूंश्चोपाविशत् पुरः ॥ ६८ ॥
स सूरिर्देशनां कुर्वन् नत्वा तेनेत्यपृच्छयत । भगवन् ! कर्मणा केन प्रभुरन्यो न जायते ? ॥ ६९ ॥
भगवानप्युवाचेदं दीक्षां गृह्णन्ति ये जनाः । अशेषस्यापि जगतः स्वामिभावं भजन्ति ते ॥ ७० ॥
यद्येवं नाथ ! तद् गत्वा निजामापृच्छ्य मातरम् । ग्रहीष्यामि व्रतमिति शालिभद्रो व्यजिज्ञपत् ॥ ७१ ॥
न प्रमादो विधातव्य इत्युक्तः सूरिणा ततः । शालिभद्रो गृहं गत्वा भद्रां नत्वेत्यभाषत ॥ ७२ ॥
धर्मः श्रीधर्मघोषस्य सूरेरद्य मुखाम्बुजात् । विश्वदुःखविमोक्षस्योपायभूतो मया श्रुतः ॥ ७३ ॥
अकार्षीः साध्विदं वत्स ! पितुस्तस्यासि नन्दनः । प्रशशंसेति भद्राऽपि शालिभद्रं प्रमोदतः ॥ ७४ ॥

१ •हमिति—खं. ॥ २ नराः-ख च ॥

॥ ५१३ ॥

अतिथिसंविभागव्रते सङ्गमकस्य [शालिभद्रस्य] कथा

सोऽप्यवोचदिदं मातरेवं चेत्तत् प्रसीद मे । ग्रहीष्यामि व्रतमहं ननु तस्य पितुः सुतः ॥ ७५ ॥
साऽप्यवादीदिदं वत्स ! युक्तस्तेऽसौ व्रतोद्यमः । किन्त्वत्र लोहचणकाश्चर्वणीया निरन्तरम् ॥ ७६ ॥
सुकुमारः प्रकृत्याऽपि दिव्यभोगैश्च लालितः । स्यन्दनं तर्णक इव कथं त्वं वक्ष्यसि व्रतम् ? ॥ ७७ ॥
शालिभद्रोऽप्युवाचैवं पुमांसो भोगलालिताः । असहा व्रतकष्टानां कातरा एव नेतरे ॥ ७८ ॥
त्यज भोगान् क्रमान्मर्त्यमाल्यगन्धान् सहस्व च । इत्यभ्यासाद् व्रतं वत्स ! गृह्णीया इत्युवाच सा ॥ ७९ ॥
शालिभद्रस्ततो भद्रावचनं प्रतिपद्य तत् । भार्यामेकां तूलिकां च मुञ्चति स्म दिने दिने ॥ ८० ॥
इतश्च तस्मिन् नगरे धन्यो नाम महाधनः । बभूव शालिभद्रस्य कनिष्ठभगिनीपतिः ॥ ८१ ॥
शालिभद्रस्वसा सांश्रु[1] स्नपयन्ती तु तं तदा । किं रोदिषीति तेनोक्ता जगादेति सगद्गदम् ॥ ८२ ॥
व्रतं ग्रहीतुं मे भ्राता त्यजत्येकां दिने दिने । भार्यां च तूलिकां चाहं हेतुना तेन रोदिमि ॥ ८३ ॥
य एवं कुरुते फेरुरिव भीरुस्तपस्व्यसौ । हीनसत्त्वस्तव भ्रातेत्यूचे धन्यः सनर्मकम् ॥ ८४ ॥
सुकरं चेद्व्रतं नाथ ! क्रियते किं न हि त्वया । एवं सहासमन्याभिर्भार्याभिर्जगदेऽथ सः ॥ ८५ ॥
धन्योऽप्यूचे व्रते विघ्नो भवत्यस्ताश्च पुण्यतः । अनुमन्त्र्योऽद्य मेऽभूवन् प्रव्रजिष्यामि तद् द्रुतम् ॥ ८६ ॥
ता अप्यूचुः प्रसीदेदमस्माभिर्नर्मणोदितम् । मा स्म त्याक्षीः श्रियोऽस्मांश्च मनस्विन् ! नित्यलालिताः ॥ ८७ ॥
अनित्यं स्त्री-धनाद्येतत् प्रोज्झ्य[2] नित्यपदेच्छया । अवश्यं प्रव्रजिष्यामीत्यालपन् धन्य उत्थितः ॥ ८८ ॥

१ साम्रु—शां. खं, । साश्रुः—सं ख च, त्रिषष्टि० १०।१०।१३७ ॥ धन्यं-ड ॥ २ प्रोज्झन् खा च ॥

त्वामनु प्रव्रजिष्याम एवमुक्तवतीश्च ताः । अन्वमन्यत धन्योऽपि धन्यंमन्यो महामनाः ॥ ८९ ॥
इतश्च वैभारगिरौ श्रीवीरः समवासरत् । विदाञ्चकार तं सद्यो धन्यो धर्मसुहृद्गिरा ॥ ९० ॥
दत्तदानः सदारोऽसावारुह्य शिबिकां ततः । भवभीतो महावीरचरणौ शरणं ययौ ॥ ९१ ॥
सदारः सोऽग्रहीद् दीक्षां ततो भगवदन्तिके । तच्छ्रुत्वा शालिभद्रोऽपि जितंमन्यः प्रतत्वरे ॥ ९२ ॥
सोऽन्वीयमानस्तदनु श्रेणिकेन महीभुजा । उपेत्य श्रीमहावीरपादमूलेऽग्रहीद् व्रतम् ॥ ९३ ॥
ततः सपरिवारोऽपि स्वामी सिद्धार्थनन्दनः । विहरन्नन्यतोऽगच्छत् सयूथ इव हस्तिराट् ॥ ९४ ॥
धन्यश्च शालिभद्रश्च तावभूतां बहुश्रुतौ । महत्तपश्च तेपाते खड्गधारासहोदरम् ॥ ९५ ॥
पक्षाद् मासाद् द्विमासात्[1] त्रिमास्या मासचतुष्टयात् । शरीरनिरपेक्षौ तौ चक्रतुः पारणं मुनी ॥ ९६ ॥
तपसा समजायेतां निर्मांस-रुधिराङ्गकौ । चर्मभस्त्रोपमौ शालिभद्र-धन्यौ महामुनी ॥ ९७ ॥
अन्येद्युः श्रीमहावीरस्वामिना सह तौ मुनी । आजग्मतू राजगृहं पुरं जन्मभुवं निजाम् ॥ ९८ ॥
ततः समवसरणस्थितं नन्तुं जगत्पतिम् । श्रद्धाऽतिशययोगेनाच्छिन्नमीयुर्जनाः पुरात् ॥ ९९ ॥
मासपारणके शालिभद्र-धन्यावुभावपि । काले विहर्तुं भिक्षार्थं भगवन्तं प्रणेमतुः ॥ १०० ॥

१ द्विमासात् त्रिमासान्मास०-शां. । द्विमास्यात्रिमास्या मास०-मु. । “ पात्रादिवर्जितादन्तोत्तरपदः समाहारे द्विगुः ” इति हैमे लिङ्गानुशासने । “ पात्रादिवर्जितमकारान्तमुत्तरपदं यस्य स द्विगुः समाहारे स्त्री........पञ्चपूली । पात्रादिवर्जित इति किम्? द्विपात्रं द्विमासं त्रिभुवनं चतुर्युगम् ” इति तस्य अवचूरौ ॥

॥ ५१५ ॥

मातृपार्श्वात् पारणं तेऽद्येत्युक्तः स्वामिना ततः । इच्छामीति भणन् शालिभद्रो धन्ययुतो ययौ ॥ १०१ ॥
गत्वा भद्रागृहद्वारि तावुभावपि तस्थतुः । तपःक्षामतया तौ च न केनाप्युपलक्षितौ ॥ १०२ ॥
श्रीवीरं शालिभद्रं च धन्यमप्यद्य वन्दितुम् । यामीति व्याकुला भद्राऽप्यज्ञासीदुत्सुका न तौ ॥ १०३ ॥
क्षणमेकमवस्थाय तत्र तौ जग्मतुस्ततः । महर्षी नगरद्वारप्रतोल्या च निरीयतुः ॥ १०४ ॥
तदाऽऽयान्ती पुरे तस्मिन्विक्रेतुं दधि-सर्पिषी । शालिभद्रस्य प्राग्जन्ममाता धन्याऽभवत्पुरः ॥ १०५ ॥
शालिभद्रं तु सा प्रेक्ष्य सञ्जातप्रस्नवस्तनी[1] । वन्दित्वा चरणौ भक्त्या द्वाभ्यामपि ददौ दधि ॥ १०६ ॥
श्रीवीरस्यान्तिके गत्वा तदालोच्य कृताञ्जलिः । शालिभद्रोऽवदत् स्वामिन् मातृतः पारणं कथम् ? ॥ १०७ ॥
सर्वज्ञोऽप्याचचक्षेऽथ शालिभद्रमहामुनेः । प्राग्जन्ममातरं धन्यामन्यदप्यन्यजन्मजम् ॥ १०८ ॥
कृत्वा पारणकं दध्नाऽऽपृच्छ्य च स्वामिनं ततः । वैभाराद्रिं ययौ शालिभद्रो धन्यसमन्वितः ॥ १०९ ॥
शिलातले शालिभद्रः सधन्यः प्रतिलेखिते । पादपोपगमं नाम तत्रानशनमाश्रयत् ॥ ११० ॥
तदा च भद्रा तन्माता श्रेणिकश्च महीपतिः । आजग्मतुर्भक्तियुक्तौ श्रीवीरचरणान्तिकम् ॥ १११ ॥
ततो भद्राऽवदद्धन्य-शालिभद्रौ क्व तौ मुनी ? । भिक्षार्थं नागतौ कस्मादस्मद्वेश्म जगत्पते ! ॥ ११२ ॥
सर्वज्ञोऽपि बभाषे तौ त्वद्वेश्मनि मुनी गतौ । ज्ञातौ न तु भवत्येहागमनव्यग्रचित्तया ॥ ११३ ॥
प्राग्जन्ममाता त्वत्सूनोर्धन्या यान्ती पुरं प्रति । ददौ दधि तयोस्तेन पारणं चक्रतुश्च तौ ॥ ११४ ॥

---

१ प्रस्नव–ड ॥

उभावथ महासत्त्वौ संत्वरौ[1] भवमुज्झितुम् । वैभारपर्वते गत्वाऽनशनं तौ प्रचक्रतुः ॥ ११५ ॥
श्रेणिकेन समं भद्रा वैभाराद्रिं ययौ ततः । तथास्थितावपश्यच्च तावश्मघटिताविव ॥ ११६ ॥
तत्कष्टमथ पश्यन्ती स्मरन्ती तत्सुखानि च । साऽरोदीद्रोदयन्तीव वैभाराद्रिं प्रतिस्वनैः ॥ ११७ ॥
आयातोऽपि गृहं वत्स ! मया[2] तु स्वल्पभाग्यया । न ज्ञातोऽसि प्रमादेनाप्रसादं मा कृथा मयि ॥ ११८ ॥
यद्यपि त्यक्तवानस्त्वं तथापि निजदर्शनात् । आनन्दयिष्यसि दृशौ पुरेत्यासीन्मनोरथः ॥ ११९ ॥
आरम्भेणामुना पुत्र ! शरीरत्यागहेतुना । मनोरथं तमपि मे भङ्क्तुमस्युद्यतोऽधुना[3] ॥ १२० ॥
प्रारब्धं यत्तपस्तत्र न ते विघ्नीभवाम्यहम्[4] । किन्त्वेतत् कर्कशतमं[5] शिलातलमितो भव ॥ १२१ ॥
अथोचे श्रेणिको हर्षस्थाने किं[6] नाम रोदिषि ? । ईदृग् यस्याः सुतः स्त्रीषु त्वं सैका[7] पुत्रवत्यसि ॥ १२२ ॥
तत्त्वज्ञोऽयं महासत्त्वस्त्यक्त्वा तृणमिव श्रियम् । प्रपेदे स्वामिनः पादान् साक्षादिव परं पदम् ॥ १३३ ॥
असौ जगत्स्वामिशिष्यानुरूपं तप्यते तपः । मुधाऽनुतप्यते मुग्धे ! किं त्वया स्त्रीस्वभावतः ॥ १२४ ॥
भद्रैवं बोधिता राज्ञा वन्दित्वा तौ महामुनी । विमनस्का निजं धाम जगाम श्रेणिकस्तथा ॥ १२५ ॥
मृत्वा ततस्तौ सर्वार्थसिद्धस्वर्गे बभूवतुः । सुरोत्तमौ त्रयस्त्रिंशत्सागरप्रमितायुषौ ॥ १२६ ॥

१ सत्वरं–ख च ॥ २ मया त्वं–शां. । मयका—त्रिषष्टि० १०।१०।१७४ ॥ ३ ०मभ्युद्यतो–सं. ॥ ४ विघ्नो भ. खं. ॥ ५ ०शमिमं–शां. ॥ ६ –क ग च ॥ किमम्ब रो०–मु. ॥ ७ –ख ङ ॥ त्वमेका–सं. मु. । सैका त्वं–त्रिषष्टि० १०।१०।१७७ ॥

सत्पात्रदानफलसम्पदमद्वितीयां, स प्राप सङ्गमक आयतिवर्द्धमानाम् ।
कार्यो नरैर्[1]वितथातिथिसंविभागे, भाग्यार्थिभिर्ननु ततः सततं प्रयत्नः ॥ १२७ ॥ ८८ ॥

[ इति सङ्गमककथानकम् ]

उक्तानि द्वादश व्रतानि, अथ तच्छेषमतिचाररक्षणलक्षणं प्रस्तोतुमाह—

द्वादशव्रतातिचारनिरूपणम्

**व्रतानि सातिचाराणि सुकृताय भवन्ति न ।**
**अतिचारास्ततो हेयाः पञ्च पञ्च व्रते व्रते ॥ ८९ ॥**

अतिचारो मालिन्यं, तद्युक्तानि व्रतानि न सुकृताय भवन्ति, तदर्थमेवैकैकस्मिन् पञ्च पञ्चातिचाराः परिहरणीयाः । [3]ननु सर्वविरतावेवातिचारा भवन्ति, संज्वलनोदय एव तेषामभिधानात् । यदाह—

"[4]सव्वे वि अ अइयारा संजलणाणं तु उदयतो हुंति ।
मूलच्छिज्जं पुण होइ बारसण्हं कसायाणं ॥ १ ॥" [ आव० नि० ११२ ]

---

१ नरैरपि तथा०–शां. ॥ २ [ ] एतदन्तर्गतः पाठो नास्ति शां. खं. सं, ॥ ३ सर्वमेतत् प्रायोऽक्षरशः पञ्चाशकवृत्तौ [ पृष्ठ० ८–९ ] वर्तते, तथा धर्मसंग्रहटीकायां पृ० ९६–९७ ॥ ४ सर्वेऽपि च अतिचाराः सञ्ज्वलनानां तूदयतो भवन्ति । मूलच्छेद्यं पुनर्भवति द्वादशानां कषायाणाम् ॥

संज्वलनोदयश्च सर्वविरतानामेव, देशविरतानां तु प्रत्याख्यानावरणोदय इति न देशविरतावतिचारसम्भवः। युज्यते चैतत्, अल्पीयस्त्वात्तस्याः, कुन्थुशरीरे व्रणाद्यभाववत्। तथाहि—प्रथमाणुव्रते स्थूल–सङ्कल्प–निरपराध–द्विविधं–त्रिविधेनेत्यादिविकल्पैर्विशेषितत्वेनातिसूक्ष्मतां गते देशाभावात् कथं देशविराधनारूपा अतिचारा भवन्तु? अतः सर्वनाश एव तस्योपपद्यते। महाव्रतेषु तु ते संभवन्ति, महत्त्वादेव, हस्तिशरीरे व्रणपट्टबन्धादिवदिति।

उच्यते—देशविरतावतिचारा न संभवन्तीत्यसङ्गतम्। उपाशकदशादिषु प्रतिव्रतमतिचारपञ्चकाभिधानात्। अथ भङ्गा एव ते, न त्वतिचाराः। नैवम्, भङ्गाद्भेदेनातिचारस्यागमे संमतत्वात्। यच्चोक्तम् 'सर्वेऽप्यतिचाराः संज्वलनोदय एव' तत् सत्यम्। केवलं सर्वविरतिचारित्रमेवाश्रित्य तदुच्यते, न तु सम्यक्त्व-देशविरती। यतः "सव्वे वि अ अइयारा" इत्यादि गाथाया एवं व्याख्या–संज्वलनानामेवोदये सर्वविरतावतिचारा भवन्ति, शेषोदये तु मूलच्छेद्यमेव तस्याम्। एवं च न देशविरतावतिचाराभावः ८९ ॥

तत्र प्रथमव्रते तानाह—

> क्रोधाद् बन्धश्छविच्छेदोऽधिकभाराधिरोपणम्।
> प्रहारोऽन्नादिरोधश्चाहिंसायां परिकीर्त्तिताः ॥ ९० ॥

अहिंसायां प्रथमाणुव्रते अमी पञ्चातिचाराः—बन्धो रज्ज्वादिना गो[2]-मनुष्यादीनां नियन्त्रणम्; स्वपुत्रादीनामपि विनयग्राहणार्थं क्रियते, अतः क्रोधादित्युक्तम्; क्रोधात् प्रबलकषायोदयाद्यो बन्धः स प्रथमोऽतिचारः १।

१ स्थूलं सङ्कल्प निरपराधं–मु० ॥ २ गोमहिष्यादीनां मु० ॥

छविः शरीरं त्वग् वा, तस्याः छेदो द्वैधीकरणम् ; स च पादवल्मीकोपहतपादस्य पुत्रादेरपि क्रियते इति क्रोधादित्यनुवर्त्तते। क्रोधाद्यः छविच्छेदः स द्वितीयोऽतिचारः २।

अधिकस्य वोढुमशक्यस्य भारस्यारोपणं गो-करभ-रासभ-मनुष्यादेः स्कन्धे पृष्ठे शिरसि वा वहनायाधिरोपणम्, इहापि क्रोधादित्यनुवर्त्तते,[2] तेन क्रोधात्तदुपलक्षिताल्लोभाद्वा यदधिकभारारोपणं स तृतीयोऽतिचारः ३।

प्रहारो लगुडादिना ताडनं क्रोधादेवेति चतुर्थोऽतिचारः ४।

अन्नादिरोधो भोजन-पानादेर्निषेधः क्रोधादेवेति पञ्चमोऽतिचारः ५।



[3]अत्र चायमावश्यकचूर्ण्याद्युक्तो विधिः-[4]बन्धो द्विपदानां चतुष्पदानां वा स्यात्, सोऽपि सार्थकोऽनर्थको वा। तत्रानर्थक

१ वर्त्यते-खं॥ २ तत् क्रोधा०-क॥ ३ वर्णनमिदं समानप्रायं धर्मबिन्दुटीकायां वर्तते पृ० ३६-३७, तथा पञ्चाशकवृत्तौ अपि पृ० १०-११। प्रवचनसारोद्धारवृत्तौ पृ० ७१। नवपदप्रकरणबृहद्वृत्तौ पृ० १०२॥

४ "बंधो दुविहो-दुपदाणं चतुष्पदाणं च, अट्ठाए अणट्ठाए य। अणट्ठाए ण वट्टति। अट्ठाए सावेक्खो णिरवेक्खो य, णिरवेक्खो णिच्चलं धणितं बज्झति, साविक्खो जं संचरपासएण आलीवणगादिसु य जं सक्केति मुंचितुं वा दामगंठिणा, एवं चतुप्पदाणं। दुपदाणं दासी वा चोरो वा पुत्तो वा ण पढंतओ, तेण सविक्कमाणि तं बंधेतव्वाणि रक्खितव्वाणि य जत्थ अग्गिभयादिसु ण विणस्संति, तारिसयाणि किर दुप्पयचउप्पयाणि सावएण गेण्हितव्वाणि जाणि अबद्धाणि चेव अच्छंतीति। वहो वि तहेव, अणट्ठाए णिरवेक्खो णिद्दयत्तेणं, साविक्खो पुव्वं भीतपरिसेण होतव्वं, जदि ण करेज्जा ताहे मम्मं मोत्तूण गलिताए (लताए) दोरेण वा एक्कं दो तिन्नि वारे तालेज्जा, एवमादि विभासणं। छविच्छेदो अणट्ठाए णिरवेक्खो हत्थ-पाय-कण्ण-णक्काणं णिद्दयत्ताए, साविक्खो गंडं वा अरतिं (अरुयं-

स्तावद् विधातुं न युज्यते। सार्थकः पुनरसौ द्विविधः—सापेक्षो निरपेक्षश्च। तत्र सापेक्षो यो दामग्रन्थिना शिथिलेन यश्च प्रदीपनादिषु मोचयितुं छेत्तुं वा शक्यते। निरपेक्षो यत् निश्चलमत्यर्थञ्च बध्यते। एवं तावत् चतुष्पदानां बन्धः। द्विपदानामपि दास-दासी-चौर-पाठादिप्रमत्तपुत्रादीनां यदि बन्धस्तदा सविक्रमणा एव बन्धनीया रक्षणीयाश्च यथाऽग्निभयादिषु न विनश्यन्ति, तथा द्विपद-चतुष्पदाः श्रावकेण त एव संगृहीतव्या ये अबद्धा एवासते इति।

छविच्छेदोऽपि तथैव, नवरं निरपेक्षो हस्त-पाद-कर्ण-नासिकादि यन्निर्दयं छिनत्ति, सापेक्षः पुनर्गण्डं वा अरुर्वा छिन्द्याद्वा दहेद्वेति।

तथाऽधिकभारोऽपि नारोपयितव्यः, पूर्वमेव हि या द्विपदादिवाहनेन जीविका सा श्रावकेण मोक्तव्या, अथान्याऽसौ न भवेत् तदा द्विपदोऽयं भारं स्वयमुत्क्षिपति अवतारयति च तं वाह्यते, चतुष्पदस्य तु यथोचितभारः किञ्चिदूनः क्रियते, हल-शकटादिषु पुनरुचितवेलायामसौ मुच्यत इति।

---

हा०) वा छिंदेज्जा दहेज्ज वा, चतुष्पदो कण्णे लंछिज्जति, एवमादि विभासा। अतिभारो ण आरोवेतव्वो, पुव्वं ताव (चेव–हा०) जा वहणाए जीविता सा मोत्तव्वा, अह ण होज्जा अण्णा जीविता दुपए जथा सतं उक्खिवेति ओयारेति एव वाहिज्जति, वइल्लादीणं जथा साभावियाओ वि भराओ ऊणओ कीरति, हल-सगडेसु वि वेलाए मुयति, आस-हत्थीसु वि एस विधी। भत्तपाणवोच्छेदो ण कातव्वो, तिव्वछुहाए वा (मा–हा०) मरेज्जा, ताहे (तहेव–हा०) अणट्ठाए दोसे परिहरेज्जा, सावेक्खो वा (पुण–हा०) रोगणिमित्तं, वायाए वा भणेज्जा –'अज्ज ते ण देमि', संतिणिमित्तं वा उववासे कारावेज्जा, सव्वत्थ वि जयणा, जधा थूलगस्स पाणातिपातवेरमणस्स अतियारो ण भवति तथा पयतितव्वं।" इति आवश्यकचूर्णौ प्रत्याख्यानाध्ययने पृ०.२८४–२८५। आवश्यकसूत्रस्य हारिभद्रयां वृत्तावपि अयमेव पाठः क्वचित् किञ्चिच्छन्दभेदेन वर्तते पृ० ८२०। ईदृशाः केचित् पाठभेदाः हा० इति सङ्केतेनात्र दर्शिताः। तुलना—तत्त्वार्थसूत्रस्य सिद्धसेनगणिविरचितायां टीकायाम् ७।२०, पृ० १०३–१०४॥

॥ ५२१ ॥

प्रहारोऽपि तथैव, नवरं निरपेक्षः प्रहारो निर्दयताडना, सापेक्षः पुनः श्रावकेणाऽऽदित एव भीतपर्षदा भवितव्यम्, यदि पुनः कोऽपि न करोति विनयं तदा तं मर्माणि मुक्त्वा लतया दवरकेण वा सकृद् द्विर्वा ताडयेदिति।

तथा अन्न-पानादिरोधो न कस्यापि कर्तव्यः, तीक्ष्णबुभुक्षो ह्येवं सति म्रियेत[1]; स्वभोजनवेलायां तु ज्वरितादीन् विना नियमत एवान्यान् विधृतान् भोजयित्वा स्वयं भुञ्जीत। अन्नादिरोधोऽपि सार्थकाऽनर्थकभेदो बन्धवत् द्रष्टव्यः, नवरं सापेक्षो रोगचिकित्सार्थं स्यात्, अपराधकारिणि च वाचैव[2] वदेद्—अद्य ते न दास्यते भोजनादि। शान्तिनिमित्तं चोपवासादि कारयेत्। किं बहुना? मूलगुणस्याहिंसालक्षणस्यातिचारो यथा न भवति तथा यतनया वर्त्तनीयम्।

ननु हिंसैव श्रावकेण प्रत्याख्याता, ततो बन्धादिकरणेऽपि न दोषः, हिंसाविरतेरखण्डितत्वात्। अथ बन्धादयोऽपि प्रत्याख्यातास्तदा तत्करणे व्रतभङ्ग एव, विरतिखण्डनात्। किञ्च, बन्धादीनां प्रत्याख्येयत्वे व्रतेयत्ता विशीर्येत[3], प्रतिव्रतमतिचारव्रतानामाधिक्यादिति। एवं च न बन्धादीनामतिचारतेति।

उच्यते—सत्यम्, हिंसैव प्रत्याख्याता न बन्धादयः, केवलं तत्प्रत्याख्याने अर्थतस्तेऽपि प्रत्याख्याता द्रष्टव्याः, हिंसोपायत्वात्तेषाम्। न च बन्धादिकरणेऽपि व्रतभङ्गः, किन्त्वतिचार एव। कथम्? इह द्विविधं व्रतम्—अन्तर्वृत्त्या बहिर्वृत्त्या च। तत्र मारयामीति विकल्पाभावेन यदा कोपाद्यावेशात् परप्राणप्रहाणमविगणयन् बन्धादौ प्रवर्त्तते, न च हिंसा भवति, तदा निर्दयता-विरत्यनपेक्षप्रवृत्तत्वेनान्तर्वृत्त्या व्रतस्य भङ्गः, हिंसाया अभावाच्च बहिर्वृत्त्या पालनमिति देशस्य भञ्जनादेशस्यैव पालनादतिचारव्यपदेशः प्रवर्त्तते, तदुक्तम्—

१-ड। म्रियते-मु.॥ २ वाचैवं-क०॥ ३ विशीर्यते-क०॥

" न मारयामीति कृतव्रतस्य, विनैव मृत्युं क इहातिचारः ? ।
निगद्यते यः कुपितो वधादीन्, करोत्यसौ स्यान्नियमे[1]ऽनपेक्षः ॥ १ ॥
मृत्योरभावान्नियमोऽस्ति तस्य, कोपाद्दयाहीनतया तु भग्नः ।
देशस्य भङ्गादनुपालनाच्च, पूज्या अतीचारमुदाहरन्ति ॥ २ ॥ " [ ]

यच्चोक्तं—'व्रतेयत्ता विशीर्येत[2]' इति, तदयुक्तम्, विशुद्धाहिंसासद्भावे हि बन्धादीनामभाव एव। तत् स्थितमेतद् बन्धादयोऽतिचारा एव। बन्धादिग्रहणस्य चोपलक्षणत्वान्मन्त्र-तन्त्रप्रयोगादयोऽन्येऽप्यतिचारतया ज्ञेयाः ॥ ९० ॥

अथ द्वितीयस्य व्रतस्यातिचारानाह—

**मिथ्योपदेशः सहसाऽभ्याख्यानं गुह्यभाषणम् ।**
**विश्वस्तमन्त्रभेदश्च कूटलेखश्च सूनृते[3] ॥ ९१ ॥**

---

१ नियमानपेक्षः—मु०। नवपदप्रकरणबृहद्वृत्तौ पृ० १०३, प्रवचनसारोद्धारवृत्तौ पृ० ७२, धर्मबिन्दुटीकायां पृ० ३७, उपासकदशाङ्गटीकायां, पञ्चाशकवृत्तौ पृ० १० धर्मसंग्रहवृत्तौ पृ० १०१ उद्धृतमिदम् ॥ २ विशीर्यत–क० ड० सं. ॥ ३ "थूलगस्स मुसावायवेरमणस्स पंच अइयारा जाणियव्वा, न समायरियव्वा, तंजहा–सहसा अब्भक्खाणे १, रहसा अब्भक्खाणे २, सदारमंतभेए ३, मोसोवएसे ४, कूडलेहकरणे ५." इति उपासकदशाङ्गे। आवश्यकसूत्रे प्रत्याख्यानाध्ययने, पञ्चाशके प्रवचनसारोद्धारादौ च एत एव पञ्चातिचारा निर्दिष्टाः। मिथ्योपदेश–रहस्याभ्याख्यान-कूटलेखक्रिया-न्यासापहार–साकारमन्त्रभेदा." [७।२१] इति तत्त्वार्थसूत्रे। "मिथ्योपदेश–रहस्याभ्याख्यान–कूटलेखक्रिया–न्यासापहार–स्वदारमन्त्रभेदाः" ३।२४। इति तु धर्मबिन्दौ।

मिथ्योपदेशोऽसदुपदेशः। [1]प्रतिपन्नसत्यव्रतस्य हि परपीडाकरं वचनमसत्यमेव, ततः प्रमादात् परपीडाकरणे उपदेशे अतिचारो यथा—वाह्यन्तां खरोष्ट्रादयः, हन्यन्तां दस्यव इति। यद्वा यथा स्थितोऽर्थस्तथोपदेशः साधीयान्, विपरीतस्तु अयथार्थोपदेशो यथा—परेण सन्देहापन्नेन पृष्टे न तथोपदेशः। यद्वा विवादे स्वयं परेण वा अन्यतरा[2]तिसन्धानोपायोपदेश इति प्रथमोऽतिचारः १।

[3]सहसा अनालोच्याभ्याख्यानमसद्दोषाध्यारोपणं, यथा—चौरस्त्वं पारदारिको वेत्यादि। [4]अन्ये तु सहसाऽभ्याख्यानस्थाने रहस्याभ्याख्यानं पठन्ति व्याचक्षते च–रह एकान्तः, तत्र भवं रहस्यम्, रहस्येनाभ्याख्यानमभिशंसनमसदध्यारोपणं रहस्याभ्याख्यानं, यथा–यदि वृद्धा स्त्री ततस्तस्यै कथयति–अयं तव भर्ता तरुण्यामतिप्रसक्तः, अथ तरुणी तत एवमाह–अयं ते भर्ता प्रौढचेष्टितायां मध्यमवयसि योषिति प्रसक्तः, तथाऽयं खरकामो मृदुकाम इति वा परिहसति। तथा स्त्रियमभ्याख्याति भर्तुः पुरः, यथा–पत्नी ते कथयति एवमयं मां रहसि कामगर्दभः खलीकरोति, अथवा दम्पत्योरन्यस्य वा पुंसः स्त्रिया वा येन रागप्रकर्ष उत्पद्यते तेन तादृशा रहस्येनानेकप्रकारेणाभिशंसनं हास्यक्रीडादिना, न त्वभिनिवेशेन, तथा सति व्रतभङ्ग एव स्यात्। [5]यदाह—

---

१ तुलना–तत्त्वार्थसूत्रस्य सिद्धसेनीया वृत्तिः ७।२१, पृ० १०५। धर्मसंग्रहवृत्तिः पृ० १०२॥ २ "वञ्चनं तु प्रतारणं व्यलीकमतिसन्धानम्" इति अभिधानचिन्तामणौ श्लो० ३७९। "अतिसन्धानं छलनम्" इति तत्त्वार्थसूत्रभाष्यस्य सिद्धसेनगणिविरचितायां वृत्तौ ७।२१, पृ० १०५॥ ३ तुलना–पञ्चाशकवृत्तिः पृ० ११॥ ४ दृश्यतां तत्त्वार्थसूत्रस्य सिद्धसेनीया वृत्तिः ७।२१, पृ० १०५। तुलना–धर्मसंग्रहवृत्तिः पृ० १०२॥ ५ तुलना–धर्मबिन्दुटीका पृ० ३८, पञ्चाशकवृत्तिः पृ० १२, नवपदप्रकरणबृहद्वृत्तिः पृ० ११५, धर्मसंग्रहवृत्तिः पृ० १०२।

" सहसब्भक्खाणाई जाणंतो जइ करेज्ज तो भंगो। जइ पुणऽणाभोगाईहिंतो तो होइ अइयारो ॥ १ ॥" [ ] इति द्वितीयोऽतिचारः २।

तथा गुह्यं गूहनीयं, न सर्वस्मै यत् कथनीयं राजादिकार्य्यसंबद्धं, तस्यानधिकृतेनैवाऽऽकारेङ्गितादिभिर्ज्ञात्वाऽन्यस्मै प्रकाशनं गुह्यभाषणं, यथा–एते हीदमिदं च राजविरुद्धादिकं मन्त्रयन्ते। अथवा गुह्यभाषणं पैशुन्यं, यथा–द्वयोः प्रीतौ सत्यामेकस्याकारादिनोपलभ्याभिप्रायमितरस्य तथा कथयति यथा प्रीतिः प्रणश्यति। इति तृतीयोऽतिचारः ३।

तथा विश्वस्ता विश्वासमुपगता ये मित्र-कलत्रादयस्तेषां मन्त्रो मन्त्रणं, तस्य भेदः प्रकाशनम्। तस्यानुवादरूपत्वेन सत्यत्वाद् यद्यपि नातिचारता घटते तथापि मन्त्रितार्थप्रकाशनजनितलज्जादितो मित्र-कलत्रादेर्मरणादिसम्भवेन परमार्थतोऽस्यासत्यत्वात् कथञ्चिद्भङ्गरूपत्वेनातिचारतैव। गुह्यभाषणे गुह्यमाकारादिना विज्ञायानधिकृत एव गुह्यं प्रकाशयति, इह तु स्वयं मन्त्रयित्वैव मन्त्रं भिनत्तीत्यनयोर्भेदः। इति चतुर्थोऽतिचारः ४।

तथा कूटमसद्भूतम्, तस्य लेखो लेखनं कूटलेखः, अन्यसरूपाक्षरमुद्राकरणम्। एतच्च यद्यपि 'कायेनासत्यां वाचं न वदामि' इत्यस्य, 'न वदामि न वादयामि' इत्यस्य वा व्रतस्य भङ्ग एव, तथापि सहसाकारानाभोगादिना अतिक्रमादिना

१ सहसाभ्याख्यानादि जानन् यदि कुर्याद् व्रतभङ्गः। यदि पुनरनाभोगादिभिः तदा भवति अतिचारः॥ २ दृश्यतां तत्त्वार्थसूत्रस्य सिद्धसेनीया वृत्तिः ७।२१, पृ० १०६। तुलना-प्रवचनसारोद्धारवृत्तिः पृ० ७२, धर्मसंग्रहवृत्तिः पृ० १०२॥ ३ तुलना-धर्मविन्दुटीका पृ० ३८, पञ्चाशकवृत्तिः पृ० १२, नवपदप्रकरणवृहद्वृत्तिः पृ० ११५, प्रवचनसारोद्धारवृत्तिः पृ० ७२, धर्मसंग्रहवृत्तिः १०२–१०३॥ ४ मन्त्रयित्वैव-मु०॥ ५ तुलना-धर्मबिन्दुटीका पृ० ३८, पञ्चाशकवृत्तिः पृ० १२, नवपदप्रकरण-वृहद्वृत्तिः पृ० ११५, प्रवचनसारोद्धारवृत्तिः पृ० ७२, धर्मसंग्रहवृत्तिः पृ० १०२॥

॥ ५२५ ॥

वाऽतिचारः। अथवा 'असत्यमित्यसत्यभणनं मया प्रत्याख्यातम्, इदं पुनर्लेखनम्' इति भावनया व्रतसव्यपेक्षस्यातिचार एवेति पञ्चमोऽतिचारः ५ ॥ ९१ ॥

अथ तृतीयव्रतातिचारानाह–

स्तेनानुज्ञा तदानीतादानं द्विड्राज्यलङ्घनम् ।
प्रतिरूपक्रिया मानान्यत्वं चास्तेयसंश्रिताः ॥ ९२ ॥

तृतीयव्रतातिचाराः

स्तेनाश्चौराः, तेषामनुज्ञा–हरत यूयमिति हरणक्रियायां प्रेरणा। अथवा स्तेनोपकरणानि कुशिका-कर्त्तरिका-घर्घरिकादीनि, तेषामर्पणं विक्रयणं वा स्तेनानुज्ञा। अत्र च यद्यपि 'चौर्यं न करोमि न कारयामि' इत्येवं प्रतिपन्नव्रतस्य स्तेनानुज्ञा व्रतभङ्ग एव, तथापि 'किमधुना यूयं निर्व्यापारास्तिष्ठत[3]? यदि वो भक्तादि नास्ति तदाऽहं तद्ददामि, भवदानीतमोषस्य वा यदि विक्रायको न विद्यते तदाऽहं विक्रेष्ये' इत्येवंविधवचनैश्चौरान् व्यापारयतः स्वकल्पनया तद्व्यापारणं परिहरतो व्रतसापेक्षस्यासावतिचारः। इति प्रथमोऽतिचारः १।

---

१ सातिचारः–शां. खं. ॥ २ दृश्यतां तत्त्वार्थसूत्रस्य सिद्धसेनीया वृत्तिः ७।२२, पृ० १०६। तुलना–पञ्चाशकवृत्तिः पृ० १३, नवपदप्रकरणबृहद्वृत्तिः पृ० १३९, प्रवचनसारोद्धारवृत्तिः पृ० ७३, धर्मसंग्रहवृत्तिः पृ० १०३ ॥ ३ 'तिष्ठथ' इति धर्मबिन्दुटीकायां [पृ० ३८], पञ्चाशकवृत्तौ [पृ० १३] प्रवचनसारोद्धारवृत्तौ [पृ० ७३] च। धर्मसंग्रहवृत्तौ तु 'तिष्ठत' इत्येव वर्तते ॥ "किं भवन्तो निर्व्यापारास्तिष्ठन्ति" इति नवपदप्रकरणबृहद्वृत्तौ पृ० १३९ ॥

तथा तच्छन्देन स्तेनपरामर्शः। स्तेनैरानीतमाहृतं कनक-वस्त्रादि, तस्यादानं ग्रहणं मूल्येन मुधिकया वा तदानीतादानम्, स्तेनानीतं हि काणक्रयेण मुधिकया वा प्रच्छन्नं गृह्णंश्चौरो भवति, ततश्चौर्यकरणाद्व्रतभङ्गः, वाणिज्यमेव मया क्रियते न चौरिकेत्यध्यवसायेन व्रतसापेक्षत्वाच्चाभङ्ग इति भङ्गाभङ्गरूपोऽतिचारः। इति द्वितीयः २।

तथा द्विषोर्विरुद्धयो राज्ञोरिति शेषः, राज्यं नियमिता भूमिः कटकं वा, तस्य लङ्घनं व्यवस्थातिक्रमः, व्यवस्था च परस्परविरुद्धराजकृतैव, तल्लङ्घनं चान्यतरराज्यनिवासिन इतरराज्ये प्रवेशः इतरराज्यनिवासिनो वा अन्यतरराज्ये प्रवेशः। द्विड्राज्यलङ्घनस्य यद्यपि स्वस्वामिना अननुज्ञातस्य

" सामी-जीवादत्तं तित्थयरेणं तहेव य गुरूहिं।" [ नवपदप्रकरणे गा० ३८ ]

इत्यदत्तादानलक्षणयोगेन तत्कारिणां च चौर्यदण्डयोगेन अदत्तादानरूपत्वाद्व्रतभङ्ग एव, तथापि 'द्विड्राज्यलङ्घनं कुर्वता मया वाणिज्यमेव कृतं, न चौर्यम्' इति भावनया व्रतसापेक्षत्वाल्लोके च चौरोऽयमिति व्यापदेशाभावादतिचारता। इति तृतीयः ३।

तथा प्रतिरूपं सदृशम्, व्रीहीणां पलञ्जिः, घृतस्य वसा, हिङ्गोः खदिरादिवेष्टः, तैलस्य मूत्रम्, जात्यसुवर्णरूप्ययोर्युक्तिसुवर्णरूप्ये इत्यादिप्रतिरूपेण क्रिया व्यवहारः, व्रीह्यादिषु पलञ्ज्यादि प्रक्षिप्य तत्तद्विक्रीणीते। यद्वा अपहृतानां गवा-

१ ०त्वान्न तद्भङ्ग–मु.। ०त्वान्न वा भङ्ग–ख० च० ॥ २ सामि–मु० ॥ स्वामि–जीवादत्तं तीर्थकरेण तथैव च गुरुभिः। ३ ०दिवेष्ट–सं.। ०दिर्विष्ट–खं. ॥ ४ ०रूपा क्रिया–खं. ॥ ५ तत्तद्विक्रीणाति–सं. ॥

दीनां सश्रृङ्गाणामग्निपक्वकालिङ्गीफलस्वेदादिना शृङ्गाण्यधोमुखानि प्रगुणानि तिर्यग्वलितानि वा यथारुचि विधायान्यत्वमिव तेषामापाद्य सुखेन धारण-विक्रयादि करोति। इति चतुर्थः ४।

तथा मीयतेऽनेनेति मानं कुडवादि पलादि हस्तादि, तस्यान्यत्वं हीनाधिकत्वम्, हीनमानेन ददाति, अधिकमानेन गृह्णाति। इति पञ्चमः ५।

प्रतिरूपक्रिया मानान्यत्वं च परव्यंसनेन[2] परधनग्रहणरूपत्वाद्भङ्ग एव, केवलं 'खात्रखननादिकमेव चौर्यं प्रसिद्धम्[3], मया तु वणिक्कलैव कृता' इति भावनया व्रतरक्षणोद्यतत्वादतिचारावेवेति[4]। अथवा स्तेनानुज्ञादयः पञ्चाप्यमी व्यक्तचौर्यरूपा एव, केवलं सहसाकारादिना अतिक्रम-व्यतिक्रमादिना वा प्रकारेण विधीयमाना अतिचारतया व्यपदिश्यन्ते।

तृतीयव्रतातिचाराः

न चैते[5] राज-राजसेवकादीनां न सम्भवन्ति, तथाहि–आद्ययोः स्पष्ट एव सम्भवः। द्विड्राज्यलङ्घनं तु यदा सामन्तादिः कश्चित् स्वस्वामिनो वृत्तिमुपजीवति, तद्विरुद्धस्य च सहायो भवति[6], तदाऽस्यातिचारो भवति। प्रतिरूपक्रिया मानान्यत्वं च

१ –क० ड०। ०न्यविधत्वमिव–मु० धर्मसंग्रहवृत्तौ [पृ० १०४] च ॥ २ ०व्यसनेन–सं. मु०। "व्यंसयति चछलयति व्यंसकः" इत्यभिधानचिन्तामणौ श्लो० ३७७। तुलना–धर्मबिन्दुटीका पृ० ३८, पञ्चाशकवृत्तिः पृ० १३, नवपदप्रकरणबृहद्वृत्तिः पृ० १३९, प्रवचनसारोद्धारवृत्तिः पृ० ७३, धर्मसंग्रहवृत्तिः पृ० १०४ ॥ ३ प्रतिषिद्धं–सं.। प्रवचनसारोद्धारवृत्तौ [पृ० ७३] च। ४ ०चारतैवेति–खं. ॥ ५ चैते राजसे०–मु०। दृश्यतां पञ्चाशकवृत्तिः पृ० १३ ॥ ६ भवतीति–शां. ॥

यदा राजा भाण्डागारे द्रव्याणां विनिमयं मानान्यत्वं च कारयति तदा राज्ञोऽप्यतिचारो भवति । एते च पञ्चाप्यस्तेयव्रताश्रिता अतिचाराः ॥ ९२ ॥

अथ चतुर्थव्रतातिचारानाह—

इत्वरात्तागमोऽनात्तागतिरन्यविवाहनम् ।
मदनात्याग्रहोऽनङ्गक्रीडा च ब्रह्मणि स्मृताः[1] ॥ ९३ ॥

ब्रह्मणि ब्रह्मचर्यव्रते, एतेऽतिचाराः । इत्वरी प्रतिपुरुषमयनशीला, वेश्या इत्यर्थः, सा चासावात्ता च कञ्चित् कालं भाटीप्रदानादिना संगृहीता, पुंवद्भावे[2] इत्वरात्ता । अथवा इत्वरं स्तोकमप्युच्यते, इत्वरं स्तोकमल्पमात्ता इत्वरात्ता, विस्पष्टपटुवत्[3] समासः । अथवा इत्वरकालमात्ता इत्वरात्ता, मयूरव्यंसकादित्वात्[4] समासः, कालशब्दलोपश्च । तस्यां गम आसेवनम् ।

इयं चात्र भावना[5]—भाटीप्रदानादित्वरकालस्वीकारेण स्वकलत्रीकृत्य वेश्यां सेवमानस्य स्वबुद्धिकल्पनया स्वदारत्वेन

१ ०चाराः स्मृताः–मु. ॥ २ ‘परतः स्त्री पुंवत्, स्त्र्येकार्थेऽनूङ्’ सि० ३।१।४९ ॥ ३ “नाम नाम्नैकार्थ्ये समासो बहुलम् ३।१।१८। ···बहुव्रीह्यादिविशेषसंज्ञाऽभावे यत्रैकार्थता दृश्यते तत्रानेनैव समाससंज्ञा भवति–विस्पष्टं पटुः विस्पष्टपटुः” इति सिद्धहेम० बृहद्वृत्तौ । दृश्यतां तत्त्वार्थसूत्रस्य सिद्धसेनीया वृत्तिः, ७।२३, पृ० १०८ ॥ ४ “मयूरव्यंसकेत्यादयः” सि० ३।१।११६ ॥ ५ तुलना–धर्मबिन्दुटीका पृ० ३९, पञ्चाशकवृत्तिः पृ० १४, प्रवचनसारोद्धारवृत्तिः पृ० ७४, धर्मसंग्रहवृत्तिः पृ० १०५ ॥

चतुर्थव्रतातिचाराः

व्रतसापेक्षचित्तत्वान्न भङ्गः, अल्पकालपरिग्रहाच्च [1]वस्तुतोऽन्यकलत्रत्वाद्भङ्गः, इति भङ्गाभङ्गरूपत्वादित्वरात्तागमोऽतिचारः । इति प्रथमः १ ।

तथा अनात्ता अपरिगृहीता वेश्या[2], स्वैरिणी, प्रोषितभर्तृका, कुलाङ्गना वाऽनाथा, तस्यां गतिरासेवनम्[3] । इयं चानाभोगादिना अतिक्रमादिना वा अतिचारः । इमौ [4]चातिचारौ स्वदारसन्तोषिण एव, न तु परदारवर्जकस्य, इत्वरात्ताया वेश्यात्वेन [5]अनात्तायास्त्वनाथतयैवापरदारत्वात्, शेषास्त्वतिचारा द्वयोरपि, इदं च सूत्रानुपाति । यदाहुः—

"[6]सदारसंतोसस्स इमे पंच अइयारा जाणियव्वा न समायरियव्वा ।" [ उपासकदशाङ्गे ]

अन्ये त्वाहुः—इत्वरात्तागमः स्वदारसन्तोषवतोऽतिचारः, तत्र भावना कृतैव, अनात्तागतिस्तु परदारवर्जिनः । अनात्ता हि वेश्या, यदा तां गृहीतान्यसत्कभाटिकामभिगच्छति तदा परदारगमनजन्यदोषसम्भवात् कथञ्चित् परदारत्वाच्च[7] [8]भङ्गत्वेन वेश्यात्वाच्चाभङ्गत्वेन भङ्गाभङ्गरूपोऽतिचारः । इति द्वितीयः २ ।

---

१ वस्तुतोऽस्वकलत्र०—धर्मविन्दुटीका, पञ्चाशकवृत्तिः ॥ २ दृश्यतां तत्त्वार्थसूत्रस्य सिद्धसेनसूरिविरचिता वृत्तिः ७।२३, पृ० १०८ ॥ ३ अयं-शां. । इयम्-अनात्तागतिः ॥ ४ तुलना-धर्मविन्दुटीका पृ० ३९, पञ्चाशकवृत्तिः पृ० १४, धर्मसंग्रहवृत्तिः पृ० १०५॥ "सदारसंतुट्ठस्स अंतिल्ला तिण्णि, परदारविवज्जगस्स पंच वि सयपरिग्गहिय-अपरिग्गहियातो। अण्णे भणंति-सदारसंतुट्ठस्स अतिल्ला तिन्नि, सदारणियत्तस्स पंच वि" – आवश्यकचूर्णिः पृ० २९१। "आदिल्ला दो अतियारा सदारसंतुट्ठस्स भवंति, णो परदारविवज्जगस्स, सेसा पुण दोण्ह वि भवंति" इति आवश्यकसूत्रस्य हारिभद्र्यां वृत्तौ पृ० ८२५॥ ५ अनात्तायाः स्वनाथ० – मु.॥ ६ स्वदारसन्तोषस्य इमे पञ्चातिचारा ज्ञातव्याः, न समाचरितव्याः ॥ तुलना-प्रवचनसारोद्धारवृत्तिः पृ० ७३॥ ७ ०दारत्वाच्चाभङ्गत्वेन भङ्गाभङ्ग० – मु. ॥ ८ ०भङ्गत्वमवेश्या०–शां. ॥

तथाऽन्येषां स्वस्वापत्यव्यतिरिक्तानां विवाहत्तं विवाहकरणं कन्याफललिप्सया, स्नेहसम्बन्धादिना वा परिणयनविधानम्। इदं च स्वदारसन्तोषवता[2] स्वकलत्रात् परदारवर्जकेन च स्वकलत्र-वेश्याभ्यामन्यत्र मनोवाक्कायैर्मैथुनं न कार्य्यं न च कारणीयमिति यदा प्रतिपन्नं व्रतं भवति तदा अन्यविवाहकरणं मैथुनकारणमर्थतः प्रतिषिद्धमेव भवति, तद्व्रती तु मन्यते—'विवाह एवाऽयं मया विधीयते, न मैथुनं कार्य्यते' इति व्रतसापेक्षत्वादतिचार इति। कन्याफललिप्सा च सम्यग्दृष्टेरव्युत्पन्नावस्थायां सम्भवति, मिथ्यादृष्टेस्तु भद्रकावस्थायामनुग्रहार्थं व्रतदाने[3] सा सम्भवति।

नन्वन्यविवाहनवत् स्वापत्यविवाहनेऽपि समान एव दोषः? सत्यम्, यदि स्वकन्याया विवाहो न कार्यते तदा स्वच्छन्दचारिणी स्यात्, ततश्च शासनोपघातः स्यात्, विहितविवाहा तु पतिनियन्त्रितत्वेन न तथा स्यात्। परेऽप्याहुः—

"पिता रक्षति कौमारे, भर्त्ता रक्षति यौवने।

पुंत्रस्तु[4] स्थाविरे भावे, न स्त्री स्वातन्त्र्यमर्हति ॥ १ ॥" [ मनुस्मृतौ ९।३ ]

यस्तु दाशार्हस्य कृष्णस्य चेटकराजस्य च स्वापत्येष्वपि विवाहनियमः श्रूयते, स चिन्तकान्तरसद्भावे द्रष्टव्यः।

अन्ये[5] त्वाहुः—अन्यस्य कलत्रान्तरस्य विशिष्टसन्तोषाभावात् स्वयं विवाहनमन्यविवाहनम्। अयं स्वदारसन्तुष्टस्याऽतिचारः। इति तृतीयः ३।

१ स्वापत्य०–धर्मविन्दुटीका पृ० ३९। स्वस्वापत्य०–पञ्चाशकवृत्तिः पृ० १४, धर्मसंग्रहवृत्तिः पृ० १०४, प्रवचनसारोद्धारवृत्तिः पृ० ७४॥ २ धर्मविन्दुटीका पृ० ४०, पञ्चाशकवृत्तिः पृ० १५, धर्मसंग्रहवृत्तिः पृ० १०४, प्रवचनसारोद्धारवृत्ति. पृ० ७४॥ नवपदप्रकरणबृहद्वृत्तिः पृ० १६८॥ ३ व्रतादाने–मु.॥ ४ 'पुत्राश्च' इति प्रवचनसारोद्धारवृत्तौ पृ० ७४॥ ५ तुलना–धर्मविन्दुटीका पृ० ४०, पञ्चाशकवृत्तिः पृ० १५, धर्मसंग्रहवृत्तिः पृ० १०४॥

मदने कामेऽत्याग्रहः [1]परित्यक्तान्यसकलव्यापारस्य तदध्यव[2]सायता । योषामुखकक्षोपस्थान्तरेष्ववि[3]तृप्ततया प्रक्षिप्य प्रजननं महतीं वेलां निश्चलो मृत [4]इवास्ते, चटक इव चटकायां मुहुर्मुहुर्योषायामारोहति, जातबलक्षयश्च वाजीकरणानुपयुङ्क्ते 'अनेन खल्वौषधप्रयोगेण गजप्रसेकी तुरगावम[5]र्दी च पुरुषो भवति' इति बुद्ध्या । इति चतुर्थः ४ ।

चतुर्थव्रतातिचाराः

तथा [6]अनङ्गः कामः, स च पुंसः स्त्री-पुं-नपुंसकेषु सेवनेच्छा हस्तकर्मादीच्छा वा वेदोदयात्, योषितोऽपि योषिन्नपुंसक-पुरुषासेवनेच्छा हस्तकर्मादीच्छा [7]वा, नपुंसकस्यापि नपुंसक-पुरुष-स्त्रीसेवनेच्छा हस्तकर्मादीच्छा वा । एषोऽनङ्गो नान्यः कश्चित् । तेन तस्मिन् वा क्रीडा रमणमनङ्गक्रीडा । यद्वा आहार्यैः[8] काष्ठ-पुस्त-फल-मृत्तिका-चर्मादिभिर्घटितैः प्रजननैः स्वलिङ्गेन कृतकृत्योऽपि योषितामवाच्यदेशं भूयो भूयः कुथ्नाति, केशाकर्षण-प्रहारदान-दन्तनखकदर्थनादिप्रकारैश्च मोहनीयकर्मावेशात् तथा क्रीडति यथा बलवान् रागः प्रसूयते । अथवाऽङ्गं देहावयवो मैथुनापेक्षया योनिर्मेहनं च[9], तद्व्यतिरिक्तान्य[10]नङ्गानि कुच-कक्षोरू-वदनादीनि, तेषु क्रीडा अनङ्गक्रीडा । इह च श्रावकोऽत्य[11]न्तपापभीरुतया ब्रह्मचर्यं चिकीर्षुरपि यदा वेदोदयासहिष्णुतया

---

१ तुलना-तत्त्वार्थसूत्रस्य सिद्धसेनीया वृत्तिः ७।२३, पृ० १०९, प्रवचनसारोद्धार वृत्तिः पृ० ७४, धर्मसंग्रहवृत्तिः पृ० १०५ ॥ २ ०सायतः योषामुखकक्षोरूपस्था०-मु० ॥ ३ तृष्णतया-शां. । ०तृप्तितया-खं. ॥ ४ एवास्ते-मु. ॥ ५ ०मर्दीव पुरुषो-मु. ॥ ६ तुलना-तत्त्वार्थसूत्रस्य सिद्धसेनीया वृत्तिः ७।२३, पृ० १०८-१०९, धर्मसंग्रहवृत्तिः पृ० १०५, प्रवचनसारोद्धार वृत्तिः पृ० ७४ ॥ ७ वा वेदोदयात्,-शां. ॥ ८ तुलना-धर्मविन्दुटीका, पृ० ३९, पञ्चाशकवृत्तिः पृ० १४, धर्मसंग्रहवृत्तिः पृ० १०५, प्रवचनसारोद्धारवृत्तिः पृ० ७४ ॥ ९ वा-मु. धर्मविन्दुटीका, प्रवचनसारोद्धारवृत्तिः ॥ १० ०न्यङ्गानि-मु. ॥ ११ तुलना-धर्मविन्दुटीका पृ० ३९, पञ्चाशकवृत्तिः पृ० १५, धर्मसंग्रहवृत्तिः पृ० १०५, प्रवचनसारोद्धारवृत्तिः पृ० ७४ ॥

तद्विधातुं न शक्नोति, तदा यापनामात्रार्थं स्वदारसन्तोषादि प्रतिपद्यते। मैथुनमात्रेणैव च यापनायां संभवन्त्यां[1] मदनात्याग्रहा-ऽनङ्गक्रीडे अर्थतः प्रतिषिद्धे। तत्सेवने च[2] न कश्चिद् गुणः, प्रत्युत[3] तात्कालिकी[4] छिदा राजयक्ष्मादयश्च रोगा दोषा एव भवन्ति। एवं प्रतिषिद्धाचरणाद् भङ्गो नियमाबाधनाच्चाभङ्ग इत्यतिचारावेतौ।

अन्ये त्वन्यथाऽतिचारद्वयमपि भावयन्ति—स[5] हि स्वदारसन्तोषी मैथुनमेव मया प्रत्याख्यातमिति स्वकल्पनया वेश्यादौ तत् परिहरति, नालिङ्गनादि; परदारवर्जकोऽपि परदारेषु मैथुनं परिहरति, नालिङ्गनादि; इति कथञ्चिद् व्रतसापेक्षत्वादतिचारौ। एवं स्वदारसन्तोषिणः पञ्चातिचाराः। परदारवर्जकस्य तूत्तरे त्रय एवेति स्थितम्।

अन्ये[6] त्वन्यथाऽतिचारान् विचारयन्ति, यथा—

" परदारवज्जिणो[7] पंच हुंति तिण्णि उ सदारसंतुट्ठे।

ईत्थीउ[8] तिण्णि पंच[9] व भंगविगप्पेहि[10] अइयारा ॥१॥" [नवपदप्रकरणे गा० ५४, सम्बोधप्रकरणे ७।४१, गा० ११५७]

---

१ संभवत्यां–सं. धर्मसंग्रहवृत्तिः पृ० १०५। २ न च–मु.॥ ३ सिद्धसेनीया तत्त्वार्थवृत्तिः ७।२३, पृ० १०९॥ ४ तात्कालिच्छिदा–सं.॥ ५ तुलना–धर्मबिन्दुटीका पृ० ३९–४०, पञ्चाशकवृत्तिः पृ० १५, धर्मसंग्रहवृत्तिः पृ० १०५, प्रवचनसारोद्धारवृत्तिः पृ० ७४॥ ६ तुलना–धर्मबिन्दुटीका पृ०. ३९, पञ्चाशकवृत्तिः पृ० १५, धर्मसंग्रहवृत्तिः पृ० १०५। ७ परदारवर्जिनः पञ्च भवन्ति त्रयस्तु स्वदारसन्तुष्टे। स्त्रियाः त्रयः पञ्च वा भङ्गविकल्पैरतिचाराः॥ ८ इत्थीए इति धर्मबिन्दुटीकादौ पाठः॥ ९ पंच वि–सं.॥ १० ०विगप्पेहिं अइआरा–शां.। ०विगप्पेहिं नायव्वा–इति सम्बोधप्रकरणे पञ्चाशकवृत्तौ धर्मबिन्दुटीकायां च पाठः॥

॥ ५३३ ॥

देशविरतौ पञ्चमव्रतातिचाराः

इत्वरकालं या परेण भाट्यादिना परिगृहीता वेश्या तां गच्छतः परदारवर्जिनो भङ्गः, कथञ्चित् परदारत्वात्तस्याः, लोके तु परदारत्वारूढेर्न भङ्ग इति भङ्गाभङ्गरूपोऽतिचारः। अपरिगृहीतायामनाथकुलाङ्गनायां या गतिः परदारवर्जिनः सोऽप्यतिचारः, तत्कल्पनया परस्य भर्तुरभावेनापरदारत्वादभङ्गः, लोके च परदारतया रूढेर्भङ्ग इति पूर्ववदतिचारः। शेषास्तु त्रयो द्वयोरपि भवेयुः।

स्त्रियास्तु स्वपुरुषसन्तोष[2]-परपुरुषवर्जनयोर्न भेदः, स्वपुरुषव्यतिरेकेणाऽन्येषां परपुरुषत्वात्। अन्यविवाहनादयस्तु त्रयः स्वदारसन्तोषिण इव स्वपुरुषविषयाः स्युरिति पञ्च वा। कथम्? आद्यस्तावद्यदा स्वकीयपतिर्वारकदिने सपत्न्या परिगृहीतो भवति तदा सपत्नीवारक विलुप्य तं परिभुञ्जानाया अतिचारः, द्वितीयस्त्वतिक्रमादिना परपुरुषमभिसरन्त्या अतिचारः, ब्रह्मचारिणं वा स्वपतिमतिक्रमादिना[3]ऽभिसरन्त्या अतिचारः। शेषास्त्रयः स्त्रियाः पूर्ववत् ॥ ९४ ॥

अथ पञ्चमव्रतस्यातिचारानाह—

धन-धान्यस्य कुप्यस्य गवादेः क्षेत्र-वास्तुनः।
हिरण्य-हेम्नश्च संख्यातिक्रमोऽत्रा[4]परिग्रहे ॥ ९४ ॥

अत्र श्रावकधर्मो[5]चिते, अपरिग्रहव्रते यः संख्यातिक्रमः सोऽतिचारः। कस्य कस्येत्याह—धनं गणिम-धरिम-मेय-परीक्ष्य-लक्षणम्। यदाह—

१ तुलना—धर्मबिन्दुटीका पृ० ४०, पञ्चाशकवृत्तिः पृ० १५, धर्मसंग्रहवृत्तिः पृ० १०६, प्रवचनसारोद्धारवृत्तिः पृ० ७४ ॥
२ ०ष-वर्जनयो०—खं. सं. ॥ ३ ०ना वाभि०—खं. ॥ ४ ०त्र परि०—मु० ॥ ५ ०र्मोचिते परि०—मु० ॥

" गणिमं जाईफल-फोप्फलाइ[1] धरिमं तु कुंकुमगुडाई[2] ।
मेज्जं चोप्पड[3]-लोणाइ रयण-वत्थाइ परिच्छेज्जं[4] ॥ १ ॥ "[5] [ सम्बोधप्रकरणे ७५३, गा० ११६९ ]

धान्यं सप्तदशविधम् । यदाह—

" व्रीहिर्यवो मसूरो गोधूमो मुद्ग-माष-तिल-चणकाः ।
अणवः प्रियङ्गु-कोद्रव-मयुष्ट(ष्ठ)काः शालिराढक्यः ॥ १ ॥
किञ्च कलाय-कुलत्थौ सैणसप्तदशानि धान्यानि । " [ ] इति ।

धनं च धान्यं च धन-धान्यम्, तस्य[7], अत्रोत्तरत्र च समाहारनिर्देशः परिग्रहस्य पञ्चविधत्वज्ञापनार्थः । तथा सति ह्यतिचारपञ्चकं सुयोजं[8] भवति । कुप्यं[9] रूप्य-सुवर्णव्यतिरिक्तं कांस्य-लोह-ताम्र-सीसक-त्रपु-मृद्भाण्ड-त्वचिसार[10]विकारोदङ्किका[11]-काष्ठमञ्चक-मञ्चिका-मसूरक-रथ-शकट-हलप्रभृति द्रव्यम्, तस्य कुप्यस्य । गौरनड्वाननड्वाही च, स आदिर्यस्य द्विपद-चतुष्पद-

---

१ फोफलाइ-शां. खं. ॥ २ गुडाइ-मु० ॥ ३ चोपड० सं. ॥ ४ परिछेयं-खं. । परिछेज्जं-धर्मसंग्रहवृत्तिः ॥ ५ गणिमं जातिफल-पूगफलादि धरिमं तु कुङ्कुम-गुडादि । मेयं घृत-लवणादि रत्न-वस्त्रादि परिच्छेद्यम् ॥ तुलना-प्रवचनसारोद्धारवृत्तिः पृ० ७५, धर्मसंग्रहवृत्तिः पृ० १०६ ॥ ६ शण० इति अभिधानचिन्तामणौ तद्वृत्तौ च, पाठः श्लो० ११७९, ११६८ ॥ ७ तस्य धनधान्यस्य-मु. ॥ ८ सुयोज्यं-खं. ॥ ९ तुलना-तत्त्वार्थसूत्रस्य सिद्धसेनीया वृत्तिः ७।२४, पृ० ११० । धर्मसंग्रहवृत्तिः पृ० १०६ । प्रवचनसारोद्धारवृत्तिः पृ० ७५ ॥ १० त्वचिसारो वंशः, तस्य विकारः ॥ ११ ०रोदङ्किकाष्ठ०-मु. धर्मसंग्रहवृत्तिः । ०रोदन्ति( दङ्कि? )काकाष्ठ०-तत्त्वार्थवृत्तिः सिद्धसेनीया ॥ 'उदङ्कोऽनुदके ॥ ३।३।१२३ ॥·········घृतोदङ्कश्चर्ममयं भाण्डम्' इति सिद्धान्तकौमुद्याम् ॥

॥ ५३५ ॥

वर्गस्य स गवादिः । आदिशब्दान्महिष-मेषा-ऽविक-करभ-रासभ-तुरग-हस्त्यादिचतुष्पदानां हंस-मयूर-कुंक्कुट-शुक-सारिका-पारापत-चकोरादिपक्षिद्विपदानां पत्नी-उपरुद्धा-दासी-दास-कर्मकर-पदात्यादिमनुष्याणां च संग्रहः । क्षेत्रं सस्योत्पत्तिभूमिः, तत् त्रिविधं सेतुकेतूभयभेदात् । तत्र रोतुक्षेत्रं यदरघट्टादिजलेन सिच्यते, केतुक्षेत्रमाकाशोदकपातनिष्पाद्यसस्यम् , उभयमुभय-जलनिष्पाद्यसस्यम् । वास्तु गृहादि ग्रामनगरादि च । तत्र गृहादि त्रिविधम्—खातं भूमिगृहादि, उच्छ्रितं प्रासादादि, खातो-च्छ्रितं भूमिगृहस्योपरि गृहादिसन्निवेशः । क्षेत्रं च वास्तु चेति समाहारद्वन्द्वः । तथा हिरण्यं रजतं घटितमघटितं चानेक-प्रकारं पात्र्यादि, एवं सुवर्णमपि, हिरण्यं च हेम चेत्यत्रापि समाहारः । संख्या व्रतकाले यावज्जीवं चतुर्मासादिकालावधि वा यत् परिमाणं गृहीतं तस्या अतिक्रम उल्लङ्घन संख्यातिक्रमोऽतिचारः ॥ ९४ ॥

देशविरतौ पञ्चमव्रतातिचाराः

ननु प्रतिपन्नसंख्यातिक्रमो भङ्ग एव स्यात् , कथमतिचारः ? इत्याह—

बन्धनाद् भावतो गर्भाद् योजनाद् दानतस्तथा ।
प्रतिपन्नव्रतस्यैष पञ्चधाऽपि न युज्यते ॥ ९५ ॥

---

१ ०कुर्कुट०–मु. तत्त्वार्थवृत्तिः सिद्धसेनीया ॥ २ ०पक्षिणां द्विपदानां—खं. ॥ ३ तुलना–धर्मबिन्दुटीका पृ० ४०, पञ्चाशकवृत्तिः पृ० १६, धर्मसंग्रहवृत्तिः पृ० १०६, प्रवचनसारोवृत्तिः पृ० ७४, सिद्धसेनीया तत्त्वार्थवृत्तिः ७।२४ पृ० ११० ॥ ४ तुलना–धर्मसंग्रहवृत्तिः पृ० १०६ । ५ तस्य अतिक्रम०–सं. । तस्यातिक्रम०–शां. ॥ ६ प्रतिपन्नव्रतसंख्या०–मु. । तुलना–धर्मसंग्रहवृत्तिः पृ० १०७ ॥

न साक्षात् संख्यातिक्रमः, किन्तु व्रतसापेक्षस्य बन्धनादिभिः पञ्चभिर्हेतुभिः स्वबुद्ध्या व्रतभङ्गमकुर्वत एवातिचारो भवति। बन्धनादयश्च यथासंख्येन धन-धान्यादीनां परिग्रहविषयाणां सम्बध्यन्ते।

तत्र धनधान्यस्य बन्धनात् संख्यातिक्रमो यथा—कृतधनधान्यपरिमाणस्य कोऽपि लभ्यमन्यद्वा धनं धान्यं वा ददाति, तच्च व्रतभङ्गभयात् 'चतुर्मास्यादिपरतो गृहगतधनादिविक्रये वा कृते ग्रहीष्यामि' इति भावनया[2] बन्धनात् नियन्त्रणात्, रज्ज्वादिसंयमनात्, सत्यङ्कारदानादिरूपाद्वा स्वीकृत्य तद्गृह एव तत् स्थापयतोऽतिचारः १।

कुप्यस्य भावतः संख्यातिक्रमो यथा—कुप्यस्य या संख्या कृता तस्याः [3]कथञ्चिद् द्विगुणत्वे सति व्रतभङ्गभयाद् भावतो द्वयोर्द्वयोर्मीलनेन एकीकरणरूपात् पर्यायान्तरात् स्वाभाविकसंख्याबाधनात् संख्यामात्रपूरणाच्चातिचारः। अथवा भावतोऽभिप्रायादर्थित्वलक्षणाद् 'विवक्षितकालावधेः परतो ग्रहीष्यामि, अतो नान्यस्मै देयम्' इति पराप्रदेयतया व्यवस्थापयतोऽतिचारः २।

त[4]था गो-महिषी-वडवादेर्विवक्षितसंवत्सराद्यवधिमध्य एव प्रसवे अधिकगवादिभावाद् व्रतभङ्गः स्यादिति तद्भयात् कियत्यपि काले गते गर्भतो गर्भग्रा[5]हणाद् गर्भस्थगवादिभावेन बहिस्तदभावेन कथञ्चिद् व्रतभङ्गाद् व्रतिनोऽतिचारः ३।

---

१ तुलना–धर्मविन्दुटीका पृ० ४०–४१, पञ्चाशकवृत्ति पृ० १६, धर्मसंग्रहवृत्तिः पृ० १०७, प्रवचनसारोद्धारवृत्तिः पृ० ७५, नवपदप्रकरणबृहद्वृत्तिः पृ० १८५॥ २ भावनाया–शां. सं.॥ ३, ४ तुलना–धर्मविन्दुटीका पृ० ४१, पञ्चाशकवृत्तिः पृ० १७, धर्मसंग्रहवृत्तिः पृ० १०७, प्रवचनसारोद्धारवृत्ति· पृ० ७५, ५ ०ग्रहणाद्–मु.॥

॥ ५३७ ॥

तथा क्षेत्र-वास्तुनो योजनात् क्षेत्र-वास्त्वन्तरमीलनाद् गृहीतसंख्याया अतिक्रमोऽतिचारः। तथाहि—किलैकमेव क्षेत्रं वास्तु चेत्यभिग्रहवतोऽधिकतरतदभिलाषे सति व्रतभङ्गभयात् प्राक्तनक्षेत्र-वास्तुप्रत्यासन्नं तद् गृहीत्वा पूर्वेण सह तस्यैकत्वकरणार्थं वृति-भित्त्याद्यपनयनेन तत्तत्र योजयतो व्रतसापेक्षत्वात् कथञ्चिद्विरतिबाधनाच्चातिचारः ४।

तथा हिरण्यहेम्नोर्दानाद्वितरणाद् गृहीतसंख्याया अतिक्रमः। यथा केनापि चतुर्मासाद्यवधिना हिरण्यादिसंख्या प्रतिपन्ना, तेन च तुष्टराजादेः सकाशात् तदधिकं तल्लब्धम्, तदन्यस्मै व्रतभङ्गभयाद् ददाति 'पूर्णेऽवधौ ग्रहीष्यामि' इत्यभिप्रायेणेति व्रतसापेक्षत्वादतिचारः।

देशविरतौ षष्ठव्रतातिचाराः

एष गृहीतसंख्यातिक्रमः, पञ्चधाऽपि पञ्चभिरपि प्रकारैः, प्रतिपन्नव्रतस्य श्रावकस्य न युज्यते, कर्तुमिति शेषः, व्रतमालिन्यहेतुत्वात्। पञ्चधेत्युपलक्षणमन्येषां सहसाकारा-ऽनाभोगादीनाम्। उक्ता अणुव्रतानां प्रत्येकं पञ्च पञ्चातिचाराः ५ ॥ ९५ ॥

अथ गुणव्रतानामवसरः। तत्रापि प्रथमगुणव्रतस्य दिग्विरतिलक्षणस्यातिचारानाह—

स्मृत्यन्तर्धानमूर्ध्वाधस्तिर्यग्भागव्यतिक्रमः।
क्षेत्रवृद्धिश्च पञ्चेति स्मृता दिग्विरतिव्रते ॥ ९६ ॥

---

१ तुलना-धर्मबिन्दुटीका पृ० ४०, पञ्चाशकवृत्तिः पृ० १६, धर्मसंग्रहवृत्तिः पृ० १०७, प्रवचनसारोद्धारवृत्तिः पृ० ७५॥ २ 'वाटे प्राचीनावेष्टकौ वृतिः' इति अभिधानचिन्तामणौ श्लो० ९८२॥ ३ ०रतेर्बाध०-खं.॥ ४ तुलना-धर्मबिन्दुटीका पृ० ४०, पञ्चाशकवृत्तिः पृ० १६, धर्मसंग्रहवृत्तिः पृ० १०७, प्रवचनसारोद्धारवृत्तिः पृ० ७६॥ ५ धर्मसंग्रहवृत्तिः पृ० १०७॥

दिग्विरतिव्रते पञ्चातिचाराः, इत्यनेन रूपेण, स्मृताः पूर्वाचार्य्यैः । तद्यथा—

[1]स्मृतेर्योजनशतादिरूपदिक्परिमाणविषयाया अतिव्याकुलत्व-प्रमादित्व-मत्यपाटवादिनाऽन्तर्धानं भ्रंशः । तथाहि— केनचित् पूर्वस्यां दिशि योजनशतरूपं परिमाणं कृतमासीत्, गमनकाले च स्पष्टतया न स्मरति, किं शतं परिमाणं कृतमुत पञ्चाशत् ? तस्य चैवं पञ्चाशतमतिक्रमतोऽतिचारः, शतमतिक्रामतो भङ्गः, सापेक्षत्वान्निरपेक्षत्वाच्चेति । तस्मात् स्मर्तव्यमेव गृहीतव्रतम्, [2]स्मृतिमूलं हि सर्वमनुष्ठानमिति प्रथमोऽतिचारः १ ।

तथा ऊर्ध्वं पर्वत-तरुशिखरादेः, [3]अधोऽधोग्राम-भूमिगृह-कूपादेः, तिर्यक् पूर्वादिदिक्षु, योऽसौ भागो नियमितः प्रदेशः तस्य व्यतिक्रमः; [4]एते त्रयोऽतिचाराः । यत्सूत्रम्– '[5]उड्ढदिसिपमाणाइक्कमे अहोदिसिपमाणाइक्कमे तिरियदिसिपमाणाइक्कमे' [ उपासकदशाङ्गे ] इति । एते च अनाभोगाऽतिक्रमादिभिरेवाऽतिचारा भवन्ति, अन्यथा प्रवृत्तौ तु भङ्ग एव । यस्तु [6]न करोमि न [7]कारयामीति वा नियमं करोति स विवक्षितक्षेत्रात् परतः स्वयं गमनतः [8]परेण नयनानयनाभ्यां च दिक्प्रमाणातिक्रमं परिहरति, तदन्यस्य तु तथाविधप्रत्याख्यानाभावात् [9]परेण नयनानयनयोर्न दोषः २।३।४ ।

---

१ तुलना–धर्मविन्दुटीका पृ० ४१, पञ्चाशकवृत्तिः पृ० १८, धर्मसंग्रहवृत्तिः पृ० १०८, प्रवचनसारोद्धारवृत्तिः पृ० ७६, नवपदप्रकरणवृहद्वृत्तिः पृ० १९३ ॥ २ तुलना–तत्त्वार्थवृत्तिः सिद्धसेनीया ७।२५, पृ० १११ ॥ ३ अधोग्राम०–मु. । अधश्च अधोलौकिकग्राम०–तत्त्वार्थवृत्तिः सिद्धसेनीया पृ० १११ ॥ ४ तुलना–पञ्चाशकवृत्तिः पृ० १७–१८ ॥ ५ आवश्यकसूत्रेऽपि सूत्रमिदं वर्तते । ऊर्ध्वदिक्प्रमाणातिक्रमः अधोदिक्प्रमाणातिक्रमः, तिर्यग्दिक्प्रमाणातिक्रमः ॥ ६ तुलना–धर्मसंग्रहवृत्तिः पृ० १०८ ॥ ७ तुलना–धर्मविन्दुटीका पृ० ४१, पञ्चाशकवृत्तिः पृ० १८ ॥ ८ परेणानयननयनाभ्यां–शां. ॥ ९ परेणानयनानयनयो०–खं. शां. ॥

तथा क्षेत्रस्य[1] पूर्वादिदेशस्य दिग्व्रतविषयस्य ह्रस्वस्य सतः वृद्धिर्वर्धनं पश्चिमादिक्षेत्रान्तरपरिमाणप्रक्षेपेण दीर्घीकरणं क्षेत्रवृद्धिरिति पञ्चमोऽतिचारः। तथाहि-केनापि पूर्वापरदिशोः प्रत्येक योजनशतं गमनपरिमाणं कृतम्, स चोत्पन्नप्रयोजन एकस्यां दिशि नवतिं योजनानि व्यवस्थाप्य अन्यस्यां[2] तु दशोत्तरं योजनशतं करोति, उभाभ्यामपि प्रकाराभ्यां योजनशतद्वय-रूपस्य परिमाणस्याव्याहतत्वादित्येवमेकत्र क्षेत्रं वर्धयतो व्रतसापेक्षत्वादतिचार इति। यदि[3] चानाभोगात् क्षेत्रपरिमाणमति-क्रान्तो भवति तदा निवर्तितव्यं, ज्ञाते[4] वा न गन्तव्यम्, अन्योऽपि न विसर्जनीयः। अथानाज्ञया कोऽपि गतो भवेत् तदा यत् तेन लब्धं स्वयं वा विस्मृतितो गतेन लब्धं तत् परिहर्तव्यम् ॥ ९६ ॥

देशविरतौ भोजनमाश्रित्य सप्तमव्रतातिचाराः

अथ द्वितीयगुणव्रतस्य भोगोपभोगमानरूपस्यातिचारानाह—

सचित्तस्तेन सम्बद्धः संमिश्रो[5]ऽभिषवस्तथा।
दुष्पक्काहार इत्येते भोगोपभोगमानगाः ॥ ९७ ॥

---

१ तुलना-धर्मबिन्दुटीका पृ० ४१, पञ्चाशकवृत्तिः पृ० १८, धर्मसंग्रहवृत्तिः पृ० १०८, प्रवचनसारोद्धारवृत्तिः पृ० ७६, नवपद-प्रकरणबृहद्वृत्तिः पृ० १९३॥ २ अन्यस्यां दिशि तु दशोत्तरयोजनशतं-मु.॥ ३ यदि वाना-मु.॥ 'यदि च स्मृत्यन्तर्धात् परिमाणमतिक्रान्तो भवेत् तदा ज्ञाते निवर्तितव्यं परतश्च न गन्तव्यम्'-धर्मबिन्दुटीका पृ० ४१॥ ४ ज्ञाते वा न गन्तव्यम्—नास्ति सं.॥ ५ सन्मिश्रो-सं. मु.॥ अत्रेदं बोध्यम्—"भोयणओ समणोवासएणं पंच अइयारा जाणियव्वा न समायरियव्वा, तंजहा-सचित्ताहारे १, सचित्तपडिबद्धाहारे २, अप्पउलिओसहिभक्खणया ३, दुप्पउलिओसहिभक्खणया ४, तुच्छोसहिभक्खणया ५" इति उपासकदशाङ्गे। आवश्यकसूत्र-पञ्चाशकादौ एत एव पञ्चातिचारा निर्दिष्टाः। 'सचित्त-सम्बद्ध-सम्मिश्रा-ऽभिषव-दुष्पक्वाहाराः' [७।३] इति तत्त्वार्थसूत्रे। धर्मबिन्दु-योगशास्त्र-धर्मसंग्रहादौ तु एते पञ्च निर्दिष्टाः॥ 'अपक्वौषधभक्षणत्वम्, इदं प्रतीतम्, सचित्तसंमिश्राहार इति वा पाठान्तरम्' इति आवश्यकसूत्रस्य हारिभद्रयां वृत्तौ पृ० ८२८॥

[1]सह चित्तेन चेतनया वर्तते यः स सचित्त आहार एव, आहारस्तु दुष्पक्काहार इत्यस्मादाकृष्य सम्बध्यते, एवमुत्तरेष्वप्याहारशब्दो योजनीयः। सचित्तस्तु [2]कन्दमूलफलादिः [3]पृथिवीकायादिर्वा । [4]इह च निवृत्तिविषयीकृतप्रवृत्तौ भङ्गसद्भावेऽप्यतिचाराभिधानं व्रतसापेक्षस्यानाभोगा-ऽतिक्रमादिना प्रवृत्तौ द्रष्टव्यम् १ ।

तेन सचित्तेन सम्बद्धः [5]प्रतिबद्धः सचित्तसंबद्धः, सचेतनवृ[6]क्षादिसम्बद्धो [7]गुन्दादिः, पक्कफलादिर्वा, सचित्तान्तर्बीजः खर्जूराम्रादिः, तदाहारो हि सचित्ताहारवर्जकस्यानाभोगादिना सावद्याहारप्रवृत्तिरूपत्वादतिचारः। अथवा बीजं त्यक्ष्यामि तस्यैव सचेतनत्वात्, कटाहं तु भक्षयिष्यामि तस्याचेतनत्वादिति बुद्ध्या पक्वं खर्जूरादिफलं मुखे प्रक्षिपतः सचित्तवर्जकस्य सचित्तप्रतिबद्धाहारो द्वितीयः २।

तथा सचित्तेन मिश्रः शब[8]लं आहारः [9]सम्मिश्राहारः । यथा—

आर्द्रक-दाडिम-[10]बीजकु-चिर्भिटादिमिश्रः पूरणादिः, तिलमिश्रो यवधानादिर्वा, अयमप्यनाभोगा-ऽतिक्रमादिनाऽतिचारः :

---

१ द्रश्यतां तत्त्वार्थवृत्तिः सिद्धसेनीया ७।३०, पृ० ११४। तुलना-धर्मसंग्रहवृत्तिः पृ० १०८॥ २ तुलना-तत्त्वार्थवृत्तिः सिद्धसेनीया ७।३० पृ० ११५। ३ पृथ्वी०-मु.॥ ४, ५ तुलना-धर्मविन्दुटीका पृ० ४२, पञ्चाशकवृत्तिः पृ० १९, धर्मसंग्रहवृत्तिः पृ० १०८, प्रवचनसारोद्धारवृत्तिः पृ० ७६, नवपदप्रकरणवृहद्वृत्ति' पृ० २२४॥ ६ ०क्षादिना स. मु.॥ ७ गोंदादिः-शां. सं.॥ ८ सवल-सं.॥ ९ सन्मिश्रा०-मु०॥ १० ०वीजकुलिकाचिर्भटिकादिमिश्रः-मु । ०बीजपूरकचिर्भटिकादिमिश्रः-धर्मसंग्रहवृत्तिः पृ० १०९। कर्कटकवीजकौलिकाकुलस्य (कर्कटकवीजकोकिलिकाकुलादिना प्रत्यन्तरे)"——तत्त्वार्थवृत्तिः सिद्धसेनीया ७।३०, पृ० ११५॥ ०वीजकरवन्दकादिमिश्रः-प्रवचनसारोधारवृत्तिः पृ० ७७॥

॥ ५४१ ॥

देशविरतौ भोजनमाश्रित्य सप्तमव्रतातिचाराः

अथवा संभवत्सचित्तावयवस्यापक्वकणिकादेः पिष्टत्वादिना अचेतनमिति बुद्ध्या आहारः सम्मिश्राहारः व्रतसापेक्षत्वादतिचार इति तृतीयः ३ ।

अभिषवोऽनेकद्रव्यसंधाननिष्पन्नः सुरा-सौवीरकादिः मांसप्रकारखण्डादिर्वा, सुरा-मध्वाद्यभिस्यन्दिवृष्यद्रव्योपयोगो वा, अयमपि सावद्याहारवर्जकस्यानाभोगा-ऽतिक्रमादिनाऽतिचार इति चतुर्थः ४ ।

तथा दुष्पक्वो मन्दपक्वः, स चासावाहारश्च दुष्पक्वाहारः, स चार्धस्विन्नपृथुक-तण्डुल-यव-गोधूम-स्थूल-मण्डक-कंकडुकफलादिरैहिकप्रत्यवायकारी[2] यावता चांशेन सचेतनस्तावता परलोकमप्युपहन्ति । पृथुकादेर्दुष्पक्वतया[3] सम्भवत्सचेतनावयवत्वात् पक्वत्वेनाचेतन इति भुञ्जानस्याऽतिचार इति पञ्चमः ५ ।

---

१ तुलना–"सचित्तेन सम्मिश्राहारः पुष्प-फल-व्रीहि-तिलानां व्यतिमिश्रमोदकादिखाद्यस्यवा कुन्थु-पिपीलिकादिसूक्ष्मजन्तु-व्यतिमिश्रस्याभ्यवहारः" –तत्त्वार्थवृत्तिः सिद्धसेनीया ७।३० पृ० ११५। "सम्मिश्रम् अर्धपरिणतफलादि सद्यःपिष्टकणिकादि वा"— धर्मबिन्दुटीका। "नन्वपक्वौषधयो यदि सचेतनास्तदा 'सचित्तम्' इत्याद्यपदेनैवोक्तार्थत्वात् पुनर्वचनमसंगतम्, अथाचेतनास्तदा कोऽतिचारः, निरवद्यत्वात् तद्भक्षणस्य? इति। सत्यम्, किन्तु आद्यावतिचारौ सचेतनकन्दफलादिविषयौ, इतरे तु शाल्योषधिविषया इति विषयकृतो भेदः। अत एव मूलसूत्रे "अपउलिओसहिभक्खणया" [ उपासकदशाङ्गे ] इत्याद्युक्तम्। ततोऽनाभोगातिक्रमादिनाऽपक्वौषधिभक्षणमतिचारः । अथवा कणिकादेरपक्वतया संभवा(व)त्सचित्तावयवस्य पिष्टत्वादिनाऽचेतनमिदमिति बुद्ध्या भक्षणं व्रतसापेक्षत्वादतिचारः।"—पञ्चाशकवृत्तिः पृ० १९–२०। धर्मसंग्रहवृत्तिः पृ० १०९, प्रवचनसारोद्धारवृत्तिः पृ० ७६ ॥ २ ०कर्कटक०–मु. । –कटुक–क.। ०कंकडुक०–धर्मसंग्रहवृत्तिः पृ० १०९। ०कण्डुकादि–तत्त्वार्थवृत्तिः सिद्धसेनीया ७।३०, पृ० ११५ ॥ ३ तुलना–पञ्चाशकवृत्तिः पृ० २० ॥

केचित् त्वपक्काहारमप्यतिचारत्वेन वर्णयन्ति । अपक्कं चाग्न्यादिना यदसंस्कृतम् । एष च सचित्ताहारे प्रथमातिचारेऽन्तर्भवति । तुच्छौषधीभक्षणमपि[2] केचिदतिचारमाहुः । तुच्छौषधयश्च मुद्गादिकोमलशिम्बीरूपाः, ताश्च यदि[3] सचित्तास्तदा सचित्तातिचार एवान्तर्भवन्ति, अथ अग्निपाकादिना अचित्तास्तर्हि को दोषः ? इति । एवं रात्रिभोजनमद्यादिनिवृत्तिष्वपि अनाभोगा-ऽतिक्रमादिभिरतिचारा भावनीयाः । एते पञ्चातिचारा भोगोपभोगपरिमाणगता बोद्धव्याः ॥ ९७ ॥

अथ भोगोपभोगातिचारानुपसंहरन् भोगोपभोगव्रतस्य लक्षणान्तरं तद्गतांश्चातिचारानुपदर्शयितुमाह––

**अमी भोजनतस्त्याज्याः 'कर्मतः खरकर्म तु ।**
**तस्मिन् पञ्चदश मलान् कर्मादानानि संत्यजेत् ॥ ९८ ॥**

---

१ दृश्यतां पृ० ५४१ टि० १० ॥ २ ०षधि०-मु. ॥ ३ "ननु तुच्छौषधयोऽपक्वा दुःपक्वाः सम्यकपक्वा वा स्युः ? यद्याद्यौ तदा तृतीय-चतुर्थातिचाराभ्यामेवास्योक्तत्वात् पुनरुक्तत्वदोषः । अथ सम्यक्पक्वास्तदा निरवद्यत्वादेव कातिचारता तद्भक्षणस्येति ? सत्यम्, किन्तु ·· ··सचेतनत्वौषधित्वाभ्यां समानत्वेऽपि अतुच्छत्व-तुच्छत्वकृतो विशेषो दृश्यः । तत्र च कोमलमुद्गादिफलीर्विशिष्टतृप्त्यकारकत्वेन तुच्छाः सचेतना एव अनाभोगातिक्रमादिना भुञ्जानस्य तुच्छौषधिभक्षणमतिचारः । अथवा अत्यन्तावद्यभीरुतयाऽचित्ताहारताऽभ्युपगता, तत्र च यत् तृप्तिकारकं तदचेतनीकृत्यापि भक्षयतु सचेतनस्यैव वर्जनीयत्वाभ्युपगमात् । यत् पुनस्तृप्तिसम्पादनासमर्था अप्योषधीर्लौल्येनाचेतनीकृत्य भुङ्क्ते तत् तुच्छौषधिभक्षणमतिचारः, तत्र भावतो विरतेर्विराधितत्वाद् द्रव्यतस्तु पालितत्वादिति । एवं रात्रिभोजन-मांसादिव्रतेष्वपि अनाभोगातिक्रमादिभिरतिचारा भावनीयाः"––पञ्चाशकवृत्तिः पृ० २० । धर्मसंग्रहवृत्ति पृ० १०९, प्रवचनसारोद्धारवृत्तिः पृ० ७६ ॥

॥ ५४३ ॥

अमी उक्तस्वरूपाः पञ्चातिचाराः, भोजनतो भोजनमाश्रित्य, त्याज्या वर्जनीयाः। भोगोपभोगमानस्य च व्याख्याना-न्तरम्—[1]भोगोपभोगसाधनं यद् द्रव्यं तदुपार्जनाय यत् कर्म व्यापारस्तदपि भोगोपभोगशब्देनोच्यते, कारणे कार्योपचारात्। ततश्च कर्मतः कर्माश्रित्य खरं कठोरं प्राणिबाधकं यत् कर्म कोटपाल-गुप्तिपालन-वीत[2]पालनादिरूपं तत्त्याज्यम्। तस्मिन् खरकर्मत्यागलक्षणे भोगोपभोगव्रते, पञ्चदश मलानतिचारान् संत्यजेत्। ते च कर्मादानशब्देनोच्यन्ते, कर्मणां पापप्रकृतीना-मादानानि कारणानीति कृत्वा ॥ ९८ ॥

देशविरतौ कर्माश्रित्य सप्तमव्रता-तिचाराः

तानेव नामतः श्लोकद्वयेन दर्शयति—

अङ्गार-वन-शकट-भाटक-स्फोटजीविका [:]।
दन्त-लाक्षा-रस-केश-विषवाणिज्यकानि च ॥ ९९ ॥
यन्त्रपीडा निर्लाञ्छनमसतीपोषणं तथा।
दवदानं सरःशोष इति पञ्चदश त्यजेत् ॥ १०० ॥

जीविकाशब्दः प्रत्येकं सम्बध्यते। अङ्गारजीविका १, वनजीविका २, शकटजीविका ३, भाटकजीविका ४, स्फोट-जीविका ५। उत्तरार्धेऽपि वाणिज्यशब्दः प्रत्येकमभिसम्बध्यते। दन्तवाणिज्यं ६, लाक्षावाणिज्यं ७, [3]रसवाणिज्यं ८,

१ तुलना-धर्मसंग्रहवृत्तिः पृ० ११०॥ २ "वीतं फल्गु हय-द्विपम्"॥ १२५२ इति अभिधानचिन्तामणौ॥ ३ रसवाणिज्यं-नास्ति शां. सं.॥

केशवाणिज्यं ९, विषवाणिज्यं[1] १०, यन्त्रपीडा ११, निर्लाञ्छनम् १२, असतीपोषणं १३, दवदानं १४, सरःशोषः १५ इत्येतान् पञ्चदशातिचारान् त्यजेत् ॥ ९९ ॥ १०० ॥

क्रमेण पञ्चदशातिचारान् व्याचष्टे। तत्राङ्गारजीविकामाह—

अङ्गार-भ्राष्ट्रकरणं कुम्भा-ऽयः-स्वर्णकारिता।
ठठारत्वेष्टकापाकाविति ह्यङ्गारजीविका ॥ १०१ ॥

अङ्गारकरणं काष्ठदाहेनाङ्गारनिष्पादनं तद्विक्रयश्च, अङ्गारकरणे हि षण्णां जीवनिकायानां विराधनासम्भवः। एवं च ये येऽग्निविराधनारूपा आरम्भास्ते तेऽङ्गारकर्मण्यन्तर्भवन्ति, प्रपञ्चार्थं तु भेद उक्तः। भ्राष्ट्रस्य चणकादिभर्जनस्थानस्य करणं भ्राष्ट्रकरणम्, भ्राष्ट्रजीविकेत्यर्थः। तथा कुम्भकारिता कुम्भकरण-पाचन-विक्रयनिमित्ता जीविका। तथा अयो लोहम्, तस्य करण-घटनादिना जीविका। स्वर्णकारिता सुवर्ण-रूप्ययोर्गालन-घटनादिना जीविका। कुम्भा-ऽयः-स्वर्णानि करोतीत्येवंशीलः, तस्य भावस्तत्ता। तथा ठठारत्वं शुल्व-नाग-वङ्ग-कांस्य-पित्तलादीनां करण-घटनादिना जीविका, इष्टकापाकः इष्टका-कवेल्लुकादीनां पाकः, तेन जीविका। इत्येवंप्रकारा अङ्गारजीविका ॥ १०१ ॥

---

१ विषवाणिज्यं–नास्ति स. ॥ २ तुलना–धर्मसंग्रहवृत्तिः पृ० ११० ॥ शुल्वं ताम्रम्, नागः सीसम्, वङ्गं त्रपु ॥

॥ ५४५ ॥

देशविरतौ पञ्चदश-कर्मादान-रूपाः सप्तम-व्रतातिचाराः

अथ वनजीविकामाह—

छिन्नाच्छिन्नवन-पत्र-प्रसून-फलविक्रयः ।
कणानां द्‌लनात् पेषाद् वृत्तिश्च वनजीविका[1] ॥ १०२ ॥

छिन्नस्य द्विधाकृतस्य अच्छिन्नस्य च वनस्य वनस्पतिसमूहस्य पत्राणां प्रसूनानां फलानां च छिन्नाच्छिन्नानां विक्रयो वनजीविकेत्युत्तरेण सम्बन्धः। कणानां च घरट्टादिना दलनाद् द्वैधीकरणात्, शिला-शिलापुत्रकादिना पेषात् चूर्णीकरणाद् या वृत्तिः सा वनजीविका। वनजीविका च[2] वनस्पतिकाय[3]विघातसम्भवा ॥ १०२ ॥

अथ शकटजीविकामाह—

शकटानां तदङ्गानां घटनं खेटनं तथा ।
विक्रयश्चेति शकटजीविका परिकीर्तिता[4] ॥ १०३ ॥

[5]शकटानां चतुष्पदवाह्यानां वाहनानाम्, तदङ्गानां शकटाङ्गानां चक्रादीनाम्, घटनं स्वयं परेण वा निष्पादनम्, खेटनं वाहनम्, तच्च शकटानामेव सम्भवति स्वयं परेण वा, विक्रयश्च शकटानां तदङ्गानां च, इति सकलभूतोपमर्दजननी गवादीनां च वध-बन्धादिहेतुः शकटजीविका प्रकीर्तिता ॥ १०३ ॥

---

१ उद्धृतोऽयं श्लोकः प्रवचनसारोद्धारवृत्तौ [पृ० ६२] मतान्तररूपेण ॥ २ च-नास्ति खं. ॥ ३ कायादिघात०—मु. ॥ ४ प्रवचनसारोद्धारवृत्तौ श्लोकोऽयमुद्धृतः पृ० ६२ ॥ ५ तुलना—धर्मसंग्रहवृत्तिः पृ० ११० ॥

अथ भाटकजीविकामाह—

शकटोक्ष-लुलायोष्ट्र-खरा-ऽश्वतर-वाजिनाम् ।
भारस्य वाहनाद् वृत्तिर्भवेद् भाटकजीविका ॥ १०४ ॥

शकटशब्द उक्तार्थः, उक्षाणो बलीवर्दाः, लुलाया महिषाः, उष्ट्राः करभाः, खरा रासभाः, अश्वतरा वेसराः, वाजिनोऽश्वाः, एषां[1] भाटकनिमित्तं यद्भारवाहनं तस्माद् या वृत्तिः सा भाटकजीविका ॥ १०४ ॥

अथ स्फोटजीविकामाह—

सरः-कूपादिखनन-शिलाकुट्टनकर्मभिः ।
पृथिव्यारम्भसम्भूतैर्जीवनं स्फोटजीविका ॥ १०५ ॥

सरसः कूपस्य, आदिग्रहणाद् वापी-दीर्घिकादेः,[2] खननमोड्डकर्म, हलादिना वा क्षेत्रादेर्भूविदारणं, शिलाकुट्टनकर्म पाषाणघटनकर्म, एतैः, पृथिव्याः पृथिवीकायस्य य आरम्भ उपमर्दस्तस्य[3] सम्भूतं सम्भवो येभ्यस्तैः पृथिव्यारम्भसम्भूतैः, उपलक्षणं चैतद् भूमिखनने वनस्पति-त्रसादिजन्तुघातानाम् । एभिर्जीवनं स्फोटजीविका, स्फोटः पृथिव्या[4] विदारणम्, तेन जीविका स्फोटजीविका ॥ १०५ ॥

---

१ एतेषां-मु. ॥ २ तुलना-धर्मबिन्दुटीका पृ० ४२, पञ्चाशकवृत्तिः पृ० २०, नवपदप्रकरणबृहद्वृत्तिः पृ० २०० ॥
३ ०स्तदर्थं संभूतैः पृथिव्यारम्भसम्भूतैः-शां. खं. ॥ ४ पृथिव्यादिविदारणं-शां. ॥

अथ दन्तवाणिज्यमाह—

दन्त-केश-नखा-ऽस्थि-त्वग्-रोम्णो ग्रहणमाकरे ।
त्रसाङ्गस्य वणिज्यार्थं दन्तवाणिज्यमुच्यते ॥ १०६ ॥

दन्ता हस्तिनाम्, उपलक्षणत्वादन्येऽपि त्रसजीवावयवा दन्तग्रहणेन गृह्यन्ते, तदेवाह—केशाश्चमर्यादीनां, नखा घूकादीनाम्, अस्थीनि शङ्खादीनाम्, त्वक् चित्रकायादीनाम्[1], रोमाणि हंसादीनाम्, तेषां ग्रहणं मूल्यादिना स्वीकारः, रोम्ण इत्येकवचनं प्राण्यङ्गत्वात्[2]। आकरे तदुत्पत्तिस्थाने, त्रसाङ्गस्य त्रसजीवावयवस्य, वणिज्यार्थं वणिज्यनिमित्तम्[3] । आकरे हिं दन्तादिग्रहणार्थं पुलिन्दानां यदा द्रव्यं ददाति तदा तत्प्रतिक्रियार्थं हस्त्यादिर्वधं[4] ते कुर्वन्ति, आकरग्रहणं चानाकरे दन्तादेर्ग्रहणे विक्रये च न दोष इति ज्ञापनार्थम् ॥ १०६ ॥

अथ लाक्षावाणिज्यमाह—

लाक्षा-मनःशिला-नीली-धातकी-टङ्कणादिनः
विक्रयः पापसदनं लाक्षावाणिज्यमुच्यते ॥ १०७ ॥

---

१ चित्रकादीनां-मु.। चित्रकायो व्याघ्रः ॥ २ "प्राणितूर्याङ्गाणाम्" सि० ३।१।१३७ ॥ ३ वाणिज्यनिमित्तम्-शां. सं. विना ॥ ४ ०दिर्वधं-खं. ॥

लाक्षा जतु, अत्रापि लाक्षाग्रहणमुपलक्षणमन्येषां सावद्यानां मनःशिलादीनाम् । तान्येवाह—मनःशिला कुंनटी[1], नीली गुलिका, धातकी वृक्षविशेषः, तस्य[2] त्वक् पुष्पं च मद्यसन्धानहेतुर्धातकी, टङ्कणः क्षारविशेषः; आदिशब्दात् संकूडादयो[3] गृह्यन्ते, एषां विक्रयः । स च पापसदनं टङ्कण-मनःशिलयोर्बाह्यजीवघातकत्वेन, नील्या जन्तुघाताविनाभावेन, धातक्या मद्यहेतुत्वेन, तत्कल्कस्य च कृमिहेतुत्वेन पापसदनत्वम्, ततस्तद्विक्रयस्यापि पापसदनत्वम् । तदेतद् लाक्षावाणिज्यमुच्यते ॥ १०७ ॥

अथ रस-केशवाणिज्ये एकेनैव श्लोकेनाह—

नवनीत–वसा–क्षौद्र–मद्यप्रभृतिविक्रयः ।
द्विपाच्चतुष्पाद्विक्रयो वाणिज्यं रस–केशयोः ॥ १०८ ॥

नवनीतं दधिसारं, वसा मेदः, क्षौद्रं मधु, मद्यं सुरा, प्रभृतिग्रहणात् मज्जादिग्रहः । एषां विक्रयो रसवाणिज्यम्, द्विपदां मनुष्यादीनां[4] चतुष्पदां गवाश्वादीनां विक्रयः केशवाणिज्यम्, सजीवानां विक्रयः केशवाणिज्यमजीवानां तु जीवाङ्गानां विक्रयो दन्तवाणिज्यमिति विवेकः । रस-केशयोरिति यथासंख्येन योगः । दोषास्तु नवनीते जन्तुसंमूर्च्छनं, वसा-क्षौद्रयोर्जन्तुघातोद्भवत्वं, मद्यस्य मदजननं[5] तद्गतकृमिविघातश्चेति, द्विपाच्चतुष्पाद्विक्रये तु तेषां पारवश्यं वध-बन्धादयः क्षुत्पिपासापीडा चेति ॥ १०८ ॥

---

१ कुटनटी–सं. ॥ २ तस्या.–मु. ॥ ३ संकूटादयो–मु. । तुलना- प्रवचनसारोद्धारवृत्तिः पृ० ६३ ॥ ४ मानुष्यादीनां–सं. ॥ ५ मदनजननं–मु. ॥

॥ ५४९ ॥

अथ विषवाणिज्यमाह—

विषा-ऽस्त्र-हल-यन्त्रा-ऽयो-हरितालादिवस्तुनः।
विक्रयो जीवितघ्नस्य विषवाणिज्यमुच्यते ॥ १०९ ॥

विषं शृङ्गिकादि[1], तच्चोपलक्षणं जीवघातहेतूनामस्त्रादीनाम्। तान्येवाह—अस्त्रं खड्गादि, हलं लाङ्गलम्, यन्त्रमरघट्टादि, अयः कुशी-कुद्दालादिरूपम्, हरितालं वर्णकविशेषः। आदिशब्दादन्येषामुपविषाणां ग्रहणम्। एवमादिवस्तुनो विक्रयो विषवाणिज्यम्। विषादेर्विशेषणं 'जीवितघ्नस्य', अमीषां जीवितघ्नत्वं प्रसिद्धमेव ॥ १०९ ॥

अथ यन्त्रपीडाकर्माह—

तिलेक्षु-सर्षपैरण्ड-जलयन्त्रादिपीडनम्।
दलतैलस्य च कृतिर्यन्त्रपीडा प्रकीर्तिता ॥ ११० ॥

यन्त्रशब्दः प्रत्येकमभिसम्बध्यते। तिलयन्त्रं तिलपीलनोपकरणम्, इक्षुयन्त्रं कोल्हुकादि, सर्षपैरण्डयन्त्रे तत्पीलनोपकरणे, जलयन्त्रमरघट्टादि, दलतैलं[2] यत्र दलं तिलादि दीयते तैलं च प्रतिगृह्यते, तस्य कृतिर्विधानमिति। यन्त्रपीडा यन्त्रपीडनम्।

१ अभिधानचिन्तामणौ ११९५-११९९ श्लोकेषु स्थावरासु विषजातिषु शृङ्गिकोऽपि परिगणितः ॥ २ ०ते तद्दलतैलं तस्य-मु., धर्मसंग्रहवृत्तिः पृ० ११२ ॥

यन्त्रपीडाकर्मणश्च पीडनीयतिलादिक्षोदात् तद्गतत्रसजीववधाच्च सदोषत्वम्, लौकिका अपि ह्याचक्षते–"दशसूनासमं चक्रम्" [ मनुस्मृतौ ४।८५ ] इति ॥ ११० ॥

अथ निर्लाञ्छनकर्माह—

नासावेधोऽङ्कनं मुष्कच्छेदनं पृष्ठगालनम् ।
कर्ण-कम्बलविच्छेदो निर्लाञ्छनमुदीरितम् ॥ १११ ॥

नितरां लाञ्छनमङ्गावयवच्छेदः, तेन कर्म जीविका निर्लाञ्छनकर्म । तद्भेदानाह—नासावेधो गो-महिषादीनाम्, अङ्कनं गवाश्वादीनां चिह्नकरणम्, मुष्कोऽण्डस्तस्य च्छेदनं वर्धितकीकरणं गवाश्वादीनामेव, पृष्ठगालनं करभाणाम्, गवां च कर्ण-कम्बलच्छेदः । एषु जन्तुबाधा व्यक्तैव ॥ १११ ॥

अथासतीपोषणमाह—

सारिका-शुक-मार्जार-श्व-कुक्कुट-कलापिनाम् ।
पोषो दास्याश्च वित्तार्थमसतीपोषणं विदुः ॥ ११२ ॥

असत्यो दुःशीलास्तासां पोषणम्, लिङ्गमतन्त्रम्, शुकादीनां पुंसामपि पोषणमसतीपोषणम्, सारिका व्यक्तवाक्

---

१ "दशसूनासमं चक्रं दशचक्रसमो ध्वजः। दशध्वजसमो वेशो दशवेशसमो नृपः ॥" इति सम्पूर्णः श्लोकः ॥
२ कंबलविच्छेदः–मु. ॥

॥ ५५१ ॥

पक्षिविशेषः, शुकः कीरः, मार्जारो विडालः, श्वा कुक्कुरः, कुक्कुंटस्ताम्रचूडः, कलापी मयूरः, ऐषां तिरश्चां पोषः पोषणम्, दास्याश्च पोष इति वर्तते, स च भाटीग्रहणार्थमसतीपोषः। एषां च दुःशीलानां पोषणं पापहेतुरेव ॥ ११२ ॥

अथ दवदान-सरःशोषावेकेन श्लोकेनाह—

व्यसनात् पुण्यबुद्धया वा दवदानं भवेद् द्विधा।
सरःशोषः सरः-सिन्धु-ह्रदादेरम्बुसंप्लवः ॥ ११३ ॥

दवस्य दवाग्नेः तृणादिदहननिमित्तं दानं वितरणं दवदानम्। तच्च द्विधा संभवति—व्यसनात् फलनिरपेक्षतात्पर्यात्, यथा वनेचरा एवमेवाग्निं ज्वालयन्ति; पुण्यबुद्धया वा, यथा मे मरणकाले इयन्तो मम श्रेयोऽर्थं धर्मदीपोत्सवाः करणीया इति। अथवा

१ ०कुर्कुट० मु.॥ २ एतेषां-मु.॥ ३ ज्वल०-सं.॥ ४ अत्रेदं ध्येयम्-हस्तलिखितप्रतिषु अत्रैवंविधाः पाठा उपलभ्यन्ते —यथा मेदा मरणकाले-ख.। यथा मंदा मरणकाले-शां.। यथा मेधा मरणकाले-सं.। अणहिलपुरपत्तने [—'पाटण'नगरे] ताल-पत्रोपरि लिखितं प्राचीनं प्रतित्रयं विद्यते, तत्रापि एकस्यां प्रतौ 'यथा मेदा मरणकाले' इति पाठः, अपरस्मिन् प्रतिद्वये तु 'यथा मे मरणकाले' इति पाठो लभ्यते, अयं च पाठः सुगमत्वादस्माभिर्मूले स्वीकृतः। 'यथा मे दवा देया मरणकाले' इति पाठस्तु मु०मध्ये एव दृश्यते। इदं पुनरत्रावधेयम्-यदि तु 'यथा मेदा मरणकाले' इति पाठोऽत्राद्रियते तदा 'मेद'जातौ जाता लोका 'मेद'शब्देनात्र विवक्षिताः, इयं हि जातिः 'मेद'शब्देन 'मेत'शब्देन वा शास्त्रेषु निर्दिष्टा, दृश्यतां स्थानाङ्गसूत्रे सू० ५५३, अनुयोगद्वारसूत्रे सू० २६०। तुलना—"मम श्रेयोऽर्थं मरणकाले इयन्तो धर्मदीपोत्सवाः करणीयाः"—धर्मसंग्रहवृत्तिः पृ० ११२। "यथा मदीयमरणसमये इयन्तो मम श्रेयोऽर्थं धर्मदीपोत्सवाः करणीयाः"—प्रवचनसारोद्धारवृत्तिः पृ० ६३ ॥

तृणदाहे सति नवतृणाङ्कुरोद्भेदाद् गावश्चरन्तीति, क्षेत्रे वा सस्यसम्पत्तिवृद्धयेऽग्निज्वालनम्। अत्र जीवकोटीनां वधः स्यात्। सरसः शोषः सरःशोषः, सरोग्रहणमुपलक्षणं जलाशयान्तराणाम्। तदेवाह—सरः-सिन्धु-ह्रदादिभ्योऽम्बुनो[1] जलस्य संप्लवः सारणी-कर्षणं धान्यवपनार्थम्, आदिशब्दात् तडागादिपरिग्रहः। तत्राऽखातं सरः, खातं तडागम्। सरः[2]शोषे च[3] जलस्य तद्गतानां त्रसानां तत्प्लावितानां च षण्णां जीवनिकायानां वध इति सरःशोषे दोषः[4]। इत्युक्तानि पञ्चदश कर्मादानानि। दिङ्मात्रं[5] चेदम् एवंजातीयानां बहूनां सावद्यकर्मणाम्, न पुनः परिगणनमिति। इह चैवं विंशतिसंख्यातिचाराभिधानमन्यत्रापि पञ्चातिचारसंख्यया तज्जातीयानां व्रतपरिणामकालुष्यनिबन्धनविधीनां[6] संग्रह इति ज्ञापनार्थम्। तेन स्मृत्यन्तर्धानादयो यथासम्भवं सर्वव्रतेष्वतिचारा दृश्याः।

नन्वङ्गारकर्मादयः कथं खरकर्मण्यतिचाराः? खरकर्मरूपा एव ह्येते। सत्यम्, खरकर्मरूपा एवैते, किन्त्वनाभोगादिना क्रियमाणा अतिचाराः, उपेत्य क्रियमाणास्तु भङ्गा एवेति ॥ ११३ ॥

अथानर्थदण्डविरतिव्रतस्यातिचारानाह—

संयुक्ताधिकरणत्वमुपभोगातिरिक्तता ॥
मौखर्य्यमथ कौत्कुच्यं कन्दर्पोऽनर्थदण्डगाः ॥ ११४ ॥

---

१ ०दिभ्यो योऽम्बुनो-मु. ॥ २ सरः०-नास्ति सं. ॥ ३ च-नास्ति शां. ॥ ४ दोषाः-शां. खं. ॥ ५ दिग्मात्रं-शां खं. सं. । तुलना-धर्मबिन्दुटीका पृ० ४२। पञ्चाशकवृत्तिः पृ० २०-२१। धर्मसंग्रहवृत्तिः पृ० ११२॥ ६ ०विधीनामपरेषां संग्रह-मु., धर्मबिन्दुटीका।

अनर्थदण्डगा इत्यनर्थदण्डविरतिव्रतगामिन एते पञ्चातिचाराः। तद्यथा—अधिक्रियते दुर्गतावात्माऽनेनेत्यधिकरणमु-दूखलादिसंयुक्तम्, उदूखलेन मुशलम्, हलेन फालः, शकटेन युगम्, धनुषा शराः, एवमेकमधिकरणमधिकरणान्तरेण संयुक्तं संयुक्ताधिकरणम्, तस्य भावस्तत्त्वम्। इह च श्रावकेण संयुक्तमधिकरणं न धारणीयम्। तथा सति हि यः कश्चित् संयुक्त-मधिकरणमाददीत, वियुक्ताधिकरणतायां तु सुखेन परः प्रतिषेधितुं शक्यते। एतच्च हिंस्रप्रदानरूपस्यानर्थदण्डस्यातिचारः १।

तथा उपभोगस्योपलक्षणत्वाद् भोगस्य चोक्तनिर्वचनस्य यदतिरिक्तत्वमतिरेकः सा उपभोगातिरिक्तता। अयं प्रमादा-चरितस्यातिचारः। इह च स्नान-पान-भोजन-चन्दन-कुङ्कुम-कस्तूरिका-वस्त्रा-ऽऽभरणादीनामतिरिक्तानामारम्भोऽनर्थदण्डः।

देशविरतौ अष्टमव्रतातिचाराः

अत्रापि वृद्धसम्प्रदायः—अतिरिक्तानि बहूनि तैलामलकानि यदि गृह्णाति तदा तल्लौल्येन बहवः स्नानार्थं तडागादौ व्रजन्ति, ततश्च पूतरकाप्कायादिवधोऽधिकः स्यात्, न चैवं कल्पते, ततः को विधिः? तत्र स्नाने तावद् गृह एव स्नातव्यम्।

---

१ तुलना-पञ्चाशकवृत्तिः पृ० २१, प्रवचनसारोद्धारवृत्तिः पृ० ७७। 'संयुक्ताधिकरण' स्थाने 'असमीक्ष्याधिकरणम्' अतिचारत्वेन तत्त्वार्थसूत्रे [७।२७] धर्मविन्दौ [पृ० ४३] च वर्णितम्। "असमीक्ष्य अनालोच्य प्रयोजनमात्मनोऽर्थमधिकरणम् उचितादुपभोगादतिरेककरणम् असमीक्ष्याधिकरणं मुसल-दात्र-शिलापुत्रक-शस्त्र-गोधूमयन्त्रकशिला-ऽग्न्यादिदानलक्षणम् असमीक्ष्य कुर्वाणः स्वात्मानं नरकादिष्वधिकरोति येन तदधिकरणम्"-तत्त्वार्थवृत्तिः सिद्धसेनीया [७।२७] पृ० ११२-११३। २ सराः-शां. खं.। शरः-धर्मसंग्रहवृत्तिः पृ० ११३॥ ३ तुलना-प्रवचनसारोद्धारवृत्तिः पृ० ७७, धर्मविन्दुटीका पृ० ४३॥ ४ प्रतिषेधयितुं-मु.॥ ५ स्नानेच्छुना तावद्-मु० धर्मसंग्रहवृत्तिः पृ० ११३। धर्मविन्दुटीकायां [पृ० ४३] पञ्चाशकवृत्तौ [पृ० २२] प्रवचनसारोद्धारवृत्तौ [पृ० ७७] नवपदप्रकरणबृहद्वृत्तौ [पृ० २३९] चापि 'स्नाने तावद्' इत्येव पाठः॥

तद्भावे तु तैलामलकैर्गृह एव शिरो घर्षयित्वा तानि सर्वाणि शाटयित्वा तडागादीनां तटे निविष्टोऽञ्जलिभिः स्नाति। तथा येषु पुष्पादिषु संसक्तिः सम्भवति तानि परिहरति, एवं सर्वत्र वाच्यमिति द्वितीयोऽतिचारः २।

तथा मुखमस्यास्तीति मुखरोऽनालोचितभाषी वाचाटः, तस्य भावो मौखर्य्यं धाष्टर्यप्रायमसभ्यासम्बद्धबहुप्रलापित्वम्, अयं च पापोपदेशस्यातिचारः, मौखर्य्ये सति पापोपदेशसम्भवादिति तृतीयः ३।

तथा कुदिति कुत्सायां निपातो, निपातानामानन्त्यात्। कुत् कुत्सितं कुचति भ्रू-नयनोष्ठ-नासा-कर-चरण-मुखविकारैः सङ्कुचतीति कुत्कुचः, तस्य भावः कौत्कुच्यम्, अनेकप्रकारा भण्डादिविडम्बनक्रिया इत्यर्थः। अथवा कौकुच्यमिति पाठः, तत्र कुत्सितः कुचः कुकुचः सङ्कोचादिक्रियाभाक्, तद्भावः कौकुच्यम्, अत्र च येन परो हसति आत्मनश्च लाघवं भवति न तादृशं वक्तुं चेष्टितुं वा कल्पते, [1]प्रमादात्तथाचरणे [2]चातिचार इति चतुर्थः ४।

तथा कन्दर्पः कामः, तद्धेतुस्तत्प्रधानो वा वाक्प्रयोगोऽपि कन्दर्पः। इह च सामाचारी–श्रावकेण न तादृशं वक्तव्यं येन स्वस्य परस्य वा मोहोद्रेको भवतीति पञ्चमः ५।

एतौ द्वावपि प्रमादाचरितस्यातिचारौ इत्यवसिता गुणव्रतातिचाराः ॥ ११४ ॥

अथ शिक्षाव्रतातिचारावसरः। तत्रापि सामायिकस्य तावदतिचारानाह—

कायवाङ्मनसां दुष्टप्रणिधानमनादरः।
स्मृत्यनुपस्थापनं च स्मृताः सामायिकव्रते ॥ ११५ ॥

१ प्रमादेन तया–खं. ॥ २ वा अति०–खं.। चाति०–मु०. प्रवचनसारोद्धारवृत्तिः पृ० ७७ ॥

कायस्य वाचो मनसश्च प्रणिहितिः प्रणिधानम्, दुष्टं च तत् प्रणिधानं च दुष्टप्रणिधानं सावद्ये प्रवर्तनम्, कायदुष्प्रणिधानं वाग्दुष्प्रणिधानं मनोदुष्प्रणिधानं चेत्यर्थः । तत्र शरीरावयवानां पाणि-पादादीनामनिभृततावस्थापनं कायदुष्प्रणिधानम्, वर्णसंस्काराभावोऽर्थानवगमश्चापलं च वाग्दुष्प्रणिधानम्, क्रोध-लोभ-द्रोहा-ऽभिमानेर्ष्यादयः कार्यव्यासङ्गसम्भ्रमश्च मनोदुष्प्रणिधानम्, एते त्रयोऽतिचाराः । यदाहुः—

" अनिरिक्खियापमज्जिय थंडिल्ले ठाणमाइ सेवंतो ।
हिंसाभावे वि न सो कडसामइओ पमायाओ ॥ १ ॥ [ श्रावकप्रज्ञप्तौ ३१५ ]
" कडसामइओ पुव्विं बुद्धीए पेहिऊण भासिज्जा ।
सइ निरवज्जं वयणं अन्नह सामाइयं न हवे ॥ २ ॥" [ श्रावकप्रज्ञप्तौ ३१४ ]
सामाइयं तु काउं घरचिंतं जो उ चिंतए सड्ढो ।
अट्टवसट्टोवगओ निरत्थयं तस्स सामइयं ॥ ३ ॥" [ श्रावकप्रज्ञप्तौ ३१३, सम्बोधप्रकरणे ७।१०९ गा० १२२६ ]

---

१ दुःप्र०–खं. सं. ॥ २ अनिरीक्ष्याप्रमृज्य स्थण्डिले स्थानादि सेवमानः । हिंसाऽभावेऽपि न स कृतसामायिकः प्रमादात् ॥ कृतसामायिकः पूर्वं बुद्ध्या प्रेक्ष्य भाषेत । सकृद् निरवद्यं वचनमन्यथा सामायिकं न भवेत् ॥ सामायिकं तु कृत्वा गृहचिन्तां यस्तु चिन्तयेच्छ्राद्धः । आर्तवशार्तोपगतो निरर्थकं तस्य सामायिकम् ॥ एतास्त्रयो गाथाः पञ्चाशकवृत्तौ [ पृ० २३ ] नवपदप्रकरणबृहद्वृत्तौ [पृ० २६२] प्रवचनसारोद्धारवृत्तौ [पृ० ७८] धर्मसंग्रहवृत्तौ [ पृ० ११४ ] चापि उद्धृताः ॥ ३–४. ०सामाइओ—सं. मु. ॥ ५ सय नि०–सं. ॥ ६ 'सामाइयं तु काउं गिहकज्जं जो य' इति सम्बोधप्रकरणे पाठः ॥ ७ सामाइयं–सं. मु., सम्बोधप्रकरणे च ॥

तथाऽनादरोऽनुत्साहः– प्रतिनियतवेलायां सामायिकस्याकरणम्, यथाकथञ्चिद्वा करणम्, करणान्तरमेव पारणं च। यदाहुः—"काऊण तक्खणं चिअ पारेइ करेइ वा जहिच्छाए।

अणवट्ठियसामइयं अणायराओ न तं सुद्धं ॥ १ ॥ [श्रावकप्रज्ञप्तौ ३१७]। इति चतुर्थः ॥ ४ ॥

स्मृतौ स्मरणे सामायिकस्याऽनुपस्थापनं स्मृत्यनुपस्थानम्, 'सामायिकं मया कर्त्तव्यं न कर्तव्यम्' इति वा 'सामायिकं मया कृतं न कृतम्' इति वा प्रबलप्रमादाद्यदा न स्मरति तदा अतिचारः, स्मृतिमूलत्वान्मोक्षसाधनानुष्ठानस्य। यदाहुः–

"न सरइ पमायजुत्तो जो सामइयं कया य कायव्वं।

कयमकयं वा तस्स हु कयं पि विहलं तयं नेयं ॥१॥ [श्रावकप्रज्ञप्तौ ३१६, सम्बोधप्रकरणे ७।११० गा० १२२६]

ननु कायदुष्प्रणिधानादौ सामायिकस्य निरर्थकत्वादिप्रतिपादनेन वस्तुतोऽभाव एवोक्तः, अतिचारश्च मालिन्यरूप एव भवतीति कथं सामायिकाभावे स भवेत्? अतो भङ्गा एवैते नातिचारा इति। उच्यते—अनाभोगतोऽतिचारत्वम्।

---

१ ०करणं प्रबलप्रमादादिदोषात् करणानन्तरमेव-मु.॥ २ कृत्वा तत्क्षणमेव पारयति करोति वा यदृच्छया। अनवस्थितसामायिकम् अनादराद् न तच्छुद्धम्॥ गाथेयं पञ्चाशकवृत्तौ [पृ० २४,] नवपदप्रकरणबृहद्वृत्तौ [पृ० २६२,], प्रवचनसारोद्धारवृत्तौ [पृ० ७८], धर्मसंग्रहवृत्तौ [पृ० ११४] चापि उद्धृता॥ ३ चिय-खं.॥ ४ सामाइयं-सं. मु.॥ ५ ०स्थानं सामायिकस्यानुपस्थापनं-खं.॥ ६ 'स्मृत्यनुपस्थानं' नास्ति सं. मु. विना॥ ७ न स्मरति प्रमादयुक्तो यः सामायिकं कदा च कर्तव्यम्। कृतमकृतं वा तस्य हु कृतमपि विफलं तकं ज्ञेयम्॥ उद्धृतेयं गाथा पञ्चाशकवृत्तौ [पृ० २३], नवपदप्रकरणबृहद्वृत्तौ [पृ० २६२], प्रवचनसारोद्धारवृत्तौ [पृ० ७८], धर्मसंग्रहवृत्तौ [पृ० ११४] च। ८ सामाइयं-सं. खं. मु.॥ ९ तुलना-धर्मबिन्दुटीका पृ० ४३, पञ्चाशकवृत्तिः पृ० २४, धर्मसंग्रहवृत्तिः पृ० ११४॥ १० इति चेत्-मु.॥

ननु द्विविधं त्रिविधेन सावद्यप्रत्याख्यानं सामायिकम्। तत्र च कायदुष्प्रणिधानादौ प्रत्याख्यानभङ्गात् सामायिकाभाव एव, तद्भङ्गजनितं च प्रायश्चित्तं विधेयं स्यात्, मनोदुष्प्रणिधानं चाशक्यपरिहारं मनसोऽनवस्थितत्वाद्। अतः सामायिकप्रतिपत्तेः सकाशात्तदप्रतिपत्तिरेव श्रेयसी। यदाहुः—"अविधिकृताद् वरमकृतम्" [ ] इति। नैवम्, यतः सामायिकं द्विविधं त्रिविधेन प्रतिपन्नम्, तत्र च मनसा वाचा कायेन सावद्यं न करोमि न कारयामीति षट् प्रत्याख्यानानि इत्येकतरप्रत्याख्यानभङ्गेऽपि शेषसद्भावान्मिथ्यादुष्कृतेन मनोदुष्प्रणिधानमात्रशुद्धेश्च न सामायिकस्यात्यन्ताभावः। सर्वविरतिसामायिकेऽपि च तथाऽभ्युपगतम्, यतो गुप्तिभङ्गे मिथ्यादुष्कृतं प्रायश्चित्तमुक्तम्[1]। किञ्च, सातिचारादप्यनुष्ठानादभ्यासतः कालेन निरतिचारमनुष्ठानं भवति। यदाहुर्बाह्या अपि—"अभ्यासो हि कर्मणां कौशलमावहति, न हि सकृन्निपातमात्रेणोदबिन्दुरपि ग्राविण निम्नतामादधाति" [ ]। न चाविधिकृताद् वरमकृतमिति युक्तम्, असूयावचनत्वादस्य। यदाहुः—

"[2]अविहिकया वरमकयं असूयवयणं भणन्ति समयण्णू। पायच्छित्तं जम्हा अकए [3]गरुअं कए लहुअं ॥१॥" [ ]

केचित्तु पोषधशालायां सामायिकमेकेनैव कार्य्यं न बहुभिः, '[4]एगे अबीए' [ ] इति वचनप्रामाण्यादित्याहुः। नायमेकान्तो वचनान्तरस्याऽपि श्रवणात्। व्यवहारभाष्येऽप्युक्तम्—

१ तुलना–"प्रायश्चित्तमुक्तम्। यदाह–'बीओ उ असमिओ मि त्ति कीस सहसा अगुत्तो वा" [ ]। द्वितीयोऽतिचारः समित्यादिभङ्गरूपोऽनुतापेन शुद्धयतीत्यर्थः। इति न प्रतिपत्तेरप्रतिपत्तिर्गरीयसीति"—धर्मबिन्दुटीका पृ० ४३–४४, पञ्चाशकवृत्तिः पृ० २४, धर्मसंग्रहवृत्तिः पृ० ११४॥ २ अविधिकृताद् वरमकृतमसूयावचनं भणन्ति समयज्ञाः। प्रायश्चित्तं यस्मादकृते गुरुकं कृते लघुकम्॥ उद्धृतेयं गाथा धर्मसंग्रहवृत्तौ पृ० ११४॥ ३ गुरुअं–मु.॥ ४ एके–सं. खं.। एकः अद्वितीयः। पञ्चाशकवृत्तावपि [पृ० २४] उद्धृतमिदम् आगमवचनत्वेन॥

॥ ५५९ ॥

" रांयसुयाई पंच वि पोसहसालाइ संमिलिआ "[1] [ ]।

इत्यलं प्रसङ्गेन ॥ ११५ ॥

एते पञ्चातिचाराः सामायिकव्रते उक्ताः, इदानीं देशावकाशिकव्रतातिचारानाह—

प्रेष्यप्रयोगानयने पुद्गलक्षेपणं तथा ।
शब्द-रूपानुपातौ च व्रते देशावकाशिके ॥ ११६ ॥

दिग्व्रतविशेष एव देशावकाशिकव्रतम्, इयांस्तु विशेषः—दिग्व्रतं यावज्जीवं संवत्सर-चतुर्मासीपरिमाणं वा, देशावकाशिकं तु दिवस-प्रहर-मुहूर्तादिपरिमाणम्। तस्य च पञ्चातिचाराः। तद्यथा—

प्रेष्यस्या[2]ऽऽदेश्यस्य[3] प्रयोगो विवक्षितक्षेत्राद्बहिः प्रयोजनाय व्यापारणम्, स्वयं गमने हि व्रतभङ्गः स्यादिति प्रेष्यप्रयोगः। देशावकाशिकव्रतं हि मा भूद् गमनागमनादिव्यापारजनितः प्राण्युपमर्द इत्यभिप्रायेण गृह्यते, स तु स्वयं कृतोऽन्येन कारित इति न कश्चित् फले विशेषः; प्रत्युत स्वयं गमने ईर्यापथविशुद्धेर्गुणः, परस्य पुनरनिपुणत्वादीर्यासमित्यभावे दोष इति प्रथमोऽतिचारः १।

---

१ राजसुतादयः पञ्चापि पोषधशालायां संमिलिताः॥ उद्धृतमिदं पञ्चाशकवृत्तौ पृ० २४॥ २ प्रेष्यस्य दासस्य–खं.॥ ३ तुलना–धर्मबिन्दुटीका पृ० ४४, पञ्चाशकवृत्तिः पृ० २४–२५, धर्मसंग्रहवृत्तिः पृ० ११५, प्रवचनसारोद्धारवृत्तिः पृ० ७८–७९, नवपदप्रकरणबृहद्वृत्तिः पृ० २६९॥

॥ ५५९ ॥

देशविरतौ दशमव्रतातिचाराः

आनयनं विवक्षितक्षेत्राद् बहिः स्थितस्य सचेतनादिद्रव्यस्य विवक्षितक्षेत्रे प्रापणं सामर्थ्यात् प्रेष्येण; स्वयं गमने हि व्रतभङ्गः स्यात्, परेण तु आनयने न व्रतभङ्गः स्यादिति बुद्ध्या प्रेष्येण यदाऽऽनाययति सचेतानादि द्रव्यं तदाऽतिचार इति द्वितीयः २ ।

तथा पुद्गलाः परमाणवः, तत्संघातसमुद्भवा बादरपरिणामं प्राप्ता लोष्टेष्टका-काष्ठशलाकादयोऽपि पुद्गलाः, तेषां क्षेपणं प्रेरणम् । विशिष्टदेशाभिग्रहे हि सति कार्यार्थी परतो गमननिषेधाद्यदा लोष्टादीन् परेषां बोधनाय क्षिपति, तदा लोष्टादिपात-समनन्तरमेव ते तत्समीपमनुधावन्ति; ततश्च तान् व्यापारयतः स्वयमनुपमर्दकस्याप्यतिचारो भवतीति तृतीयः ३ ।

शब्द-रूपानुपातौ चेति[2] शब्दानुपातो रूपानुपातश्च । तत्र स्वगृहवृति-प्राकारादिव्यवच्छिन्नभूदेशाभिग्रहः प्रयोजने उत्पन्ने स्वयमगमनाद् वृति[3]-प्राकारप्रत्यासन्नवर्ती भूत्वा अभ्युत्कासितादिशब्दं करोति, आह्वानीयानां श्रोत्रेऽनुपातयति, ते च तच्छब्द-श्रवणात्तत्समीपमागच्छन्ति इति शब्दानुपातोऽतिचारः । तथा रूपं स्वशरीरसम्बन्धि उत्पन्नप्रयोजनः शब्दमनुच्चारयन् आह्वानीयानां दृष्टावनुपातयति, तद्दर्शनाच्च ते तत्समीपमागच्छन्तीति रूपानुपातः । इयमत्र भावना—विवक्षितक्षेत्राद् बहिः स्थितं कञ्चन नरं व्रतभङ्गभयादाह्वातुमशक्नुवन् यदा स्वकीयशब्दश्रा[4]वण-रूपदर्शनव्याजेन तमाकारयति तदा व्रतसापेक्षत्वाच्छब्दा-नुपात-रूपानुपातावतिचाराविति चतुर्थ-पञ्चमौ ४–५ ।

इह चाद्यातिचारद्वयमव्युत्पन्नबुद्धितया सहसाकारादिना वा, अन्त्यत्रयं तु मायावितया अतिचारतां याति ।

---

१ ०मनुपदर्शकस्या०-शां. ॥ २ चेति-नास्ति शां. ॥ ३ वृत्ति०-शां. ॥ ४ ०श्रवण०-खं. ॥

अत्र दिग्व्रतसंक्षेपकरणवद् व्रतान्तराणामपि संक्षेपकरणं देशावकाशिकव्रतमिति वृद्धाः[1]। अतिचाराश्च दिग्व्रतसंक्षेपकरणस्यैव श्रूयन्ते न व्रतान्तरसंक्षेपकरणस्य, तत् कथं व्रतान्तरसंक्षेपकरणं देशावकाशिकव्रतम्? अत्रोच्यते—[2]प्राणातिपातादिव्रन्तातरसंक्षेपकरणेषु [3]वध-बन्धादय एवातिचाराः, दिग्व्रतसंक्षेपकरणे तु संक्षिप्तत्वात् क्षेत्रस्य प्रेष्यप्रयोगादयोऽतिचाराः। भिन्नातिचारसम्भवाच्च दिग्व्रतसंक्षेपकरणस्यैव देशावकाशिकत्वं साक्षादुक्तमिति ॥ ११६ ॥

अथ पोषधव्रतस्यातिचारानाह—

उत्सर्गादानसंस्तारा[4] अनवेक्ष्याप्रमृज्य च।
अनादरः स्मृत्यनुपस्थापनं चेति पोषधे ॥ ११७ ॥

उत्सर्जनमुत्सर्गस्त्याग उच्चार-प्रस्रवण-खेल-सिंघाण[5]कादीनामवेक्ष्य प्रमृज्य च स्थण्डिलादौ उत्सर्गः कार्यः। अवेक्षणं चक्षुषा निरीक्षणम्। प्रमार्जनं वस्त्रप्रान्तादिना स्थण्डिलादेरेव विशुद्धीकरणम्। अथानवेक्ष्याप्रमृज्य चोत्सर्गं[6] करोति तदा पोषधव्रतमतिचरतीति प्रथमोऽतिचारः १।

आदानग्रहण यष्टि-पीठ-फलकादीनाम्, तदप्यवेक्ष्य प्रमृज्य च कार्यम्, अनवेक्षितस्याप्रमार्जितस्य चादान[7]मतिचारः। आदानग्रहणेन निक्षेपोऽप्युपलक्ष्यते यष्ट्यादीनाम्, तेन सोऽप्यवेक्ष्य प्रमार्ज्य च कार्य्यः, अनवेक्ष्याप्रमार्ज्य च निक्षेपोऽतिचार इति द्वितीयः २।

---

१ तुलना–धर्मबिन्दुटीका–पृ० ४४, पञ्चाशकवृत्तिः पृ० २५, प्रवचनसारोद्धारवृत्तिः पृ० ७९, धर्मसंग्रहवृत्तिः पृ० ११५ ॥ २ प्राणातिपातादिविरमणव्रतान्तर०–मु. ॥ ३ बन्धवधादय–शां. ॥ ४ ०स्तारानवेक्ष्या०–मु. ॥ ५ ०शिंघा०–खं. ॥ ६ चोत्सर्गे ॥ ७ चादान०–शां. ॥

॥ ५६१ ॥

तथा संस्तीर्यते यः प्रतिपन्नपोषधव्रतेन दर्भ-कुश-कम्बलीवस्त्रादिः स संस्तारः, स चावेक्ष्य प्रमार्ज्य च कर्तव्यः, अनवेक्ष्याप्रमृज्य च करणेऽतिचारः। इह चानवेक्षणेन दुरवेक्षणम्, अप्रमार्जनेन दुष्प्रमार्जनं संगृह्यते, नञः कुत्सार्थस्यापि दर्शनात्, यथा कुत्सितो ब्राह्मणोऽब्राह्मणः। यत् सूत्रम्—

"[१]अप्पडिलेहियदुप्पडिलेहियसेज्जासंथारए, [२]अप्पमज्जियदुप्पमज्जियसेज्जासंथारए, अप्पडिलेहियदुप्पडिलेहियउच्चार-पासवणभूमी, [३]अप्पमज्जियदुप्पमज्जियउच्चारपासवणभूमी॥" [उपासकदशाङ्गे सू० ७] इति तृतीयः ३।

देशविरतौ एकादश-द्वादशव्रतातिचाराः

तथा अनादरः पोषधव्रतप्रतिपत्तिकर्तव्यतायामिति चतुर्थः ४।

तथा स्मृत्यनुपस्थापनं तद्विषयमेवेति पञ्चमः ५।

पोषधे सर्वतः पोषधे, देशतः पोषधे तु नायं विधिः॥ ११७॥

अथातिथिसंविभागव्रतस्यातिचारानाह—

सचित्ते क्षेपणं तेन पिधानं काललङ्घनम्।
मत्सरोऽन्यापदेशश्च तुर्यशिक्षाव्रते स्मृताः॥ ११८॥

---

१ सूत्रमिदम् आवश्यकसूत्रे प्रत्याख्यानाध्ययनेऽपि वर्तते। अप्रतिलेखित-दुष्प्रतिलेखितशय्यासंस्तारकः, अप्रमार्जित-दुष्प्रमार्जितशय्यासंस्तारकः, अप्रतिलेखित-दुष्प्रतिलेखितोच्चारप्रस्रवणभूमिः, अप्रमार्जित-दुष्प्रमार्जितोच्चारप्रस्रवणभूमिः। उद्धृतमिदं सूत्रं पञ्चाशकवृत्तौ [पृ० २६] धर्मसंग्रहवृत्तौ [पृ० ११६] नवपदप्रकरणबृहद्वृत्तौ [पृ० २८३] च॥

२ अप०-शां. सं.॥ ३ दुप०-शां.॥ ४ अप०-सं.॥

सचित्ते सजीवे पृथ्वी-जलकुम्भोपचुल्ली-धान्यादौ क्षेपणं निक्षेपो देयस्य वस्तुनः, तच्च अदानबुद्ध्या निक्षिपति, एतज्ज्ञानात्यसौ तुच्छबुद्धिः यत् संचित्तनिक्षिप्तं न गृह्णते साधव इत्यतो देयं चोपस्थाप्यते न चाददते साधव इति लाभोऽयं ममेति प्रथमोऽतिचारः १ ।

तथा तेन सचित्तेन सूरणकन्द-पत्र-पुष्प-फलादिना तथाविधयैव बुद्ध्या पिधत्ते इति द्वितीयः २ ।

तथा कालस्य साधूनामुचितभिक्षासमयस्य लङ्घनमतिक्रमः, अयमर्थः—उचितो यो भिक्षाकालः साधूनां तं लङ्घयित्वा, अनागतं वा भुङ्क्ते पोषधव्रती । इति तृतीयः ३ ।

तथा मत्सरः कोपः यथा मार्गितः सन् कुप्यति, सदपि मार्गितं न ददाति । अथवाऽनेन तावद् द्रमकेण मार्गितेन दत्तम् , किमहं ततोऽपि हीन इति मात्सर्याद्ददाति, अत्र परोन्नतिवैमनस्यं मात्सर्यम् , यदुक्तमस्माभिरेवाऽनेकार्थसंग्रहे—

"मत्सरः परसम्पत्त्यक्षमायां तद्वति क्रुधि ।" [ अनेकार्थसंग्रहे ३।६२१ ] । इति चतुर्थः ४ ।

तथा अन्यस्य परस्य सम्बन्धीद गुडखण्डादीति व्यपदेशो व्याजोऽन्यापदेशः, यदनेकार्थसंग्रहे—

"अपदेशस्तु कारणे व्याजे लक्ष्येऽपि ।" [ अनेकार्थसंग्रहे ४।३२३ ] । इति पञ्चमः ५ ।

---

१ सचित्ते–मु. ॥ २ सचित्तेन पिधत्ते–खं. ॥ ३ ०मुपचित०–शां. ॥ ४ द्रमकेण–सं. । तुलना–तत्त्वार्थवृत्तिः सिद्धसेनीया ७।३१ पृ० ११५, प्रवचनसारोद्धारवृत्तिः पृ० ७९ ॥ ५ धर्मसंग्रहवृत्तौ [ पृ० ११६ ] अपि उद्धृतमिदम् ॥ ६ 'करणे' –धर्मसंग्रहवृत्तौ पृ० ११६ ॥ ७ लक्ष्ये–सं. ॥

॥ ५६३ ॥

एते पञ्चातिचारास्तुर्यशिक्षाव्रते अतिथिसंविभागनाम्नि स्मृताः । अतिचारभावना पुनरियम्–[1]यदा अनाभोगादिना अतिचरन्ति तदा अतिचाराः, अन्यथा तु भङ्गाः, इत्यवसितानि सम्यक्त्वमूलानि द्वादश व्रतानि, तदतिचाराश्चाभिहिताः ॥११८॥

इदानीमुक्तशेषं निर्दिशन् श्रावकस्य महाश्रावकत्वमाह—

एवं व्रतस्थितो भक्त्या सप्तक्षेत्र्यां धनं वपन् ।
दयया चातिदीनेषु महाश्रावक उच्यते ॥ ११९ ॥



एवं पूर्वोक्तप्रकारेण सम्यक्त्वमूलेष्वतिचारविशुद्धेषु [2]द्वादशसु व्रतेषु स्थितो निश्चलचित्तत्वेन निलीनः, सप्तानां क्षेत्राणां समाहारः सप्तक्षेत्री [3]जैनबिम्ब-जिनभवना-ऽऽगम-साधु-साध्वी-श्रावक-श्राविकालक्षणा, तस्यां न्यायोपात्तं धनं वपन् निक्षिपन्, क्षेत्रे हि बीजस्य वपनमुचितमित्युक्तं वपन्निति, वपनमपि क्षेत्रे उचितं नाक्षेत्रे इति सप्तक्षेत्र्यामित्युक्तम् । क्षेत्रत्वं च सप्तानां रूढमेव । वपनं च सप्तक्षेत्र्यां यथोचितस्य द्रव्यस्य भक्त्या श्रद्धया, तथाहि–

जिनबिम्बस्य तावद्विशिष्टलक्षणलक्षितस्य प्रसादनीयस्य वज्रेन्द्रनीला-ऽञ्जन-चन्द्रकान्त-सूर्यकान्त-रिष्टा-ऽङ्क-कर्केतन-विद्रुम-सुवर्ण-रूप्य-चन्दनोपल-मृदादिभिः सारद्रव्यैर्विधापनम् । यदाह––

---

१ तुलना–"यदा अनाभोगादिना अतिक्रमादिना वा एतानाचरति तदा अतिचारः, अन्यदा तु भङ्गः"––धर्मबिन्दुटीका पृ० ४५, पञ्चाशकवृत्तिः पृ० २८, नवपदप्रकरणबृहद्वृत्तिः पृ० ३०८, धर्मसंग्रहवृत्तिः पृ० ११७ ॥ २ द्वादशव्रतेषु–खं ॥
३ जैनबिम्बभवना०–शां. विना । जिनबिम्बभवना०–धर्मसं० वृ० पृ० ११८ । इत आरभ्य धर्मसंग्रहवृत्तौ भूयसांशेन समानः पाठो वरीवृत्यते ॥

" सन्मृत्तिका-ऽमलशिलातल-रूप्य-दारु-सौवर्ण-रत्न-मणि-चन्दनचारु बिम्बम् ।
कुर्वन्ति जैनमिह ये स्वधनानुरूपं, ते प्राप्नुवन्ति नृसुरेषु महासुखानि ॥ १ ॥" [ ]

तथा[1]—" पासाईआ[2] पडिमा, लक्खणजुत्ता समत्तलंकरणा ।
जह पल्हाएइ मणं, तह निज्जर मो विआणाहि ॥ १ ॥ " [ सम्बोधप्रकरणे १।३२२ ]

तथा निर्मितस्य[3] जिनबिम्बस्य शास्त्रोक्तविधिना प्रतिष्ठापनम्, अष्टाभिश्च प्रकारैरभ्यर्चनम्, यात्राविधानम्, विशिष्टाभरणभूषणम्, विचित्रवस्त्रैः परिधापनमिति जिनबिम्बे धनवपनम् । यदाह—

" गन्धैर्माल्यैर्विनिर्यद्बहलपरिमलैरक्षतैर्धूपदीपैः, सान्नाय्यैः[4] प्राज्यभेदैश्चरुभिरुपहितैः पाकपूतैः फलैश्च ।
अम्भःसम्पूर्णपात्रैरिति हि जिनपतेरर्चनामष्टभेदां, कुर्वाणा वेश्मभाजः परमपदसुखस्तोममाराल्लभन्ते ॥ १ ॥" [ ]

ननु जिनबिम्बानां पूजादिकरणे न कश्चिदुपयोगः, न हि पूजादिभिस्तानि तृप्यन्ति[5] तुष्यन्ति वा, न चातृप्ततुष्टाभ्यो

---

१ तथाहि-मु. ॥ २ प्रासादिका प्रतिमा लक्षणयुक्ता समस्तालङ्करणा। यथा प्रह्लादयति मनः तथा निर्जरां विजानीहि ॥ " लक्खणजुत्ता पडिमा पासादीया समत्तलंकारा। पल्हायति जह वयणं तह निज्जर मो वियाणाहि ॥ १८९ ॥ " इति व्यवहारभाष्ये षष्ठोद्देशके गाथा ॥ ३ निर्मापितस्य-शां. ॥ ४ सान्नाज्यैः प्राज्यभेदैश्चरुभिरुपहतैः-मु. । " संपूर्वाद् नयतेर्हविषि समो दीर्घत्वं च-सान्नाय्य हविः " इति सिद्धहेम०बृहद्वृत्तौ ५।१।२४ । " हविः सान्नाय्यम् ···· ·· ॥ ८३१ ॥···· · हव्यपाकः पुनश्चरुः ॥ ८३२ ॥ हव्यस्य पाको हव्यपाकः । चर्यते भक्ष्यते चरुः पक्वं होतव्यम् "—इति स्वोपज्ञवृत्तिसहिते अभिधानचिन्तामणौ ॥
५ तृप्यन्ति च तु०-शां. ॥

॥ ५६५ ॥

देवताभ्यः फलमाप्यते । नैवम्, चिन्तामण्यादिभ्य इवातुष्टतुष्टेभ्योऽपि फलप्राप्त्यविरोधात् । यदुक्तं वीतरागस्तोत्रेऽस्माभिः—

" अप्रसन्नात् कथं प्राप्य फलमेतदसङ्गतम् ।
चिन्तामण्यादयः किं न फलन्त्यपि विचेतनाः ॥ १ ॥ " [ वीतरागस्तोत्रे १९।३ ]

तथा—" [1]उवगाराभावम्मि वि[2] पुज्जाण पूयगस्स उवगारो ।
मंताइसरण–जलणादिसेवणे जह तहेहं पि ॥ १ ॥ " [ श्रावकप्रज्ञप्तौ ३४८, पूजापञ्चाशके गा० ४।४४ ]

जिनबिम्बे धनवपनस्य स्वरूपम्

एष तावत् स्वकारितानां बिम्बानां पूजादिविधिरुक्तः, अन्यकारितानामपि अकारितानां च शाश्वतप्रतिमानां यथार्हं [3]पूजन-वन्दनादिविधिरनुष्ठेयः ।

त्रिविधा हि जिनप्रतिमाः—

भक्तिकारिताः स्वयं परेण वा चैत्येषु कारिताः, या इदानीमपि मनुष्यादिभिर्विधाप्यन्ते । मङ्गल्यकारिता या गृहेषु द्वारपत्रेषु मङ्गलाय कार्यन्ते । शाश्वत्यस्तु अकारिता एव अधस्तिर्यगूर्ध्वलोकावस्थितेषु जिनभवनेषु वर्तन्त इति । न हि लोकत्रयेऽपि तत् स्थानमस्ति यन्न पारमेश्वरीभिः प्रतिमाभिः पवित्रितमिति । जिनप्रतिमानां च वीतरागस्वरूपाध्यारोपेण पूजादिविधिरुचित इति ।

---

१ उपकाराभावेऽपि पूज्यानां पूजकस्य उपकारः । मन्त्रादिस्मरण–ज्वलनादिसेवने यथा तथेहापि ॥ २ ब–सं. ॥
३ पूजनावन्दनादि°–खं. । पूजनवर्धनादि°–खं. विना ॥

जिनभवनक्षेत्रे स्वधनवपनं यथा—शल्यादिरहितभूमौ स्वयंसिद्धस्योपल-काष्ठादिदलस्य ग्रहणेन सूत्रकारादिभृतकानतिसन्धानेन भृत्यानामधिकमूल्यवितरणेन षड्जीवनिकायरक्षायतनापूर्वकं[1] जिनभवनस्य विधापनम्। सति [विभवे भरतादिवद् रत्नशिलाभिर्बद्ध[2]चामीकरकुट्टिमस्य मणिमयस्तम्भसोपानस्य रत्नमयतोरणशतालङ्कृतस्य विशालशालाबलानकस्य शालभञ्जिकाभङ्गिभूषितस्तम्भादिप्रदेशस्य दह्यमानकर्पूर-कस्तूरिका-ऽगरुप्रभृति धूपसमुच्छलद्धूमपटलजातजलदशङ्कानृत्यत्कलकण्ठकुलकोलाहलस्य चतुर्विधातोद्य-नान्दीनिनादनादितरोदसीकस्य देवाङ्गप्रभृति विचित्रवस्त्रोल्लोचखचितमुक्तावचूलालङ्कृतस्य उत्पतन्निपतद्गायन्नृत्यद्वल्गत्सिंहादिनादितवत्सुरसमूहमहिमानुमोदनप्रमोदमानजनस्य विचित्रचित्र[3]चित्रीयितसकललोकस्य चामरध्वजच्छत्राद्यलङ्कारविभूषितस्य मूर्धारोपितविजयवैजयन्तीनिबद्धकिङ्किणीरणत्कारमुखरितदिगन्तस्य कौतुकाक्षिप्तसुरासुरकिन्नरीनिवहाहमहमिकाप्रारब्धसङ्गीतस्य गन्धर्वगीतध्वनितिरस्कृततुम्बुरुमहिम्नो निरन्तर[4]तालारासक-हल्लीसक[5]प्रमुखप्रबन्धनानाभिनयनव्यग्रकुलाङ्गनाचमत्कारितभव्यलोकस्याऽभिनीयमाननाटक[6]कोटिरसाक्षिप्तरसिकजनस्य जिनभवनस्योत्तुङ्गगिरिशृङ्गेषु जिनानां जन्म-दीक्षा-ज्ञान-निर्वाणस्थानेषु सम्प्रतिराजवच्च [7]प्रतिपुरं प्रतिग्रामं पदे पदे विधापनम्; असति तु विभवे तृणकुट्यादिरूपस्याऽपि। यदाह—

“यस्तृणमयीमपि कुटीं कुर्याद् दद्यात्तथैकपुष्पमपि। भक्त्या परमगुरुभ्यः पुण्योन्मानं कुतस्तस्य? ॥ १ ॥

---

१ ०पूर्वं जिन०—सं. ॥ २ ०भिवद्ध०—सं. ॥ ३ ०त्रचित्रीयतसक०—खं. सं. ॥ ४ तालारसरासक०—मु. ॥ ५ “मण्डलेन तु यन्नृत्तं स्त्रीणां हल्लीसकं हि तत् ॥ २८१ ॥”—इति अभिधानचिन्तामणौ ॥ ६ ०कोटिरसिक०—सं. ॥ ७ प्रतिपुरग्रामं—सं. ॥

॥ ५६७ ॥

किं पुनरुपचितदृढघनशिलासमुद्घातघटितजिनभवनम् ।
ये कारयन्ति शुभमतिविधायिनस्ते महाधन्याः ॥ २ ॥" [ ]

राजादेस्तु विधापयितुः प्रचुरतरभाण्डागार-ग्राम-नगर-मण्डल-गोकुलादिप्रदानं जिनभवनक्षेत्रे वपनम्, तथा जीर्णशीर्णानां चैत्यानां समारचनम्, नष्टभ्रष्टानां समुद्धरणं चेति ।

जिनभवने धनवपनस्य स्वरूपम्

ननु निरवद्यजिनधर्मसमाचरणचतुराणां जिनभवन-बिम्बपूजादिकरणमनुचितमिव प्रतिभासते षड्जीवनिकायविराधना-हेतुत्वात्तस्य, भूमीखनन-दलपाटकानयन-गर्तापूरणेष्टकाचयन-जलप्लावन-वनस्पतित्रसकायविराधनामन्तरेण न हि तद् भवति । उच्यते—य आरम्भपरिग्रहप्रसक्तः[3] कुटुम्बपरिपालननिमित्तं धनोपार्जनं करोति, तस्य धनोपार्जनं विफलं मा भूदिति जिन-भवनादौ धनव्ययः श्रेयानेव । न च धर्मार्थं धनोपार्जनं युक्तम्, यतः—

" धर्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १ ॥" [ महाभारते वनपर्वणि २।४९ (?) ]

इत्युक्तमेव । न च वापी-कूप-तडागादिखननवदशुभोदर्कं जिनभवनादिकरणम्, अपि तु सङ्घसमागम-धर्मदेशनाकरण-व्रतप्रति-पत्त्यादिकरणेन शुभोदर्कमेव । षड्जीवनिकायविराधना च यतनाकारिणामगारिणां कृपापरवशत्वेन जन्तून् रक्षयतामविराधनैव ।

१ सं. विना-०विमाननस्ते-खं. । विमानिनस्ते-मु. शां. । धर्मसंग्रहवृत्तावपि [पृ० ११९] 'विधायिनस्ते' इति पाठः ॥ २ जिनबिम्बपूजादि०-सं. ॥ ३ ०सक्तकुटु०-खं. ॥ ४ महाभारते वनपर्वणि द्वितीयेऽध्याये ईदृशः श्लोक उपलभ्यते-" धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता । प्रक्षालनाद्धि पंकस्य श्रेयो न स्पर्शनं नृणाम् ॥ ४९ ॥" ॥ ५ दृश्यतां पृ० ३९१ पं० १ ॥

यदाहुः—

"जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स । सा होइ निज्जरफला अज्झत्थविसोहिजुत्तस्स[1] ॥ १ ॥
परमरहस्समिसीणं समत्तगणिपिडगझरिअसाराणं । परिणामिअं पमाणं निच्छयमवलंबमाणाणं ॥ २ ॥"

[ ओघनिर्युक्तौ गा० ७६०–७६१ ]

यस्तु निजकुटुम्बार्थमपि नारम्भं करोति प्रतिमाप्रतिपन्नादिः तस्य मा भूज्जिनबिम्बादिविधापनमपि[3]। यदाहुः—

" देहाइनिमित्तं पि हु जे कायवहम्मि इह पयट्टन्ति ।
जिणपूआकायवहम्मि तेसिमपवत्तणं मोहो ॥ १ ॥" [ पञ्चाशके ४।४५ ]

इत्यलं प्रसङ्गेन ।

जिनागमक्षेत्रे च स्वधनवपनं यथा—जिनागमो हि कुशास्त्रजनितसंस्कारविपसमुच्छेदनमहामन्त्रायमाणो धर्माधर्म-कृत्याकृत्य-भक्ष्याभक्ष्य-पेयापेय-गम्यागम्य-सारासारादिविवेचनहेतुः सन्तमसे दीप इव समुद्रे द्वीपमिव मरौ कल्पतरुरिव संसारे दुरापः, जिनादयोऽप्येतत्प्रामाण्यादेव निश्चीयन्ते । यदवोचाम स्तुतिषु—

१ या यतमानस्य भवेद् विराधना सूत्रविधिसमग्रस्य । सा भवति निर्जराफला अध्यात्मविशोधियुक्तस्य ॥ १ ॥ परमरहस्य-मृषीणां समस्तगणिपिटकक्षरितसाराणाम् । पारिणामिकं प्रमाणं निश्चयमवलम्बमानानाम् ॥ २ ॥ २ पिण्डनिर्युक्तेरन्तेऽपि गाथेयं [ गा० ६७१ ] वर्तते ॥ ३ विधानमपि–खं. सं. ॥ ४ देहादिनिमित्तमपि ये कायवधे इह प्रवर्तन्ते । जिनपूजाकायवधे तेषामप्रवर्तनं मोहः ॥ ५ "तह पयट्टंति ·····तेसिं पडिसेहणं मोहो" इति पाठभेदेन श्रावकप्रज्ञप्तौ [ गा० ३४९ ] अपि गाथेयं वर्तते ॥

जिनबिम्बादि सप्तक्षेत्र्यां धनवपनस्य-वर्णनम्

" यदीयसम्यक्त्वबलात् प्रतीमो भवादृशानां परमाप्तभावम् ।
कुवासनापाशविनाशनाय नमोऽस्तु तस्मै तव शासनाय ॥ " [ अयोगव्यवच्छेदद्वात्रिंशिकायाम् २१ ] इति ।

जिनागमबहुमानिना[1] च देव-गुरु-धर्मादयोऽपि बहुमता भवन्ति । किञ्च, केवलज्ञानादपि जिनागम एव प्रामाण्येनाऽतिरिच्यते । यदाहुः—

" ओहो[2] सुओवउत्तो सुयणाणी जइ हु गिण्हइ असुद्धं ।
तं केवली वि भुंजइ अपमाणं सुअं भवे इहरा ॥ १ ॥ " [ पिण्डनिर्युक्तौ गा० ५२४ ]

एकमपि[3] च जिनागमवचनं भविनां भवनाशहेतुः[4] । यदाहुः—

" एकमपि च जिनवचनाद्यस्मान्निर्वाहकं पदं भवति ।
श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः ॥ १ ॥ " [ तत्त्वार्थसम्बन्धकारिकायाम् २७ ] इति ।

यद्यपि च मिथ्यादृष्टिभ्य आतुरेभ्य इव पथ्यान्न न रोचते जिनवचनम्, तथापि नान्यत् स्वर्गापवर्गमार्गप्रकाशनसमर्थम् इति सम्यग्दृष्टिभिस्तदादरेण श्रद्धातव्यम्, यतः कल्याणभागिन एव जिनवचनं भावतो भावयन्ति, इतरेषां तु

१ ०मानिनां च-सं. मु. । धर्मसंग्रहवृत्तौ [ पृ० १२० ] अपि " ०मानिना " इत्येव पाठः ॥ २ ओघः श्रुतोपयुक्तः श्रुतज्ञानी यदि गृह्णाति अशुद्धम् । तत् केवल्यपि भुङ्क्ते अप्रमाणं श्रुतं भवेदितरथा ॥ ३ एकमपि जिना०-मु. ॥ ४ भवविनाश०-खं ॥

कर्णशूलकारित्वेनाऽमृतमपि विपायते। यदि चेदं जिनवचनं नाभविष्यत्, तदा धर्माधर्मव्यवस्थाशून्यं भवान्धकूपे भुवनमपतिष्यत्। यथा च 'हरीतकीं भक्षयेद् विरेककामः' इति वचनाद्धरीतकीभक्षणप्रभवविरेकलक्षणेन प्रत्ययेन सकलस्याप्यायुर्वेदस्य प्रामाण्यमवसीयते, तथा अष्टाङ्गनिमित्त-केवलिका-चन्द्रार्कग्रहचार-धातुवाद-रस-रसायनादिभिरप्यागमोपदिष्टैर्दृष्टार्थवाक्यानां प्रामाण्यनिश्चयेनाऽदृष्टार्थानामपि वाक्यानां प्रामाण्यं मन्दधीभिर्निश्चेतव्यम्। जिनवचनं च दुःषमाकालवशादुच्छन्नप्रायमिति[1] मत्वा भगवद्भिर्नागार्जुन-स्कन्दिलाचार्य्यप्रभृतिभिः पुस्तकेषु न्यस्तम्। ततो जिनवचनबहुमानिना तत् पुस्तकेषु लेखनीय वस्त्रादिभिरभ्यर्चनीयं च। यदाह—

" न ते नरा दुर्गतिमाप्नुवन्ति, न मूकतां नैव जडस्वभावम्।
न चान्धतां बुद्धिविहीनतां च, ये लेखयन्तीह जिनस्य वाक्यम् ॥ १ ॥
लेखयन्ति नरा धन्या ये जिनागमपुस्तकम्।
ते सर्वं वाङ्मय ज्ञात्वा सिद्धिं यान्ति न संशयः ॥ २ ॥ " [ ]

जिनागमपाठकानां[2] भक्तिपूर्वकं संमाननं च। यदाह—

" पठति पाठयते पठतामसौ वसन-भोजन-पुस्तकवस्तुभिः।
प्रतिदिनं कुरुते य उपग्रहं स इह सर्वविदेव भवेन्नरः ॥ १ ॥ " [ ]

---

१ ०दुच्छिन्न०-मु. ॥ २ ०कानां वस्त्रादिभिरभ्यर्चनं भक्तिपूर्वं संमाननं च-मु. ॥

जिनबिम्बादि सप्तक्षेत्र्यां धनवपनस्य वर्णनम्

लिखितानां च पुस्तकानां संविग्नगीतार्थेभ्यो बहुमानपूर्वकं व्याख्यानार्थं दानम्, व्याख्यायमानानां च प्रतिदिनं पूजापूर्वकं श्रवणं चेति ।

साधूनां च जिनवचनानुसारेण सम्यक् चारित्रमनुपालयतां दुर्लभं मनुष्यजन्म सफलीकुर्वतां स्वयं तीर्णानां परं तारयितुमुद्यतानामा तीर्थकरगणधरेभ्य[1] आ च तद्दिनदीक्षितेभ्यः सामायिकसंयतेभ्यो यथोचितप्रतिपत्त्या स्वधनवपनं यथा–उपकारिणां प्रासुकैषणीयानां कल्पनीयानां चाशनादीनां, रोगापहारिणां च भेषजादीनां, शीतादिवारणार्थानां च वस्त्रादीनां, प्रतिलेखनाहेतो रजोहरणादीनां, भोजनाद्यर्थं पात्राणाम्, औपग्राहिकाणां च दण्डकादीनां, निवासार्थमाश्रयाणां दानम् । न हि तदस्ति यद् द्रव्य-क्षेत्र-काल-भावापेक्षयाऽनुपकारकं नाम, तत् [3]सर्वस्वस्यापि दानम्, साधुधर्मोद्यतस्य स्वपुत्र-पुत्र्यादेरपि समर्पणं [4]च । किं बहुना ? यथा यथा मुनयो निराबाधवृत्त्या [5]स्वमनुष्ठानमनुतिष्ठन्ति [6]तथा तथा महता प्रयत्नेन सम्पादनम्, जिन[7]प्रवचनप्रत्यनीकानां च साधुधर्मनिन्दापराणां यथाशक्ति निवारणम् । यदाह—

" तम्हा सइ सामत्थे आणाभट्ठम्मि नो खलु उवेहा । [10]अणुकूलेहिअरेहि अ अणुसट्ठी होइ दायव्वा ॥१॥" [ ]

१ श्रावणं–सं. ॥ २ सं. विना–०भ्य आवेतद्दिन०–शां. । ०भ्य अद्यतनदिन०–खं. । ०भ्य आ चैतद्दिन०–मु. । धर्मसंग्रहवृत्तावपि [ पृ० १२० ] '०भ्य आ च तद्दिन०' इत्येव पाठः ॥ ३ सर्वस्यापि–खं. ॥ ४ च–नास्ति सं. ॥ ५ स्वयम०–मु. ॥ ६ तथा महता–शां. ॥ ७ जिनवचन०–मु. ॥ ८ ०परायणां–खं. ॥ "०परायणानाम्" इति धर्मसंग्रहवृत्तौ पृ० १२० ॥ ९ तस्मात् सति सामर्थ्ये आज्ञाभ्रष्टे नो खलु उपेक्षा। अनुकूलैरितरैश्च अनुशास्तिर्भवति दातव्या ॥ १० प्रतिषु पाठाः–०कूलेहिंअरेहिं अ अणु०–शां. । ०कूलेहिंअरेहिं अणु०–खं. । ०कूलेहिइरोहि य अणु०–सं. । ०कूलगेयरेहि अ अणु०–मु. ॥

तथा रत्नत्रयधारिणीषु साध्वीषु साधुष्विव यथोचिताहारादिदानं स्वधनवपनम्। ननु स्त्रीणां निःसत्त्वतया दुःशीलत्वादिना च मोक्षेऽनधिकारः, तत् कथमेताभ्यो दानं साधुदानतुल्यम्?। उच्यते—निःसत्त्वमसिद्धम्, ब्राह्मीप्रभृतीनां साध्वीनां गृहवासपरित्यागेन यतिधर्ममनुतिष्ठन्तीनां महासत्त्वानां नासत्त्वसम्भवः। यदाह—

"ब्राह्मी सुन्दर्यार्या राजीमती चन्दना गणधराऽन्या [:]।
अपि देव-मनुजमहिता विख्याताः शील-सत्त्वाभ्याम्॥ १॥
गार्हस्थ्येऽपि सुसत्त्वा विख्याताः[2] शीलवतितमा[3] जगति।
सीतादयः, कथं तास्तपसि विसत्त्वा विशीलाश्च?॥ २॥
सन्त्यज्य राज्यलक्ष्मीं पति-पुत्र-भ्रातृ-बन्धुसम्बन्धम्।
पारिव्राज्यवहायाः किमसमत्त्वं सत्यभामादेः?॥ ३॥" [स्त्रीनिर्वाण० ३४–३६]

ननु महापापेन मिथ्यात्वसहायेन स्त्रीत्वमर्ज्यते; न हि सम्यग्दृष्टिः स्त्रीत्वं कदाचिद् बध्नाति इति कथं स्त्रीशरीरवर्तिन आत्मनो मुक्तिः स्यात्? मैवं[4] वोचः, सम्यक्त्वप्रतिपत्तिकाल एवाऽन्तःकोटीकोटी[5]स्थितिकानां सर्वकर्मणां भावेन मिथ्यात्वमोहनीयादीनां क्षयादिसम्भवान्मिथ्यात्वसहितपापकर्मसम्भवत्वमकारणम्, मोक्षकारणवैकल्यं तु तासु वक्तुमुचितम्, तच्च नास्ति, यतः—

१–२ ०ता शीलवति०–खं. सं.॥ ३ ०ताः शीलवती०–मु.॥ ४ नैवं–शां.॥ ५ कोटिकोटी०–सं.। ०कोटिकोटि०–मु.॥

"जानीते जिनवचनं श्रद्धते चरति चाऽऽर्यिका[ऽ]शबलम् ।
नास्यास्त्यसम्भवोऽस्यां नादृष्टविरोधगतिरस्ति ॥ १ ॥" [ स्त्रीनिर्वाण० ४ ] इति ।

तत् सिद्धमेतद् मुक्तिसाधनधनासु साध्वीषु साधुवद् धनवपनमुचितमिति । एतच्चाधिकं यत् साध्वीनां दुःशीलेभ्यो नास्तिकेभ्यो गोपनम्, स्वगृहप्रत्यासत्तौ च समन्ततो गुप्ताया गुप्तद्वाराया वसतेर्दानम्, स्वस्त्रीभिश्च तासां परिचर्य्याविधानम्[2], स्वपुत्रिकाणां च तत्सन्निधौ धारणम्, व्रतोद्यतानां स्वपुत्र्यादीनां प्रत्यर्पणं च, तथा विस्मृतकरणीयानां तत्स्मारणम्, अन्यायप्रवृत्तिसम्भवे तन्निवारणम्, सकृदन्यायप्रवृत्तौ शिक्षणम्, पुनः पुनः प्रवृत्तौ निष्ठुरभाषणादिना ताडनम्, उचितेन वस्तुनोपचरणं[3] चेति ।

जिनबिम्बादिसप्तक्षेत्र्यां धनवपनस्य वर्णनम्

श्रावकेषु स्वधनवपनं यथा—साधर्मिकाः खलु श्रावकस्य श्रावकाः, समानधार्मिकाणां च सङ्गमोऽपि महते पुण्याय, किं पुनस्तदनुरूपा प्रतिपत्तिः? । सा च स्वपुत्रादिजन्मोत्सवे विवाहेऽन्यस्मिन्नपि तथाविधे प्रकरणे साधर्मिकाणां निमन्त्रणम्, विशिष्टभोजन-ताम्बूल-वस्त्राभरणादिदानम्, आपन्निमग्नानां च स्वधनव्ययेनाप्यभ्युद्धरणम्, अन्तरायदोषाच्च विभवक्षये पुनः पूर्वभूमिकाप्रापणम्, धर्मे च विषीदतां तेन तेन प्रकारेण धर्मे स्थैर्य्यारोपणम्, प्रमाद्यतां च स्मारण-वारण-चोदन[4]-प्रति-

---

१ मु. विना–०स्या नादृष्ट०–इति शां. खं. सं. मध्ये धर्मसंग्रहवृत्तौ [ पृ० १२१ ] च वर्तते । मु. मध्ये स्त्रीनिर्वाणप्रकरणे च ०स्यां नादृष्ट०' इति पाठः ॥ २ ०विधापनम्–मु. ॥ ३ ०पचारणं–मु. ॥ ०पकरणं–च. ॥ ४—ड । ०चोदन–प्रचोदनादि०–सं. । ०प्रेरण–प्रतिप्रेरणादि०–शां. ॥ ०चोदनाप्रतिचोदनादि०–मु. ॥

चोदनादिकरणम्, वाचना-प्रच्छना-परिवर्तना-ऽनुप्रेक्षा-धर्मकथादिषु यथायोग्यं विनियोजनम्, विशिष्टधर्मानुष्ठानकरणार्थं च साधारणपोषधशालादेः करणमिति ।

श्राविकासु धनवपनं श्रावकवदन्यूनातिरिक्तमुन्नेतव्यम् ।[2] तच्च ज्ञान-दर्शन-चारित्रवत्यः शील-सन्तोषप्रधानाः सधवा विधवा वा जिनशासनानुरक्तमनसः साधर्मिकत्वेन माननीयाः ।

ननु स्त्रीणां कुतः शीलशालित्वं कुतो वा रत्नत्रययुक्तत्वम् ? स्त्रियो हि नाम लोके लोकोत्तरे चानुभवाच्च दोषभाजनत्वेन प्रसिद्धाः । एताः खल्वभूमिका[3] विषकन्दल्यः, अनभ्रसम्भवा वज्राशनयः, असंज्ञका व्याधयः, अकारणो मृत्युः, अकन्दरा व्याघ्र्यः, प्रत्यक्षा राक्षस्यः; असत्यवचनस्य साहसस्य बन्धुस्नेहविघातस्य सन्तापहेतुत्वस्य निर्विवेकत्वस्य च परमं कारणमिति दूरतः परिहार्याः, तत् कथं दान-सन्मान[4]-वात्सल्यविधानं तासु युक्तियुक्तम् ? ।

उच्यते—अनेकान्त एष यत् स्त्रीणां दोषबहुलत्वमुच्यते, पुरुषेष्वपि हि समानमेतत् । तेऽपि क्रूराशया दोषबहुला नास्तिकाः कृतघ्नाः स्वामिद्रोहिणो देव-गुरुवञ्चकाश्च दृश्यन्ते । तद्दर्शनेन च महापुरुषाणामवज्ञा कर्तुं न युज्यते, एवं स्त्रीणामपि । यद्यपि कासाञ्चिद् दोषबहुलत्वमुपलभ्यते तथापि कासाञ्चिद् गुणबहुलत्वमप्यस्ति । तीर्थकरादिजनन्यो हि स्त्रीत्वेऽपि तत्तद्गुण-गरिमयोगितया सुरेन्द्रैरपि पूज्यन्ते, मुनिभिरपि स्तूयन्ते । लौकिका अप्याहुः—

"निरतिशयं गरिमाणं, तेन युवत्या वदन्ति विद्वांसः । तं कमपि वहति गर्भं, जगतामपि यो गुरुर्भवति॥१॥" [ ] इति ।

१-ड. ट. ॥ ०परावर्त०-मु. शां. ॥ २ तच्च-इति शां. सं. खं. मध्ये वर्तते । तत्र-इति मु. मध्ये वर्तते । धर्मसंग्रहवृत्तौ [पृ० १२१] तु 'तद्वच्च' इति वर्तते । अत्र 'तच्च' इत्यनेन 'धनवपनं च' इति विवक्षितं प्रतीयते ॥ ३ ०भूमिजाः-मु. ॥ ४ ०संमान०-मु. ॥

काश्चन स्वशीलप्रभावादग्निं जलमिव, विषधरं रज्जुमिव, सरितः[1] स्थलमिव, विषममृतमिव कुर्वन्ति। चतुर्वर्णे च सङ्घे चतुर्थमङ्गं गृहमेधिस्त्रियोऽपि। सुलसाप्रभृतयो हि श्राविकास्तीर्थकरैरपि प्रशस्यगुणाः, सुरेन्द्रैरपि स्वर्गभूमिषु पुनः पुनर्बहुमतचारित्राः, प्रबलमिथ्यात्वै[2]रप्यक्षोभ्यसम्यक्त्वसम्पदः, काश्चिच्चरमदेहाः, काश्चिद् द्वित्रभवान्तरितमोक्षगमनाः शास्त्रेषु श्रूयन्ते। तदासां जननीनामिव भगिनीनामिव स्वपुत्रीणामिव वात्सल्यं युक्तियुक्तमेवोत्पश्यामः। दुष्प्रसह[3]-यक्षिणी-नागिला-ख्यव्रति-व्रतिनी-श्रावकवदपश्चिमा सत्यश्रीः। तत् कथं श्राविकाः पापवद्वनितानिदर्शनेन दूष्यन्ते। तस्माद् दूरेण[4] परिहरणीयाः, वात्सल्यं चासां करणीयमित्यलं प्रसङ्गेन।

जिनबिम्बादि सप्तक्षेत्र्यां धनवपनस्य वर्णनम्

न केवलं सप्तक्षेत्र्यां धनं वपन् महाश्रावक उच्यते, किन्त्वतिदीनेष्वपि निःस्वा-ऽन्ध-बधिर-पङ्गु-रोगार्तप्रभृतिषु कृपया केवलया धनं वपन्, न तु भक्त्या। भक्तिपूर्वकं हि सप्तक्षेत्र्यां यथोचितं दानम्। अतिदीनेषु त्वविचारितपात्रापात्रमविमृष्ट-कल्पनीयाकल्पनीयप्रकारं केवलयैव करुणया स्वधनस्य वपनं न्याय्यम्। भगवन्तोऽपि हि निष्क्रमणकालेऽनपेक्षितपात्रापात्र-विभागं करुणया सांवत्सरिकदानं दत्तवन्त इति। तदेवं भक्त्या सप्तक्षेत्र्यां[5] धनं वपन् दयया चा[6]तिदीनेषु महाश्रावक उच्यते।

१ सरितं-मु.॥ २ ०थ्यात्विभिरक्षो०-खं.॥ ३ “दुप्पसहो समणाणं फग्गुसिरी साहुणीण पच्छिमया। नाइल्ल सावयाणं सच्चसिरी सावियाणं च ॥५३४॥” इति विचारसारप्रकरणे॥ “आचार्यो दुःप्रसहाख्यः फल्गुश्रीरिति साध्व्यपि। श्रावको नागिलो नाम सत्यश्रीः श्राविका पुनः ॥१४६॥ विमलवाहन इतिराण् मन्त्री सुमुखाभिधः। अपश्चिमा भाविनोऽमी दुषमायां हि भारते ॥१४७॥”—त्रिषष्टि० १०।१३॥ ४ दूरेण न परि०-मु.॥ ५ ०क्षेत्र्यां दीनेषु चातिदयया धनं वपन् महा०-मु.॥ ६ चा०—नास्ति शां.॥

नन्तु श्रावक इत्युच्यताम्, महाश्रावक इति तु महत्त्वविशेषणं किमर्थम्? उच्यते—श्रावकत्वमविरतानामेकाद्यणुव्रतधारिणां च शृणोतीति व्युत्पत्त्योच्यते; यदाह—

"संपत्तदंसणाई पइदियहं जइजणा सुणेई य।
सामायारिं परमं जो खलु तं सावयं बेंति ॥ १ ॥" [सम्बोधप्रकरणे ५।१ गा० ९६१, श्रावकप्रज्ञप्तौ गा० २]

"श्रद्धालुतां श्राति पदार्थचिन्तनाद् धनानि पात्रेषु वपत्यनारतम्।
किरत्यपुण्यानि सुसाधुसेवनादथापि तं श्रावकमाहुरञ्जसा ॥ २ ॥" [ ]

इति निरुक्ताच्च श्रावकत्वं सामान्यस्यापि प्रसिद्धम्। विवक्षितस्तु निरतिचारसकलव्रतधारी सप्तक्षेत्रीलक्षणे क्षेत्रे धनवपनाद्दर्शनप्रभावकतां परमां दधानो दीनेषु चात्यन्तकृपापरो महाश्रावकशब्देनोच्यत इत्यदोषः ॥ ११९ ॥

सप्तक्षेत्र्यां धनवपनं व्यतिरेकद्वारेण समर्थयते—

**यः सद् बाह्यमनित्यं च क्षेत्रेषु न धनं वपेत्।**
**कथं वराकश्चारित्रं दुश्चरं स समाचरेत् ॥ १२० ॥**

---

१ "तथा च श्रावकशब्दस्यैवं व्युत्पत्तिः श्रावकप्रज्ञप्त्यादिषु" इत्युल्लेखपुरःसरमुद्धृतेयं गाथा नवपदप्रकरणबृहद्वृत्तौ पृ० ३०७। "अत एवान्यत्र पूज्यैरेवोक्तम्" इत्युल्लेखेन पञ्चाशकवृत्तौ [पृ० ३] उद्धृतेयं गाथा। सम्प्राप्तदर्शनादिः प्रतिदिवसं यतिजनाच्छृणोति च। सामाचारीं परमां यः खलु तं श्रावकं ब्रुवन्ति ॥ २ °द्यापि-मु., धर्मसंग्रहवृत्तौ [पृ० १२२] च॥

॥ ५७७ ॥

सदिति विद्यमानम्, असतो हि धनस्य कथं दानं भवेत्? सदपि बाह्यं शरीराद्बहिर्भूतम्, आन्तरस्य तु कस्यचिद्दानं न शक्यं कर्तुम्, बाह्यमपि यदि नित्यमाकालस्थायि भवेत् तदा न दीयेतापि, इदं त्वनित्यं चौर-जल-ज्वलन-दायाद-पार्थिवादिहरणीयं प्रयत्नगोपितमपि पुण्यक्षयेऽवश्य विनश्यति; यदस्मद्गुरवः—

“ अंत्थं चोरा विलुंपंति, उद्दालंति य दाइया। राया वा संवरावेइ, बलामोडीइ कत्थइ ॥ १ ॥

जलणो वा विणासेइ, पाणियं वा पलावए। अवद्दारेण निग्गच्छे, वसणोवहयस्स वा ॥ २ ॥

भूमीसंगोवियं चेव, हरंति वंतरा सुरा। उज्झित्ता जाइ सव्वं पि, मरंतो वा परं भवं ॥ ३ ॥” [ ]

जिनविम्बादि सप्तक्षेत्र्यां धनवपनस्य वर्णनम्

अनित्यमपि स्वधनं किञ्चित् क्षेप्तुं[2] न शक्यते, न हि बहु तैलमस्तीति पर्वता अभ्यज्यन्त इत्युक्तम्—क्षेत्रेष्विति, क्षेत्राणि येषूप्तं धनं शत-सहस्र-लक्ष-कोटिगुणं भवति। एवंविधायामपि सामग्र्यां यः स्वधनं न वपेत् स वराकः निःसत्त्वश्चारित्रं महासत्त्वसेवनीयमत एव दुश्चरं कथ समाचरेत्? धनमात्रलुब्धो निःसत्त्वः कथं सर्वसङ्गत्यागरूपं चारित्रं विदधीत? अनाराधितचारित्रश्च कथं सद्गतिं प्राप्नुयात्?, सर्वविरतिप्रतिपत्तिकलशारोपणो[3] हि श्रावकधर्मप्रासाद इति ॥ १२० ॥

---

१ अर्थं चौरा विलुम्पन्ति आच्छिन्दन्ति च दायादाः। राजा वा संवारयति बलात्कारेण कुत्रचित्॥ ज्वलनो वा विनाशयति पानीयं वा प्लावयेत्। अपद्वारेण निर्गच्छेद् व्यसनोपहतस्य वा। भूमिसंगोपितं चैव हरन्ति व्यन्तराः सुराः। उज्झित्वा याति सर्वमपि म्रियमाणः परं भवम्॥ २ क्षेप्तुं शक्यते-मु.॥ ३ ०कलसारोपणो हि-शां. खं. सं.॥ कलशारोपणफलो हि-मु.॥

इदानीं महाश्रावकस्य दिनचर्य्यामाह—

**ब्राह्मे मुहूर्त्ते उत्तिष्ठेत् परमेष्ठिस्तुतिं पठन् ।**
**किंधर्मा किंकुलश्चास्मि किंव्रतोऽस्मीति च स्मरन् ॥ १२१ ॥**

पञ्चदशमुहूर्ता रजनी, तस्यां चतुर्दशो मुहूर्तो ब्राह्मः, तस्मिन्नुत्तिष्ठेत् निद्रां जह्यात्, परमे तिष्ठन्तीति परमेष्ठिनः पञ्चाऽर्हदादयः; तेषां स्तुतिं 'नमो अरहंताण' इत्यादिरूपामात्यन्तिकतद्बहुमानकार्य्यभूतां परममङ्गलार्थं वा पठन्नव्यक्तवर्णामिति शेषः । यदाह—

"परमेट्ठिचिंतणं माणसम्मि सेज्जागएण कायव्वं । सुत्ताविणयपवित्तीनिवारिया होइ एवं तु ॥ १ ॥" [ ]

अन्ये त्वविशेषेणैव नमस्कारपाठमाहुः 'न सा काचिदवस्था यस्यां पञ्चनमस्कारस्यानधिकारः' इति मन्वानाः ।

न केवल पठन्, को धर्मो यस्याऽसौ किंधर्मा, किं कुलं यस्याऽसौ किंकुलः, किं व्रतं यस्याऽसौ किंव्रतोऽस्मीत्यहमिति च स्मरन्, इदं भावतः स्मरणम् । उपलक्षणत्वात् के गुरवो ममेति द्रव्यतः, कुत्र ग्रामे नगरादौ वा वसामीति क्षेत्रतः, कः कालः प्रभातादिरिति कालतश्चेत्यादि स्मरन्, धर्मस्य जैनादेः कुलस्येक्ष्वाक्वादेः व्रतानामणुव्रतादीनां स्मरणे तद्विरुद्धपरिहारस्योपकारकत्वात् ॥ १२१ ॥

१ अरिहंताणं–मु. ॥ २ गाथेयं पञ्चाशकवृत्तौ [पृ० ३१] धर्मसंग्रहवृत्तौ [पृ० १२३] च उद्धृता ॥ ३ परमेष्ठिचिन्तनं मानसे शय्यागतेन कर्तव्यम् । सूत्रा(सुप्ता ?)विनयप्रवृत्तिः निवारिता भवति एवं तु ॥

॥ ५७९ ॥

तथा—

शुचिः पुष्पा-ऽऽमिष-स्तोत्रैर्देवमभ्यर्च्य वेश्मनि ।
प्रत्याख्यानं यथाशक्ति कृत्वा देवगृहं व्रजेत् ॥ १२२ ॥

शुचिरिति मलोत्सर्ग-दन्तधावन-जिह्वालेखन-मुखप्रक्षालन-गण्डूषकरण-स्नानादिना शुचिः सन्नित्यनुवादपरम्, लोकसिद्धो ह्ययमर्थ इति नोपदेशपरम्, अप्राप्ते हि शास्त्रमर्थवत्, 'न हि मलिनः स्नायात्, बुभुक्षितोऽश्नीयात्' इत्यत्र शास्त्रमुपयुज्यते। अप्राप्ते त्वामुष्मिके मार्गे नैसर्गिकमोहान्धतमसविलुप्तालोकस्य लोकस्य शास्त्रमेव परमं चक्षुरित्येवमुत्तरत्राप्यप्राप्ते विषये उपदेशः सफल इति चिन्तनीयम्। न च सावद्यारम्भेषु शास्तॄणां वाचनिक्यप्यनुमोदना युक्ता[1]। यदाहुः[2]—

" सावज्जणवज्जाणं[3] वयणाणं जो न जाणइ विसेसं ।
वोत्तुं[4] पि तस्स न खमं किमंग ! पुण देसणं काउं ॥ १ ॥" [ ]

इति शुचित्वमनूद्य पुष्पा-ऽऽमिष-स्तोत्रैरित्याद्युपदिशति ।

वेश्मनि गृहे देवं मङ्गलचैत्यरूपं भगवन्तमर्हन्तमभ्यर्च्य पूजयित्वा। पूजाप्रकारानाह—पुष्पामिषस्तोत्रैरिति, पुष्पाणि कुसुमानि, पुष्पग्रहणं सर्वेषां सुगन्धिद्रव्याणां विलेपन-धूप-गन्धवास-वस्त्रा-ऽऽभरणादीनामुपलक्षणम्। आमिषं भक्ष्यं[5] पेयं च,

१ वाचनिकाप्यनु०-शां. खं. ॥ २ यदाहु-खं. । यदाह-शां. ॥ ३ सावद्यानवद्यानां यो न जानाति विशेषम्। वक्तुमपि तस्य न क्षमं (युक्तं) किमङ्ग पुनर्देशनां कर्तुम्॥ ४ वुत्तं पि-मु. ॥ ५ भक्षं-सं. ॥

तच्च पक्कान्न-फला-ऽक्षत-दीप-जल-घृतपूर्णपात्रादिरूपम्। स्तोत्रं शक्रस्तवादि सद्भूतगुणोत्कीर्तनरूपम्। ततः प्रत्याख्यानं नमस्कारसहिताद्यद्धारूपं सङ्केतरूपं च ग्रन्थिसहितादि कृत्वा यथाशक्तीति शक्त्यनतिक्रमेण, "शक्तितस्त्यागतपसी" [तत्त्वार्थ ६।२३] इति सुप्रसिद्धमेव, देवगृहं भक्तिचैत्यरूपं व्रजेद् गच्छेत्। अत्र च स्नान-विलेपन-वर्णक-विशिष्टवस्त्रा-ऽऽभरणा-ऽलङ्कार-शस्त्रपरिग्रह-विशिष्टवाहनाधिरोहणप्रभृतीनां स्वतः सिद्धानां नोपदेशः। अप्राप्ते शास्त्रमर्थवदित्युक्तमेव। देवगृहव्रजनविधिः पुनरयम्—यदि राजा भवति तदा "सव्वाए इड्ढीए सव्वाए दित्तीए सव्वाए जुईए सव्वबलेणं सव्वपोरिसेणं" [ ]

१ सुद्धमेव-सं. ॥ २ सर्वया ऋद्ध्या सर्वया दीप्त्या सर्वया द्युत्या सर्वबलेन सर्वपौरुषेण। तुलना—"सव्विड्ढीए सव्वजुत्तीए सव्वबलेणं सव्वसमुदएणं ...... चंपाए णयरीए मज्झंमज्झेण णिग्गच्छइ" इति पाठः कोणिकस्य प्रभुमहावीरवन्दनाय गमनप्रसङ्गे औपपातिकसूत्रे दृश्यते। "तत्र याने विधिः—'सव्वाए इड्ढीए सव्वाए दित्तीए, सव्वाए जुत्तीए, सव्वसमुदएणं' इत्यादिः"—इति पञ्चाशकवृत्तौ पृ० ३२॥ तुलना–धर्मसंग्रहवृत्तिः पृ० १३६॥ तुलना–"यदि राजादिस्तदा 'सव्वाए इड्ढीए सव्वाए दित्तीए सव्वाए जुईए सव्वबलेणं सव्वपोरिसेणं' इत्यादिवचनात् शासनप्रभावनानिमित्तं महद्धर्या चैत्यादिषु याति। अथ सामान्यविभवस्तदा औद्धत्यादिपरिहारेण लोकोपहास परिहरन् व्रजतीति। तत्र चैत्यप्रवेशेऽय विधिः—पुष्पताम्बूलादिसचित्तद्रव्याणां परिहारेण कटक-कुण्डल-केयूर-हाराद्युचिताचित्तद्रव्याणामपरिहारेण एकवस्त्रपरिधानः एकेन चोपरितनवस्त्रेण कृतोत्तरासङ्गः '' 'जिनप्रतिमादर्शने शिरस्यञ्जलिकरणेन मनस एकाग्रताकरणेन चेति पञ्चविधाभिगमनेन नैषेधिकीपूर्वं प्रविशति, यदुक्तं भगवत्यां—'सचित्ताणं दव्वाणं विउसरणयाए अचित्ताणं दव्वाणं अविउसरणयाए एगल्लसाडएणं उत्तरासंगेणं चक्खुफासे अजलिप्पग्गहेणं मणसो एगत्तीकरणेणं' ति। क्वचित् 'अचित्ताणं दव्वाणं विउसरणयाए' त्ति पाठः, अत्र अचित्तानां द्रव्याणां छत्रादीनां व्यवसरणेन व्युत्सर्जनेन परिहारेणेत्यर्थः, यस्तु राजादिश्चैत्यं प्रविशति स तत्कालं राजचिह्नानि मुकुट–चामरादीनि परिहरति, तथा च सिद्धान्त —"अवहट्टु रायककुहाइं पंच वररायककुहरूवाइं। खग्गं छत्तोवाणह मउड तह चामराओ य ॥" इत्यादि" इति प्रवचनसारोद्धारवृत्तौ पृ० १३। धर्मसंग्रहवृत्तिः पृ० १३६॥

देवगृह-व्रजन-जिनपूजादि-विधिः

इत्यादिवचनात् प्रभावनानिमित्तं महद्धर्या याति। अथ सामान्यविभवस्तदा औद्धत्यपरिहारेण लोकोपहासं परिहरन् व्रजति ॥ १२३ ॥ ततः—

प्रविश्य विधिना तत्र त्रिः प्रदक्षिणयेज्जिनम् ।
पुष्पादिभिस्तमभ्यर्च्य स्तवनैरुत्तमैः स्तुयात् ॥ १२४ ॥

तत्र देवगृहे विधिना विधिपूर्वकं प्रविश्य त्रिस्त्रीन् वारान् प्रदक्षिणयेत् प्रदक्षिणीकुर्यात्, जिनमर्हद्भट्टारकम् प्रवेशविधिश्चायम्—पुष्प-ताम्बूलादिसचित्तद्रव्याणां क्षुरिका-पादुकाद्यचित्तद्रव्याणां च परिहारेण कृतोत्तरासङ्गो जिनबिम्बदर्शनेऽञ्जलिबन्धं शिरस्यारोपयन् मनसश्च तत्परतां कुर्वन्निति पञ्चविधाभिगमेन नैषेधिकीपूर्वं प्रविशति। यदाह—

"सचित्ताणं दव्वाण विओसरणयाए, अचित्ताणं दव्वाणं वियोसरणयाए[1], एगल्लसाडिएणं[2] उत्तरासंगेणं[3], चक्खुफासे

[1] खं. मु. विना—अविओसरणयाए-शां. सं.। यद्यपि भगवत्यादिषु 'अविओसरणयाए' इति पाठ उपलभ्यते, तथापि ज्ञाताधर्मकथावृत्तौ 'वियोसरणयाए' इत्यपि पाठान्तरम् अभयदेवसूरिभिः, प्रवचनसारोद्धारवृत्तौ [पृ० ६३] च सिद्धसेनसूरिभिर्निर्दिष्टम्। अत्र च हेमचन्द्रसूरिभिः 'क्षुरिका-पादुकाद्यचित्तद्रव्याणां च परिहारेण' इत्युक्तम् [पं० ६], अतः 'वियोसरणयाए' इति पाठो हेमचन्द्रसूरीणामिष्ट इति मत्वा सोऽत्रास्माभिर्मूले स्थापित इति सुधीभिर्विभावनीयम्। दृश्यतामत्र पृ० ५८१ पं० १५, पृ० ५८३ पं० १०॥ [2] ०साडएणं-सं.। धर्मसंग्रहवृत्तौ च पृ० १३६॥ [3] उत्तरासंगकरणेणं-मु०। अत्र भगवतीसूत्रे 'उत्तरासंगकरणेणं' इति पाठः, क्वचित् प्रतौ 'उत्तरासंगेणं' इत्यपि पाठः। ज्ञाताधर्मकथाङ्गे 'एगसाडियउत्तरासंगकरणेणं' इति पाठः। औपपातिकसूत्रे 'एगसाडियं उत्तरासंगकरणेणं' इति पाठः॥

अंजलिपग्गहेणं, मणसो एगत्तीकरणेणं[1] ” [ भगवतीसूत्रे[2] २।५, ज्ञाताधर्मकथाङ्गे प्रथमाध्ययने ] ति ।

यस्तु राजादिः चैत्यभवनं प्रविशति स तत्कालं राजचिह्नानि परिहरति[3] । यदाह—

“ अवहट्टु[4] रायककुहाइं[5] पंच वररायकउहरूवाइं[6] । खग्गं छत्तोवाणह मउडं तह चामराओ य ॥१॥” [ विचारसारे गा० ६६५ ]

---

१ एगत्तीभावकरणेणं—मु. । औपपातिकसूत्रे ‘एगत्तभावकरणेणं’ इति पाठः ॥ २ “अभिगमेणं ति प्रतिपत्त्या अभिगच्छन्ति तत्समीपम् अभिगच्छन्ति । सच्चित्ताण ति पुष्पताम्बूलादीनां विउसरणयाए त्ति व्यसर्जनतया त्यागेन, अच्चित्ताणं ति वस्त्रमुद्रिकादीनाम् अविउसरणयाए त्ति अत्यागेन, एगसाडिएणं ति अनेकोत्तरीयशाटकानां निषेधार्थमुक्तम्, उत्तरासंगकरणेणं ति उत्तरासङ्गः उत्तरीयस्य देहे न्यासविशेषः, चक्षुःस्पर्शे दृष्टिपाते, एगत्तीकरणेणं ति अनेकत्वस्य अनेकालम्बनत्वस्य एकत्वकरणम् एकालम्बनत्वकरणम् एकत्रीकरणम्, तेन ” इति भगवतीसूत्रस्य अभयदेवसूरिविरचितायां वृत्तौ । “ सचित्तेत्यादि, सचित्तानां द्रव्याणां पुष्प-ताम्बूलादीनां विउसरणयाए त्ति व्यवसरणेन व्युत्सर्जनेन, अचित्तानां द्रव्याणामलङ्कारवस्त्रादीनामव्यवसरणेन अव्युत्सर्जनेन, क्वचिद् वियोसरणयेति पाठः, तत्र अचेतनद्रव्याणां छत्रादीनां व्युत्सर्जनेन परिहारेण । उक्तं च–‘ अवणेइ पंच ककुहाणि रायवरवसभचिंधभूयाणि । छत्तं खग्गोवाहण मउडं तह चामराओ य ॥’ त्ति । एका शाटिका यस्मिंस्तत् तथा, तच्च तदुत्तरासंगकरणं च उत्तरीयस्य न्यासविशेषः, तेन, चक्षुस्पर्शे दर्शने अञ्जलिप्रग्रहेण हस्तजोटनेन । मनस एकत्वकरणेन एकाग्रत्वविधानेनेति भावः, क्वचिद् एगत्तभावेणं ति पाठः, अभिगच्छतीति प्रक्रमः ” इति ज्ञाताधर्मकथासूत्रस्य अभयदेवसूरिविरचितायां व्याख्यायाम्, पृ० ४६ । “ सचित्ताणं दव्वाणं विउसरणायाए त्ति पुष्पादिसचेतनद्रव्यत्यागेन, अचित्ताणं दव्वाणं अविउसरणयाए त्ति वस्त्राभरणाद्यचेतनद्रव्याणामत्यजनेन, चक्खुफासे त्ति भगवति दृष्टिपाते ” इति औपपातिकसूत्रवृत्तौ ॥ ३ परित्यजति–खं. सं. । ‘ त्यजति ’- इति धर्मसंग्रहवृत्तौ पृ० १३६ ॥ ४ अपहृत्य राजककुदानि पञ्च वरराजककुदरूपाणि । खड्गं छत्रम् उपानहौ मुकुटं तथा चामराणि च । ५ कउहाइ–खं. सं. । कउआइं–मु. ॥ ६ कउहरूवाइ–खं. सं. । कउआरूवाइं–मु. ॥

॥ ५८३ ॥

पुष्पादिभिरिति पुष्पग्रहणं मध्यग्रहणे आद्यन्तयोरपि ग्रहणमिति न्यायप्रदर्शनार्थम्। तथाहि—नित्य विशेषतश्च पर्वणि स्नात्रपूर्वकं पूजाकरणमिति स्नात्रकाले प्रथमं सुगन्धिश्रीखण्डेन जिनबिम्बस्य तिलककरणम्। ततः—

" मीनकुरङ्गमदागुरुसारं, सारसुगन्धिनिशाकरतारम्।
तारमिलन्मलयोत्थविकारं, लोकगुरोर्दह धूपमुदारम् ॥ १ ॥" [ अर्हदभिषेकविधौ ३।७७ ]

देवगृह-व्रजन-जिनपूजादि-विधिः

इति वचनाद् धूपोत्क्षेपणम्। ततः सर्वौषध्यादिद्रव्याणां जलपूर्णकलशे क्षेपणम्। पश्चात् कुसुमाञ्जलिक्षेपपूर्वकं सर्वौषधि-कर्पूर-कुङ्कुम-श्रीखण्डाऽगुरुप्रभृतिभिर्जलमिश्रैर्घृत-दुग्धप्रभृतिभिश्च स्नात्रकरणम्। ततः सुरभिणा मलयजरसादिना विलेपन-विधानम्। ततः सुगन्धिजाति-चम्पक-शतपत्र-विचकिल-कमलादिमालाभिर्भगवतोऽभ्यर्चनम्, रत्नसुवर्णमुक्ताभरणादि-भिरलङ्करणम्, वस्त्रादिभिः परिधापनम्, पुरतश्च सिद्धार्थक-शालि-तण्डुलादिभिरष्टमाङ्गलिकालेखनम्, तत्पुरतश्च बलि-मङ्गल-दीप-दधि-घृतादीनां ढौकनम्, भगवतश्च भालस्थले गोरोचनया तिलककरणम्, तत आरात्रिकाद्युत्तारणम्। यदाह—

"[2] गंधवर[3]-धूव[4]-सव्वोसहीहिं[5] उअगाइएहिं[6] चित्तेहिं।
सुरहिविलेवण-वरकुसुमदाम-बलि-दीवएहिं च ॥ १ ॥

१ सर्वौषध्या०–शां. सं. ॥ २ " यदाहुः पूर्वगणभृतः " इत्युल्लेखेन इमास्तिस्रो गाथाः प्रवचनसारोद्धारवृत्तौ [ पृ० १३ ] अपि उद्धृताः ॥ ३ गन्धवर–धूप-सर्वौषधिभिरुदकादिकैश्च चित्रैः। सुरभिविलेपन-वरकुसुमदाम-बलि-दीपकैश्च ॥ सिद्धार्थक-दध्यक्षत गोरोचनादिकैर्यथालाभम्। काञ्चनमौक्तिकरत्नादिदामभिश्च विविधैः ॥ प्रवरैः साधनैः प्रायो भावोऽपि जायते प्रवरः। न च अन्य उपयोग एतेषां स्वकानां लष्टतरः॥ ४ ०धूप०–खं. सं. ॥ ५ ०सहीहि–मु. ॥ ६ उअगइएहिं–शां.। उउगाएहिं–खं. ॥

सिद्धत्थय-दहि-अक्खय-गोरोअणमाइएहिं जहलाभं ।
कंचण-मोत्तिय-रयणाइदामएहिं च विविहेहिं ॥ २॥” [ ]

“ पवरेहिं साहणेहिं पायं भावो वि जायए पवरो ।
न य अन्नो उवओगो एएसि संयाण लट्ठयरो ॥ १ ॥” [ सम्बोधप्रकरणे १६७ ] त्ति ।

एत्र भगवन्तमभ्यर्च्य पूजयित्वा ऐर्यापथिकीप्रतिक्रमणपूर्वकं शक्रस्तवादिभिर्दण्डकैश्चैत्यवन्दनं कृत्वा स्तवनैः स्तोत्रैरुत्तमैरुत्तम कविरचितैः स्तुयाद्[2] गुणोत्कीर्तनं कुर्यात् ।

स्तोत्राणां चोत्तमत्वमिदमुक्तम्, यथा—

“ पिण्डक्रियागुणगतैर्गम्भीरैर्विविधवर्णसंयुक्तैः ।
आशयविशुद्धिजनकैः संवेगपरायणैः पुण्यैः ॥ १ ॥
पापनिवेदनगर्भैः प्रणिधानपुरस्सरैर्विचित्रार्थैः ।
अस्खलितादिगुणयुतैः स्तोत्रैश्च महामतिग्रथितैः ॥ २ ॥” [ षोडशक० ९।६,७ ] इति ।

न पुनरेवंविधैः—

“ एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः,
पार्वत्या विपुले नितम्बफलके शृङ्गारभारालसम् ।

---

१ सिया ण–मु. ॥ २ स्तूयाद्–मु. ॥

अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं,
शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ १ ॥" [ ]

तथा—

"धन्या केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या,
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ।
नारीं पृच्छामि नेन्दुं कथयतु विजया[1] न प्रमाणं यदीन्दु-
र्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥ ३ ॥" [ मुद्राराक्षसे[2] ]

तथा—

"पनमथ[3] पनयप्पकुप्पितगोलीचलनग्गलग्गपतिविंबं[4] ।
तससु नखतप्पनेसुं एकातसतनुथलं लुद्दं ॥ १ ॥" [ बृहत्कथायाम्[5] ]

१ "सख्यौ तु विजया जया ॥ २०५ ॥ गौर्याः सख्यौ विजयते विजया, जयति जया" इति स्वोपज्ञवृत्तिसहितेऽभिधानचिन्तामणौ ॥ २ महाकविविशाखदत्तविरचितस्य मुद्राराक्षसनाटकस्य मङ्गलाचरणेऽयं प्रथमः श्लोकः ॥ ३ पनमत पनयप्पकुपित–सं. विना ॥ श्लोकोऽयं सिद्धहेमशब्दानुशासनस्य वृत्तौ अष्टमेऽध्यायेऽपि [ ८।४।३२६ ] आचार्यश्रीहेमचन्द्रसूरिभिरुद्धृतः । तत्र च 'पनमथ पनयपकुप्पित' इति पाठः । प्रणमत प्रणयप्रकुपितगौरीचरणलग्नप्रतिबिम्बम् । दशसु नखदर्पणेषु एकादशतनुधरं रुद्रम् ॥ ४ पडिविंबं–मु. ॥ ५ महाकविना गुणाढ्येन पैशाचीभाषायां विरचिताया बृहत्कथाया मङ्गलाचरणेऽयं श्लोक इति भोजविरचितस्य सरस्वतीकण्ठाभरणव्याकरणस्य आजडविरचितायां प्राचीनायां व्याख्यायां निर्दिष्टम् । तथाहि–"नात्युत्तमपात्र-

तथा—

" एतत् किं शिरसि स्थितं मम पितुः खण्डं सुधादीधिते-
लर्लाटं किमिदं विलोचनमिदं हस्तेऽस्य किं पन्नगः।
इत्थं क्रौञ्चरिपोः क्रमादुपगते दिग्वाससः शूलिनः[1],
प्रश्ने वामकरोपरोधसुभगं देव्याः स्मितं पातु वः[2] ॥ १ ॥"  [ ]

तथा—

" उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा,
धृत्वा चान्येन वासो विगलितकबरीभारमंसं वहन्त्याः।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा[3] वः,
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ १ ॥" [ ]

१ सूलिनः-खं. सं. ॥ २ महाकविराजशेखरविरचितायां काव्यमीमांसायां पञ्चमेऽध्यायेऽपि उद्धृतोऽयं श्लोकः ॥
३ सौरिणा-खं.। निशानारायणकविविरचितोऽयं श्लोकः सुभाषितरत्नभाण्डागारे लक्ष्मीस्तुतिप्रकरणे उपलभ्यते ॥

प्रयोज्या पैशाची शुद्धा, यथा—"पनमत··· ···लुद्दम् ॥" इति सरस्वतीकण्ठाभरणे वर्तते। अस्य व्याख्यायाम् "बृहत्कथायामादिनमस्कारोऽयम्। अत्र पैशाची भाषा इति" इति आजडेन उक्तम्। आजडेन विरचितेयं व्याख्या अणहिलपुरपत्तने [ पाटणनगरे ] हस्तलिखितादर्शरूपा विद्यते ॥

॥ ५८७ ॥

देवगृह-व्रजन-जिनपूजादि-विधिः

अनेन[1] च सम्पूर्णो वन्दनाविधिरुपलक्षितः । यथा—

"तिण्णि[2] निसीहिय[3] तिण्णि य पयाहिणा[4] तिण्णि चेव य पणामा । तिविहा पूआ य तहा अवत्थतियभावणं चेव ॥१॥

तिदिसिनिरक्खणविरई[5] भूमीइ[6] पमज्जणं च तिक्खुत्तो । वण्णाइतिय मुद्दातियं[7] च तिविहं च पणिहाणं ॥२॥" [ ]

"पुप्फामिसथुइभेआ[8] तिविहा पूआ अवत्थतियगं तु । छउमत्थ-केवलित्तं सिद्धत्तं भुवणनाहस्स ॥ ३ ॥

१ एतेन—च. ॥ २ इदमत्र ध्येयम्—इदं गाथाद्वयं पञ्चाशकवृत्तौ [ पृ० ५६ ] उद्धृतम् । श्री शान्तिसूरिविरचिते चैत्यवन्दनमहाभाष्येऽपि गाथाद्वयमिदम् [ गा० १८०–१८१ ] उद्धृतम्, किन्तु "एयासिं गाहाणं आयरियपरंपरेण पत्ताणं" [ गा० १८२ ] इत्यनेन अस्य गाथाद्वयस्य पूर्वाचार्यपरम्परया प्राप्तत्वं तत्र निर्दिष्टम् । प्रवचनसारोद्धारेऽपि गाथाद्वयमिदं दृश्यते [गा. ६६–६७, पृ० १२], किन्तु तत्रापि तस्य विवरणदर्शनात् उद्धृतमेव तत् प्रतीयते। विचारसारप्रकरणेऽपि गाथाद्वयमिदं दृश्यते [ पृ० १३३, गा. ६९४-६९५ ], किन्तु तत्रापि प्रवचनसारोद्धारवदेव सर्वः पाठः, अतस्तत्रापि उद्धृतमेव तत् प्रतीयते । देवेन्द्रसूरिविरचितेऽपि चैत्यवन्दनभाष्ये गाथाद्वयमिदं वर्तते [ गा० ६–७ ]। एतद् गाथाचतुष्टयमपि धर्मसंग्रहवृत्तौ [ पृ० १४१ ] उद्धृतम् । ३ तिस्रो नैषेधिक्यस्तिस्रश्च प्रदक्षिणात्रयश्चैव च प्रणामाः । त्रिविधा पूजा च तथाऽवस्थात्रिकभावनं चैव ॥ ४ य–नास्ति खं. ॥ ५ त्रिदिग्निरीक्षणविरतिर्भूमेः प्रमार्जनं च त्रिकृत्वः । वर्णादित्रिकं मुद्रात्रिकं च त्रिविधं च प्रणिधानम् ॥ ६ 'पयभूमिपमज्जणं च तिक्खुत्तो'—पञ्चाशकवृत्तौ चैत्यवन्दनमहाभाष्ये च। 'तिविहं भूमीपमज्जणं चेव'—प्रवचनसारोद्धारे विचारसारे च ॥ ७ मुद्दाइतिअ–खं. ॥ ८ पुष्पा–ऽऽमिष–स्तुतिभेदा त्रिविधा पूजा अवस्थात्रिकं तु । छद्मस्थकेवलित्वं सिद्धत्वं भुवननाथस्य ॥ वर्णादित्रिकं तु पुनर्वर्णार्थालम्बनस्वरूपं तु । मनोवचनकायजनितं त्रिविधं प्रणिधानमपि भवति ॥

वण्णाइतियं तु पुणो वण्णत्थालम्बणस्सरूवं तु। मणवयणकायजणिअं तिविहं पणिहाणमवि होइ ॥४॥" [ ]

तथा—

"पचंगो[1-2] पणिवाओ थयपाढो होइ जोगमुद्दाए। वंदण जिणमुद्दाए पणिहाणं मुत्तसुत्तीए ॥ १ ॥

दो जाणू दोन्नि करा पंचमयं होइ उत्तमंगं[3] तु। सम्मं संपणिवाओ नेओ पंचंगपणिवाओ ॥ २ ॥

अण्णोण्णंतरिअंगुलिकोसागारेहिं दोहिं हत्थेहिं। पेट्टोवरिकोप्परसंठिएहिं[4] तह जोगमुद्द त्ति ॥ ३ ॥

चत्तारि[5] अंगुलाइं पुरओ ऊणाइं[6] जत्थ पच्छिमओ। पायाणं उस्सग्गो एसा[7] खलु होइ जिणमुद्दा ॥ ४ ॥

मुत्तासुत्ती[8] मुद्दा समा जहिं दोवि[9] गब्भिया हत्था। ते पुण णिडालदेसे[10] लग्गा अन्ने अलग्ग त्ति ॥ ५ ॥"

[ पञ्चाशक० ३।१७–२१ ] इत्यादि।

१ एता गाथाश्चैत्यवन्दनमहाभाष्ये [ गा० २३६–२४० ] प्रवचनसारोद्धारः [ गा० ७२–७६ ] विचारसारः [ गा० ६९८-६७४-६९९ ७००,७०१ ] चैत्यवन्दनभाष्ये [ गा० १५-१८ ] धर्मसंग्रहवृत्ति. [ पृ० १४१ ] इत्यादिग्रन्थेष्वपि दृश्यन्ते। २ पञ्चाङ्गः प्रणिपातः स्तवपाठो भवति योगमुद्रया। वन्दनं जिनमुद्रया प्रणिधानं मुक्तिशुक्त्या ॥ द्वे जानुनी द्वौ करौ पञ्चमकं भवत्युत्तमाङ्गं तु। सम्यक् सम्प्रणिपातो ज्ञेयः पञ्चाङ्गप्रणिपातः॥ अन्योन्यान्तरिताङ्गुलिकोशाकाराभ्यां द्वाभ्यां हस्ताभ्याम्। उदरोपरि कूर्परसंस्थिताभ्यां तथा योगमुद्रेति॥ ३ उत्ति०–मु.॥ ४ पिट्टो०–सं. विना॥ ५ चत्वारि अङ्गुलानि पुरत ऊनानि यत्र पश्चिमतः॥ पादयोरुत्सर्गः एषा खलु भवति जिनमुद्रा॥ ६ ऊणाइ–सं.॥ ७–ख. ग. ड.। एसा पुण होइ–मु., पञ्चाशकादौ च॥ ८ मुक्ताशुक्तिर्मुद्रा यत्र समौ द्वावपि गर्भितौ हस्तौ। तौ पुनर्ललाटदेशे लग्नौ अन्येऽलग्नाविति॥ ९–क.ग.ड.। जत्थ समा दो वि–मु.॥ १० निलाड०–शां.।

ऐर्यापथिकीप्रतिक्रमणपूर्वकं चैत्यवन्दनमित्युक्तम्। तत ऐर्यापथिकीसूत्रं व्याख्यायते, तच्च 'इच्छामि पडिक्कमिउ'[1]-मित्यादि[2] 'तस्स मिच्छामि दुक्कड'मित्यन्तम्।

'इच्छामि पडिक्कमिउं इरियावहियाए विराहणाए', इच्छामि अभिलषामि प्रतिक्रमितुं प्रतीपं क्रमितुम्, ईरणमीर्या गमन-मित्यर्थः, तत्प्रधानः पन्था ईर्यापथः, तत्र भवा ऐर्यापथिकी[3], काऽसौ ? 'विराधना' जन्तुबाधा, तस्या ऐर्यापथिक्या विराधनायाः सकाशात् प्रतिक्रमितुमिच्छामीति सम्बन्धः।

अस्मिंश्च व्याख्याने ईर्यापथनिमित्ताया एव विराधनायाः प्रतिक्रमणं स्याद्, न तु शयनादेरुत्थितस्य कृतलोचादेर्वा, तस्मादन्यथा व्याख्यायते–ईर्यापथः साध्वाचारः, यदाह–"ईर्यापथो ध्यान[4]-मौनादिकं भिक्षुव्रतम्" [ ], तत्र भवा ऐर्यापथिकी, काऽसौ ? विराधना साध्वाचारातिक्रमरूपा, तस्या इच्छामि प्रतिक्रमितुमिति सम्बन्धः। साध्वाचारातिक्रमश्च प्राणातिपातादिरूपः। तत्र च प्राणातिपातस्यैव गरीयस्त्वम्, शेषाणां तु पापस्थानानामत्रैवान्तर्भावः, अत एव प्राणातिपातविराधनाया एवोत्तरः प्रपञ्चः।

क्व सति विराधना ? 'गमणागमणे,' गमनं चागमनं च समाहारद्वन्द्वस्तस्मिन्। गमनं प्रयोजने सति बहिर्यानम्, आगमनं प्रयोजनसमाप्तौ स्वस्थान एँवा[5]गमनम्। गमनागमनेऽपि कथं विराधना ? इत्याह–'पाणक्कमणे' प्राण्याक्रमणे,

१ पडिक्कमिउं इरिया इत्यादि–सं.॥ २ तुलना–धर्मसंग्रहवृत्तिः पृ० १४२॥ ३ इर्या०–सं.॥ ४ मौनध्यानादिकं–मु.॥ ५ एव गमनम्–मु.॥

॥ ५२१ ॥ [1]प्राणिनो द्वीन्द्रियादयस्तेषामाक्रमणं पादेन पीडनं प्राण्याक्रमणम्, तत्र। तथा 'बीअक्कमणे' बीजाक्रमणे, अनेन बीजानां जीवत्वमाह, तथा '[2]हरियक्कमणे' हरिताक्रमणे, अनेन सकलवनस्पतेः। तथा 'ओसाउत्तिंगपणगदगमट्टीमक्कडासंताणासंकमणे,' अवश्यायो जलविशेषः, इह चावश्यायग्रहणमतिशयतः शेषजलसम्भोगपरिहरणार्थम्, उत्तिंगा गर्दभाकृतयो जीवाः, ते हि भूमौ विवराणि कुर्वन्ति, कीटिकानगराणि वा उत्तिंगाः, पनकः पञ्चवर्णोल्लिः, दकमृत्तिका अनुपहतभूमौ [3]चिक्खल्लः, अथवा दकशब्देनाप्कायो गृह्यते मृत्तिकाशब्देन तु पृथ्वीकाय इति, मर्कटः कोलिकः,- तस्य सन्तानो जालकम्, ततश्चावश्याय-श्चोत्तिङ्गश्चेत्यादिद्वन्द्वः, तेषां संक्रमणमाक्रमणं, तस्मिन्।

कियन्तो वा भेदेनाख्यातुं शक्यन्ते? इत्याह—'जे मे जीवा विराहिया,' ये केचन सर्वथा मया जीवा विराधिता दुःखे स्थापिताः। ते च एगिंदिया, एकं [4]स्पर्शनमिन्द्रियं येषां ते एकेन्द्रियाः पृथिव्यप्तेजोवायुवनस्पतिलक्षणाः। बेइंदिया, द्वे स्पर्शन-रसने इन्द्रिये येषां ते द्वीन्द्रियाः कृम्यादयः। [5]तेइंदिया, त्रीणि स्पर्शन-रसन-घ्राणानि इन्द्रियाणि येषां ते त्रीन्द्रियाः पिपीलिकादयः। चउरिंदिया, चत्वारि स्पर्शन-रसन-घ्राण-चक्षुर्लक्षणानीन्द्रियाणि येषां ते चतुरिन्द्रिया भ्रमरादयः। [6]पंचेंदिया, पञ्च श्रोत्रान्तानि इन्द्रियाणि येषां ते पञ्चेन्द्रिया मूषकादयः।

---

१ तुलना-आवश्यकसूत्रे प्रतिक्रमणाध्ययनस्य हारिभद्री वृत्तिः पृ० ५७३। धर्मसंग्रहवृत्तिः पृ० १४२॥ २ हरिअक्क०-मु०॥ ॥ ५९१ ॥
३ चिक्खिल्लः-मु.॥ ४ स्पर्शनमात्रमिन्द्रियं-मु.॥ ५ तेइंदिआ-शां. खं.॥ ६ पंचिंदिया-मु.॥

विराधनाप्रकारमाह—'अभिहया' अभिमुखागता[1] हताश्चरणेन घट्टिताः, उत्क्षिप्य क्षिप्ता वा। 'वत्तिआ' वर्तिताः पुञ्जीकृताः धूलिचिक्खल्लादिना[2] वा स्थगिताः। 'लेसिआ' श्लेषिताः पिष्टा भूम्यादिषु वा लगिताः। 'संघाइया'[3] संघातिताः अन्योन्यगात्रैरेकत्र लगिताः। 'संघट्टिया'[4] संघट्टिताः मनाक् स्पृष्टाः। 'परिआविआ'[5] परितापिताः समन्ततः पीडिताः। 'किलामिआ'[6] क्लमिता ग्लानिमापादिता मारणान्तिकं समुद्घातं नीता इत्यर्थः। 'उद्दविआ'[7] अवद्राविता उत्त्रासिताः। 'ठाणाओ ठाणं संकामिया'[8] स्वस्थानात् परस्थानं नीताः। 'जीवियाओ ववरोविया'[9] जीविताद् व्यपरोपिता मारिता इत्यर्थः।

चैत्यवन्दन-विधौ 'तस्स उत्तरी'सूत्र-व्याख्या

'तस्स' तस्य 'अभिहया' इत्यारभ्योक्तस्य[10] विराधनाप्रकारस्य सर्वस्य, 'मिच्छा मि दुक्कडं' मिथ्या मे दुष्कृतम्, एतद् दुष्कृतं मिथ्या मे भवतु, विफलं भवत्वित्यर्थः। 'मिच्छा मि दुक्कड'मित्यस्य पूर्वाचार्या निरुक्तविधिमुपदर्शयन्ति, तद्यथा—

"मि[11] त्ति मिउमद्दवत्ते[12], छ त्ति य दोसाण छायणे होइ।
मि[13] त्ति अ मेराए ठिओ दु त्ति दुगुंच्छामि[14] अप्पाणं ॥ १ ॥

१ ०गता—नास्ति मु. ॥ २ चिक्खिल्लादिना—सं. ॥ ३ संघाइआ—शां. खं. ॥ ४ संघट्टिआ—शां. ॥ ५ परियाविआ—शां. ॥ ६ किलामिया—सं. ॥ ७ उद्दविया—सं. ॥ ८ संकामिआ—खं. ॥ ९ जीविआओ ववरोविआ—शां. खं. ॥ १० इत्यारभ्योक्तविरा०—मु। इत्यारम्भोक्तविरा०—जैमु. ॥ ११ मि इति मृदुमार्दवत्वे छा इति च दोषाणां छादने भवति। मि इति मर्यादायां स्थितः दु इति जुगुप्सामि आत्मानम्। १२ ०वत्थे—मु. ॥ १३ मे त्ति—शां. खं. ॥ १४ दुगंच्छामि—मु. ॥

कं[1] त्ति कडं मे पावं ड त्ति अ डेवेमि तं उवसमेणं ।

एसो मिच्छादुक्कडपयक्खरत्थो समासेणं ॥ २ ॥"  [ आवश्यकनिर्युक्तौ ६८६–६८७; १५१९–१५२० ]

[2]एवमालोचना-प्रतिक्रमणरूप द्विविध प्रायश्चित प्रतिपद्य कायोत्सर्गलक्षणं प्रायश्चितं प्रतिपित्सुरिदं सूत्रं पठति—

तस्स उत्तरीकरणेणं पायच्छित्तकरणेणं विसोहीकरणेणं विसल्लीकरणेणं पावाणं कम्माण निग्घायणट्ठाए ठामि [3]काउस्सग्गं ॥

तस्यालोचितप्रतिक्रान्तस्य विराधनाप्रकारस्य उत्तरीकरणादिना हेतुभूतेन ठामि काउस्सग्गमिति योगः । [4]तत्रोत्तरकरणं पुनः संस्कार[5]द्वारेणोपरिकरणमनुत्तरस्योत्तरस्य करणमुत्तरीकरणम्; अयं भावः—विराधनस्य हि पूर्वमालोचनादिकं कृतं तस्यैव कायोत्सर्गकरणमुत्तरकरणम्, तेन पापकर्मनिर्घातना भवति ।

उत्तरीकरण च प्रायश्चित्तकरणद्वारेण भवति इत्याह–'पायच्छित्तकरणेणं,' प्रायो बाहुल्येन चित्तं जीवं मनो वा शोधयति प्रायश्चित्तम्, यद्वा पापं छिनत्तीति पापच्छित्, आर्षत्वात् पायच्छित्तं, तस्य करणेन हेतुभूतेन । प्रायश्चित्तकरणं च विशुद्धिद्वारेण भवतीत्याह—'विसोहीकरणेणं', विशोधनं 'विशुद्धिः', अपराधमलिनस्यात्मनो निर्मलीकरणम्, विशुद्धेः करणं विशुद्धिकरणम्, तेन हेतुभूतेन ।

---

१ क इति कृतं मया पापं ड इतिच लङ्घयामि तदुपशमेन । एष मिथ्यादुष्कृतपदाक्षरार्थः समासेन ॥ २ धर्मसंग्रहवृत्तिः पृ० १४४ ॥ ३ काउसग्गं-सं. मु. ॥ ४ अत्रो-खं. ॥ इत आरभ्य तुलना–आवश्यकसूत्रे कायोत्सर्गाध्ययनस्य हारिभद्री वृत्तिः पृ० ७७९, आवश्यकचूर्णिः पृ० २५०–२५१ ॥ ५ ०द्वारेण परिष्करण०-मु ॥

॥ ५९३ ॥

विशुद्धिकरण च विशल्यकरणद्वारेण भवति, अत आह—'विसल्लीकरणेणं', विगतानि शल्यानि मायादीनि यस्यासौ विशल्यः, अविशल्यस्य विशल्यस्य करणम्, तेन हेतुभूतेन।

किमित्याह—'पावाणं कम्माणं निग्घायणट्ठाए'[1], पापानां संसारनिबन्धनभूतानां कर्मणां ज्ञानावरणीयादीनां निर्घातनार्थाय, निर्घातनमुच्छेदः, स एवार्थः प्रयोजनम्, तस्मै, 'ठामि काउस्सग्गं', अनेकार्थत्वाद्धातूनां 'ठामि' करोमि, कायस्य उत्सर्गो व्यापारवतः परित्यागः, तम्।

'अन्नत्थ-' सूत्रव्याख्या

किं सर्वथा? नेत्याह[2]—'अन्नत्थ ऊससिएणं' अन्यत्रोच्छ्वसितात्, तृतीया पञ्चम्यर्थे, ऊर्ध्वं प्रबलं[3] वा श्वसितमुच्छ्वसितं तन्मुक्त्वा योऽन्यो व्यापारस्तेन व्यापारवतः कायस्य उत्सर्ग इत्यर्थः, उच्छ्वसितं हि निरोद्धुमशक्यम्, तन्निरोधे सद्यः प्राणविघाताद्यापत्तेः। यदाह—

"ऊसासं न निरुंभइ, अभिग्गहिओ[4] वि किमुअ चिट्ठाए।
सज्जमरणं निरोहे, सुहुमुस्सासं[5] तु जयणाए॥ १॥" [आवश्यकनिर्युक्तौ १५२४]

एवं निःश्वसिताद्यपि। 'नीससिएणं,'[6] अधः श्वसितं निःश्वसितम्, तस्मात्। 'खासिएणं' काशितात्। 'छिएणं'[7] क्षुतात्। 'जंभाइएणं,' विवृतवदनस्य प्रबलपवननिर्गमो जृम्भितम्, तस्मात्। 'उड्डुएणं'[8] उद्गारितात्। 'वायनिसग्गेणं' अपानेन पवननिर्गमो

१. निग्घाअण०–शां. खं.॥ २. इत आरभ्य ललितविस्तरायां तुलना द्रष्टव्या॥ ३. प्रलम्बं–मु.॥ ४. अभि०–मु.॥ ५. सुहमु०–शां. खं.॥ ६. निश्व०–खं.॥ ७. 'छीएणं' इति आवश्यकसूत्रादौ पाठः॥ ८. उड्डुइएणं–खं. सं.॥

वातनिसर्गः, तस्मात्। '[1]भंमलीए' शरीरभ्रमेराकस्मिक्याः। 'पित्तमुच्छाए', पित्तप्राबल्यान्मनाग्मोहो मूर्च्छा, तस्याः। '[2]सुहुमेहिं अंगसंचालेहिं' सूक्ष्मेभ्यो लक्ष्यालक्ष्येभ्योऽङ्गसञ्चारेभ्यो गात्रविचलनप्रकारेभ्यो रोमोद्गमादिभ्यः। '[3]सुहुमेहिं खेलसंचालेहिं', सूक्ष्मेभ्यः खेलस्य श्लेष्मणः, सञ्चारेभ्यः आत्मनो हि वीर्ययुक्तद्रव्यतया अन्तः सूक्ष्मश्लेष्मसञ्चारः सम्भवतीत्यतोऽन्यत्रेत्युच्यते[4]। 'सुहुमेहिं दिट्ठिसंचालेहिं' सूक्ष्मेभ्यो दृष्टिसञ्चारेभ्यो निमेषादिभ्यः, [5]सूक्ष्मा हि दृष्टिसञ्चारा[6]स्तदा सर्वथा निरोद्धुं शक्यन्ते[7] यदा एकस्मिन् द्रव्ये दृष्टिनिवेशः स्थिरीकर्तुं शक्यते, न च शक्यते कर्तुमिति।

उच्छ्वसितादिभ्योऽन्यत्र कायोत्सर्गं करोमीत्येतावता किमुक्तं भवति? 'एवमाइएहिं आगारेहिं अभग्गो अविराहिओ [8]होज्ज मे काउस्सग्गो,' एवमादिभिरुच्छ्वसितनिःश्वसितादिभिः पूर्वोक्तैराकारैरपवादरूपैरभग्नोऽविराधितो मे कायोत्सर्गो भूयादिति सम्बन्धः, आदिशब्दादन्यैरपि, यदा [9]अग्नेर्विद्युतो वा ज्योतिः स्पृशति तदा प्रावरणायोपधिग्रहणं कुर्वतो न कायोत्सर्गभङ्गः।

ननु नमस्कारमेवाभिधाय किमिति तद्ग्रहण न करोति येन तद्भङ्गो न भवति?। उच्यते—नात्र नमस्कारेण पारण[10]मेवाविशिष्ट कायोत्सर्गमानं क्रियते, किन्तु यो यत्परिमाणः कायोत्सर्ग उक्तस्तावन्तं कालं प्रतीक्ष्य तत ऊर्ध्वं नमस्कारमपठित्वा

---

१. भमलिए–मु ॥ २, ३. सुहमेहिं–खं.॥ ४. ०न्यत्रोच्यते–मु.॥ ५. सूक्ष्मो हि–खं.॥ ६. ०रस्तदा–खं.॥ ७. शक्यते–खं.॥ ८. हुज्ज–मु.॥ ९. अग्नि० – खं.॥ १०. ०वावशिष्टकायो०–मु.। दृश्यताम् आवश्यकसूत्रे कायोत्सर्गाध्ययनस्य हारिभद्री वृत्तिः पृ० ७८४। ललितविस्तरा॥

पारयतो भङ्ग, अपरिसमाप्तेऽपि च पठतो भङ्ग एव, तस्माद्यो यत्परिमाणः कायोत्सर्गस्तस्मिन् पूर्ण एव 'नमो अरहंताणं' इति वक्तव्यम्। तथा मार्जार-मूषकादेः पुरतो गमनेऽग्रतः सरतोऽपि न भङ्गः, तथा चौरसंभ्रमे राजसंभ्रमे वा अस्थानेऽपि नमस्कार-मुच्चारयतो न भङ्गः। तथा सर्पदष्टे आत्मनि परे वा साध्वादौ सहसा उच्चारयतो न भङ्गः। यदाहुः—

"अगणी[3] उच्छिंदिज्ज व बोहीखोभाइ दीहडको वा।
आगारेहि अभग्गो उस्सग्गो एवमाईहिं ॥ १ ॥"  [ आवश्यकनिर्युक्तौ १५३० ]

'अन्नत्थ-' सूत्रव्याख्या

आक्रियन्ते आगृह्यन्ते इत्याकाराः कायोत्सर्गापवादप्रकारा इत्यर्थः, तैराकारैर्विद्यमानैरपि, भग्नः सर्वथा विनाशितः, न भग्नोऽभग्नः, विराधितो देशभग्नः, न विराधितोऽविराधितो भवेन्मम कायोत्सर्गः। कियन्तं कालं यावदित्याह—'जाव अरिहंताणं भगवंताणं नमोक्कारेणं न पारेमि,' यावदिति कालावधारणम्, यावदर्हतां भगवतां सम्बन्धिना नमस्कारेण 'नमो अरहंताणं' इत्यनेन न पारयामि न पारं गच्छामि, तावत् किमित्याह—'ताव कायं ठाणेणं मोणेणं झाणेणं अप्पाणं वोसिरामि,' तावत् तावन्तं कालं कायं देहं स्थानेनोर्ध्वस्थानेन हेतुभूतेन, ऊर्ध्वस्थानमभिगृह्य कायप्रसरनिषेधेनेत्यर्थः, मौनेन वाग्निरोध-

१. अरिहं०-मु. ॥ २ ०मूषिका०-मु. ॥ ३. अगणि-उच्छिन्दिज्ज-वोहियखोभाइ-दीहडक्को वा आगारेहिं-मु.। 'अगणीओ छिंदिज्ज व वोहियखोभाइ' इति मुद्रितायामावश्यकनिर्युक्तौ पाठः। 'अगणी उ छिंदिज्ज' इति ललितविस्तरायां पाठः॥ "एवमादिएहिं एवंप्रकारेहिं अण्णेहि वि जथा अगणी बोहिभयं वा तिरिया वा मज्जारादी ओछिंदेज्जा पवडेज्जा, दीहजातिडक्को वा सतं वा अण्णे वेति" इति आवश्यकचूर्णौ कायोत्सर्गाध्ययने पृ० २५२॥ "अगणि त्ति यदा ज्योतिः स्पृशति तदा. ... छिंदिज्ज व त्ति मार्जारीमूषकादिभिर्वा वोहियखोभाइ त्ति वोधिकास्तेनाः, तेभ्यः क्षोभः सम्भ्रमः......दीहडक्को वेति सर्पदष्टे चात्मनि परे वा" इति आवश्यकसूत्रस्य हारिभद्रयां वृत्तौ पृ० ७८४॥ ४ ०रणे मु ॥ ५ अरि०-मु. ॥

॥ ५९७ ॥

लक्षणेन, ध्यानेन शुभेन, सद्विषये चिन्तामभिगृह्येत्यर्थः, 'अप्पाणं' आर्षत्वादात्मीयं कायं 'वोसिरामि' व्युत्सृजामि कुव्यापारनिराकरणेन परित्यजामि। अन्ये तु अप्पाणमिति न पठन्ति। अयमर्थः—पञ्चविंशत्युच्छ्वासमानं कालं यावदूर्ध्वस्थानस्थितः प्रलम्बभुजो निरुद्धवाक्प्रसरः प्रशस्तध्यानानुगतस्तिष्ठामि स्थान-मौन-ध्यानक्रियाव्यतिरेकेण क्रियान्तराध्यासद्वारेण व्युत्सृजामि। पञ्चविंशत्युच्छ्वासाश्च चतुर्विंशतिस्तवेन 'चंदेसु निम्मलयरा' इत्यन्तेन चिन्तितेन पूर्यन्ते, "पायसमा ऊसासा" [आवश्यकनिर्युक्तौ १५५३] इति वचनात्। संपूर्णकायोत्सर्गश्च 'नमो [2]अरहंताणं' इति नमस्कारपूर्वकं पारयित्वा चतुर्विंशतिस्तवं सम्पूर्णं पठति।

एवं सन्निहिते गुरौ तत्समक्षं गुरुविरहे तु गुरुस्थापनां मनसि कृत्वा ईर्यापथप्रतिक्रमणं निर्वर्त्य चैत्यवन्दनमुत्कृष्टमारभ्यते, जघन्य-मध्यमे तु चैत्यवन्दने ऐर्यापथिकीप्रतिक्रमणमन्तरेणापि भवतः।

[3]तत्र नमस्कारेण 'नमो [4]अरहंताणं' इत्यनेन—

"वपुरेव तवाचष्टे भगवन्! वीतरागताम्।
न हि कोटरसंस्थेऽग्नौ तरुर्भवति शा[5]द्वलः ॥ १ ॥" [ ]

---

१ "अन्ये तु न पठन्त्येवैनमालापकम्"—आवश्यकसूत्रस्य हारिभद्री वृत्तिः पृ० ७८० ॥ २ अरिहंता०—मु.। ३ अत्र—मु.॥ ४ अरि०—मु.॥ ५ शाड्वलः—मु.। "नड—शादाद् वलः"—सि. ६।२।७५॥

इत्यादिना वा कविकृतेन जघन्या चैत्यवन्दना भवति। अन्ये तु प्रणाममात्ररूपां जघन्यां चैत्यवन्दनां वदन्ति। प्रणामस्तु पञ्चधा—

"एकाङ्गः शिरसो नामे स द्व्यङ्गः करयोर्द्वयोः। त्रयाणां नमने त्र्यङ्गः करयोः शिरसस्तथा ॥ १ ॥
चतुर्णां करयोर्जान्वोर्नमने चतुरङ्गकः। शिरसः करयोर्जान्वोः पञ्चाङ्गः पञ्चके नते ॥ २ ॥" [ ]

मध्यमा तु स्थापनार्हत्स्तवदण्डकेन स्तुत्या चैकया भवति। यदाह—

"नवकारेण जहन्ना दंडगथुइजुअल मज्झिमा णेया।
संपुण्णा उक्कोसा विहिणा खलु वंदणा तिविहा ॥ १ ॥" [ पञ्चाशक० ३।२ ]



इत्युत्कृष्टया वन्दनया वन्दितुकामो विरतः साधुः श्रावकश्च अविरतसम्यग्दृष्टिरपुनर्बन्धको वा यद्वा भद्रको यथोचितं प्रतिलेखितप्रमार्जितस्थण्डिलो भुवनगुरौ विनिवेशितनयनमानसः संवेगवैराग्यवशादुत्पन्नरोमाञ्चकञ्चुको मुदाश्रुपूर्णलोचनः अतिदुर्लभं भगवत्पादवन्दनमिति बहु मन्यमानो योगमुद्रया अस्खलितादिगुणोपेतं तदर्थानुस्मरणगर्भं प्रणिपातदण्डकसूत्रं पठति। तत्र च त्रयस्त्रिंशदालापका आलापकद्विकादिप्रमाणाश्च विश्रामभूमिरूपा नव सम्पदो भवन्ति। यदाह—

१ इत्यादिना च कवि०-खं.। इत्यादिना कविकृतेन च जघन्या-मु. ॥ २ ०नार्हतः स्तव०-मु. ॥ ३ नमस्कारेण जघन्या दण्डकस्तुतियुगलं मध्यमा ज्ञेया। सम्पूर्णा उत्कृष्टा विधिना खलु वन्दना त्रिविधा। ४ ०जुगल०-मु.। ०जुयल०-सं. ॥ ५ णेआ-शां.। ६ ०ष्टया चैत्यवन्दनया-मु. ॥ ७ यथाभद्रको-मु. ॥ ८ मुदश्रु०-मु., ललितविस्तरायां च ॥

"दो तिअ चउर ति पंचा, दोन्नि अ चउरो य हुंति तिन्ने य ।
सक्कथए नव संपय, तेत्तीसं होंति आलावा ॥ १ ॥" [ ]

एताश्च यथास्थानं नामतः प्रमाणतश्च कथयिष्यन्ते ।

व्याख्या[2]–नमो त्थु णं अरहंताणं[3] भगवंताणं । तत्र नम इति नैपातिकं पदं पूजार्थम्, पूजा च द्रव्य-भावसङ्कोचः । तत्र कर-शिरः-पादादिद्रव्यसंन्यासो द्रव्यसङ्कोचः, भावसङ्कोचस्तु विशुद्धस्य मनसो नियोगः, अस्त्विति भवतु । प्रार्थनैषा धर्मबीजमाशयविशुद्धिजनकत्वात् । णमिति वाक्यालङ्कारे अतिशयपूजामर्हन्तीति अर्हन्तः । यदाहुः[4]—

"अरिहंति[5] वंदण-नमंसणाइं[6] अरिहंति[7] पूयसक्कारं ।
सिद्धिगमणं च अरिहा अरिहंता[8] तेण वुच्चंति ॥ १ ॥" [ आवयश्कनिर्युक्तौ ९२१ ]

---

१ द्वौ २, त्रयः ३, चत्वारः ४, त्रयः पञ्च १५, द्वौ च २, चत्वारश्च ४, भवन्ति त्रयः च । शक्रस्तवे नव सम्पदः, त्रयस्त्रिंशद् भवन्ति आलापकाः ॥ २ अस्यास्तुला हरिभद्रसूरिविरचितायां ललितविस्तरायां तत्र तत्र द्रष्टव्या ॥ ३ अरि०–शां. ॥ ४ यदाह–मु. ॥ ५ अरहंति–मु. । ६ ०णाइ–शां. खं. ॥ ७ अरहंति–मु. ॥ ८ अरहंता–मु. ॥ 'अरहंता' इति मुद्रितायामावश्यकनिर्युक्तौ पाठः । "अर्ह पूजायाम्' [ पा० धा० ७४० ] अर्हन्तीति पचाद्यच्, कर्तरि अर्हाः, किमर्हन्ति ? वन्दननमस्करणे, तत्र वन्दनं शिरसा, नमस्करणं वाचा । तथाऽर्हन्ति पूजासत्कारम्, तत्र वस्त्र-माल्यादिजन्या पूजा, अभ्युत्थानादिसम्भ्रमः सत्कारः, तथा सिद्धिगमनं चार्हन्ति··· ···सिद्धिः लोकान्तक्षेत्रलक्षणा········ तद्गमनं च प्रत्यर्हा इति, अरहंता तेण वुच्चंति, प्राकृतशैल्या अर्हास्तेनोच्यन्ते, अथवा अर्हन्तीत्यर्हन्त इति गाथार्थः ।" इति आवश्यकसूत्रस्य हारिभद्र्यां वृत्तौ पृ० ४०६ ॥

॥ ५९९ ॥

" सुगृद्विषार्हः सत्रिशत्रुस्तुत्ये "[ सि० ५।२।२६ ] इति वर्तमानकाले अतृश्। कथं वर्तमानकालत्वमिति चेत्, पूजारम्भस्याऽनुपरमात्। एष एव हि न्याय्यो वर्तमानः[1] कालो यत्रारब्धस्यापवर्गो नास्ति।

तथा अरिहननादर्हन्तः, अरयश्च मोहादयः साम्परायिककर्मबन्धहेतवः[2], तेषामरीणामनेकभवगहनव्यसनप्रापणकारणानां हननादर्हन्तः[3]। तथा रजोहननादर्हन्तः[4], रजश्च घातिकर्मचतुष्टयं येनावृतस्यात्मनः सत्यपि ज्ञानादिगुणस्वभावत्वे घनसमूहस्थगितगभस्तिमण्डलस्य विवस्वत इव तद्गुणानामभिव्यक्तिर्न भवति, तस्य हननादर्हन्तः[5]। तथा रहस्याभावादर्हन्तः[6], तथाहि—भगवतां निरस्तनिरवशेषज्ञानावरणादिकर्मपारतन्त्र्याणां केवलमप्रतिहतमनन्तमद्भुतं ज्ञानं दर्शनं चास्ति, ताभ्यां जगदनवरतं युगपत् प्रत्यक्षतो जानतां पश्यतां च रहस्यं नास्ति, तस्माद् रहस्याभावादर्हन्तः। एषु त्रिष्वर्थेषु पृषोदरादित्वादर्हदिति सिद्ध्यति।

अथवा अविद्यमानं रह एकान्तरूपो देशोऽन्तश्च मध्यं गिरिगुहादीनां सर्ववेदितया प्रच्छन्नस्य कस्याप्यभावेन येषां तेऽरहोऽन्तरः, तेभ्योऽरहोऽन्तर्भ्यः[7]। अथवा[8] अरहद्भ्यः क्षीणरागत्वात् क्वचिदप्यासक्तिमगच्छद्भ्यः। अथवा[9] अरहद्भ्यो रागद्वेषहेतुभूतमनोज्ञेतरविषयसंपर्केऽपि वीतरागत्वादिकं स्वं[10] स्वभावमत्यजद्भ्यः।

१ ०मानकालो–मु. शां. ॥ २ साम्परायककर्म०–सं. खं. ॥ ३,४,५,६ ०दर्हतः–खं. ॥ ७ ०रहोंतेभ्यः–खं.। ०रहांतर्भ्यः–सं.॥ ८ "रहि गतौ" [ पा० धा० ७३२ ] इति धातुमाश्रित्य अर्थमभिधत्ते ॥ ९ रह त्यागे [ पा० धा० ७३१ ] इति धातुमाश्रित्य अर्थमाह ॥ १० स्वं स्वं–खं.। स्वं भाव०–सं.॥

अरिहंताणमिति पाठान्तरं वा, तत्र कर्मारिहन्तृभ्यः । आह च—

"अट्ठविहं पि हु कम्मं अरिभूयं होइ सयलजीवाणं ।
तं [1]कम्ममरिं हंता अरिहंता तेण वुच्चंति ॥ १ ॥" [ आवश्यकनिर्युक्तौ ९२९ ]

अरुहंताणमित्यपि पाठान्तरम् । तत्र अरोहद्भ्योऽनुपजायमानेभ्यः, क्षीणकर्मबीजत्वात् । उक्तञ्च—

" दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः ।
कर्मबीजे तथा दग्धे [2]न रोहति भवाङ्कुरः ॥ १ ॥ " [ तत्त्वार्थसूत्रस्य अन्तिमकारिकासु का० ८ ]

शाब्दिकास्तु अर्हच्छब्दस्यैव प्राकृते रूपत्रयमिच्छन्ति, यद्वयमवोचाम—"उच्चार्हति" [ सि० ८।२।१११ ], [3]चकारादेदितावपि ।

तेभ्योऽर्हद्भ्यो नमोऽस्त्विति नमःशब्दयोगाच्चतुर्थी, "चतुर्थ्याः षष्ठी" [ सि० ८।३।१३१ ] इति प्राकृतसूत्राच्चतुर्थ्याः स्थाने षष्ठी । [4]बहुवचनं चाद्वैतव्यवच्छेदेनाऽर्हद्बहुत्वख्यापनार्थम्, विषयबहुत्वेन नमस्कर्तुः फलातिशयज्ञापनार्थं च ।

एते चार्हन्तो नामाद्यनेकभेदा इति भावार्हत्सम्परिग्रहार्थमाह—भगवद्भ्यः ।

---

१ कम्ममरी हंता–सं. । कम्ममरिहंता–मु. ॥ अष्टविधमपि हु कर्म अरिभूतं भवति सकलजीवानाम् । तत्कर्मारिहन्तारः अर्हन्तस्तेनोच्यन्ते ॥ २ नारोहति–मु. ॥ ३ ०दति तावपि–खं. ॥ ४ तुला–ललितविस्तरा ॥

॥ ६०१ ॥

" भगोऽर्क-ज्ञान-माहात्म्य-यशो-वैराग्य-मुक्तिषु ।
रूप-वीर्य-प्रयत्नेच्छा-श्री-धर्मैश्वर्य-योनिषु ॥ १ ॥" [ अनेकार्थसंग्रहे २।३६ ]

इति वचनादर्क-योनिवर्जमिह द्वादशधा भगशब्दस्यार्थः । स विद्यते येषां ते भगवन्तः, निन्दावर्जे भूमादिष्वर्थेषु मतुः ।

ज्ञानं तावद् गर्भनिवासात् प्रभृति आ दीक्षातो मतिश्रुतावधिलक्षणम्, दीक्षानन्तरं तु आ घातिकर्मचतुष्टयक्षयाद् मनःपर्ययज्ञानसहितम्, घातिक्षये चानन्तमनन्तविषयं निःशेषभावाभावस्वभावावभासकं केवलज्ञानम् १ ।

माहात्म्यं प्रभावातिशयः, तच्च सर्वकल्याणकेषु नारकाणामपि सुखोत्पादकत्वेन, नित्यसन्तमसेष्वपि नरकेषु प्रकाशजनकत्वेन, गर्भनिवासात् प्रभृति कुलस्य धनादिवर्धनेन, अप्रणतसामन्तानां च प्रणत्या, ईतिमारिवैरोपहतिवर्जितराज्यकरणेन, अतिवृष्ट्यनावृष्टिप्रभृत्युपद्रवरहितजनपदत्वेन, चलितासनसकलसुरासुरप्रणतपादपद्मत्वेन चावसेयम् २ ।

यशस्तु राग-द्वेष-परीषहोपसर्गपराक्रमसमुत्थमाकालमतिष्ठं यत् सर्वदा दिवि सुरसुन्दरीभिः पाताले नागकन्याभिर्गीयते सुरासुरैर्नित्यमभिष्टूयते च ३ ।

वैराग्यं मरुन्नरेन्द्रलक्ष्मीमनुभवतामपि यत्र तत्र रतिर्नाम, यदा तु सर्वविषयत्यागपूर्वकं प्रव्रज्यां प्रतिपद्यन्ते तदाऽलमेभिरिति, यदा तु क्षीणकर्माणो भवन्ति तदा सुख-दुःखयोर्भव-मोक्षयोरौदासीन्यमिति त्रिविधमप्यतिशायि भवति। यदवोचाम वीतरागस्तोत्रे—

१ भूम्यादि०-मु. ॥ २ ०पर्ययम्-सं. । ०पर्यायज्ञानसहितम्-मु. ॥ ३ ०भासकेवल०-खं. ॥ ४ ०त्वेनावसेयम्-खं. ॥ ५ ०कर्मणो-मु. ॥

" यदा मरुन्नरेन्द्रश्रीस्त्वया नाथोपभुज्यते। यत्र तत्र रतिर्नाम विरक्तत्वं तदापि ते ॥ १ ॥
नित्यं विरक्तः कामेभ्यो यदा योगं प्रपद्यसे। अलमेभिरिति प्राज्यं तदा वैराग्यमस्ति ते ॥ २ ॥
सुखे दुःखे भवे मोक्षे यदौदासीन्यमीशिषे। तदा वैराग्यमेवेति कुत्र नासि विरागवान् ॥ ३ ॥ "

[ वीतराग० १२।४–६ ] इति ४।

मुक्तिश्च सकलक्लेशप्रहाणलक्षणा सन्निहितैवेति ५।

रूपं तु—

" सव्वसुरा जइ रूवं, अंगुट्ठपमाणयं विकुव्विज्जा।
जिणपायंगुट्ठं पइ, न सोहए तं जहिंगालो ॥ १ ॥ " [ आवश्यकनिर्युक्तौ ५६९ ]

इति [2]निदर्शनसिद्धं सर्वातिशायि ६।

वीर्यं च मेरोर्दण्डरूपतां धरित्र्याश्च छत्ररूपतां कर्तुं सामर्थ्यम्, श्रूयते हि तत्कालजातेनैव श्रीमहावीरेण शक्रशङ्कापनोदाय वामपादाङ्गुष्ठेन मेरुपर्वतः प्रकम्पितः ७।

प्रयत्नः परमवीर्यसमुत्थ एकरात्रिक्यादिमहाप्रतिमाभावहेतुः समुद्घातशैलेश्यवस्थाव्यङ्ग्यः ८।

इच्छा तु जन्मान्तरे सुरजन्मनि तीर्थकरजन्मनि च दुःखपङ्कमग्नस्य जगत उद्दिधीर्षाऽतिशयवती ९।

---

१ सर्वसुरा यदि रूपमङ्गुष्ठप्रमाणकं विकुर्वीरन्। जिनपादाङ्गुष्ठं प्रति न शोभते तद् यथाङ्गारः ॥ २ निदर्शनात् सिद्धं-मु. ॥

॥ ६०३ ॥

श्रीर्घातिकर्मोच्छेदविक्रमावाप्तकेवलालोकसम्पत्तिः, अतिशयसुखसम्पच्चानुपमा १० ।

धर्मः पुनरनाश्रवो महायोगात्मको निर्जराफलोऽतिश्रेयान् ११ ।

ऐश्वर्यं तु भक्तिभरावनम्रत्रिदशपतिविहितसमवसरणप्रातिहार्यादिरूपम् १२ ।

एवम्भूता एव प्रेक्षवतां स्तोतव्या इत्याभ्यामालापकाभ्यां स्तोतव्यसम्पदुक्ता ।

साम्प्रतमस्या हेतुसम्पदुच्यते—आइगराणं तित्थगराणं सयंसंबुद्धाणं । आदिकरणशीला आदिकरणहेतवो वा आदिकराः सकलनीतिनिबन्धनस्य श्रुतधर्मस्येति सामर्थ्याद् गम्यते, तेभ्यः । यद्यपि "सैषा द्वादशाङ्गी न कदाचिन्नासीत्, न कदाचिन्न भवति, न कदाचिन्न भविष्यति, अभूच्च भवति च भविष्यति च" [नन्दीसूत्रे सू० ११८] इति वचनाद् नित्या द्वादशाङ्गी, तथाप्यर्थापेक्षया नित्यत्वं शब्दापेक्षया तु स्वस्वतीर्थेषु श्रुतधर्मादिकरत्वमविरुद्धम् ।

एतेऽपि कैवल्यानन्तरापवर्गवादिभिरतीर्थंकरा एवेष्यन्ते "अकृत्स्नक्षये कैवल्याभावात्" [ ] इति वचनादिति तद्व्यपोहार्थमाह—तीर्थकरेभ्यः । तीर्यते संसारसमुद्रोऽनेनेति तीर्थम्, तच्च प्रवचनाधारश्चतुर्विधः सङ्घः प्रथमगणधरो वा; यदाहुः—

---

१ ०सरणे प्राति०–शां. ॥ २ "इच्चेइयं दुवालसंगं गणिपिडगं ण कयाइ णासी, ण कयाइ ण भवति, ण कयाइ ण भविस्सति, भुविं च भवति य भविस्सति य" इति नन्दीसूत्रे पाठः ।

तित्थं[1] भंते! तित्थं, तित्थयरे तित्थं? गोयमा! अरिहा ताव नियमा तित्थंकरे, तित्थं पुण चाउवण्णो समणसंघे पढमगणहरे वा [ भगवती० २०।८ ]।

तत्करणशीलास्तीर्थकराः। न चाकृत्स्नक्षये कैवल्यं न भवति, घातिकर्मक्षये अघातिकर्मभिः कैवल्यस्याबाधनात्। एवं[2] च ज्ञानकैवल्ये तीर्थकरत्वमुपपद्यते, मुक्तकैवल्ये तु तीर्थकरत्वमस्माभिरपि नेष्यते।

एतेऽपि सदाशिवानुग्रहात् कैश्चिद्बोधवन्त इष्यन्ते, यदाह—“महेशानुग्रहाद् बोधनियमौ” [ ] इति, तन्निराकरणार्थमाह—स्वयंसंबुद्धेभ्यः, स्वयमात्मना तथाभव्यत्वादिसामग्रीपरिपाकान्न तु परोपदेशात् सम्यगविपर्ययेण बुद्धा अवगततत्त्वाः स्वयंसंबुद्धाः; तेभ्यः। यद्यपि भवान्तरेषु तथाविधगुरुसन्निधानायत्तबोधास्तेऽभूवन्, तथापि तीर्थकरजन्मनि परोपदेशनिरपेक्षा एव बुद्धाः। यद्यपि च तीर्थकरजन्मन्यपि लौकान्तिकत्रिदशवचनात् “भयवं[3] तित्थं पवत्तेहि[4]” [ आवश्यकनिर्युक्तौ २१५ ] इत्येवंलक्षणाद् दीक्षां प्रतिपद्यन्ते तथापि वैतालिकवचनानन्तरप्रवृत्तनरेन्द्रयात्रावत् स्वयमेव प्रव्रज्यां प्रतिपद्यन्ते।

इदानीं स्तोतव्यसम्पद[5] एव हेतुविशेषसम्पदुच्यते—पुरिसोत्तमाणं[6] पुरिससीहाणं पुरिसवरपुंडरीयाणं पुरिसवरगंध-

१ तीर्थं भदन्त! तीर्थम् तीर्थकरस्तीर्थम्? गौतम! अर्हंस्तावद् नियमात् तीर्थङ्करः, तीर्थं पुनश्चतुर्वर्णं श्रमणसंघः प्रथमगणधरो वा। “तित्थं भंते! तित्थं तित्थगरे तित्थं? गोयमा! अरहा ताव नियमं तित्थगरे, तित्थं पुण चाउवण्णाइण्णो समणसंघो, तंजहा—समणा समणीओ सावगा साविगाओ” इति भगवतीसूत्रे पाठो दृश्यते॥ २ एवं ज्ञान-मु. शां.॥ ३ भगवंस्तीर्थं प्रवर्तय॥ ४ पवत्तेह-शां. विना॥ ५ ०सम्पद्-मु.॥ ६ पुरिसुत्त०-मु.॥

॥ ६०५ ॥

हत्थीणं। पुरि शरीरे शयनात् पुरुषा विशिष्टकर्मोदयाद्विशिष्टसंस्थानवच्छरीरवासिनः सत्त्वाः, तेषामुत्तमाः सहजतथाभव्यत्वादिभावतः श्रेष्ठाः पुरुषोत्तमाः, तथाहि—आसंसारमेते परार्थव्यसनिन उपसर्जनीकृतस्वार्था उचितक्रियावन्तोऽदीनभावाः सफलारम्भिणोऽदृढानुशयाः कृतज्ञतापतयोऽनुपहतचित्ता देवगुरुबहुमानिनो गम्भीराशया इति। न खल्वसमारचितमपि जात्यरत्न समानमितरेण, न च समारचितोऽपि काचादिर्जात्यरत्नीभवति। एवं च यदाहुः सौगताः—"नास्तीह कश्चिद्भाजनं सत्त्वः" [ ] इति "सर्वे बुद्धा भविष्यन्ति" [ ] इति च, तत् प्रत्युक्तम्।

एते च बाह्यार्थसंवादिसत्यवादिभिः संकृताचार्यशिष्यैर्निरुपमानस्तवार्हा एवेष्यन्ते "हीनाधिकाभ्यामुपमा मृषा" [ ] इति वचनात्, तद्व्यवच्छेदार्थमाह—पुरुषसिंहेभ्यः। पुरुषाः सिंहा इव प्रधानशौर्य्यादिगुणभावेन पुरुषसिंहाः। यथा सिंहाः शौर्य्यादिगुणयोगिनः तथा भगवन्तोऽपि कर्मशत्रून् प्रति शूरतया, तदुच्छेदं प्रति क्रूरतया, क्रोधादीन् प्रत्यसहनतया, रागादीन् प्रति वीर्ययोगेन, तपःकर्म प्रति वीरतया ख्याताः। तथा एषामवज्ञा परीषहेषु, न भयमुपसर्गेभ्यः, न चिन्ताऽपि इन्द्रियवर्गे, न खेदः संयमाध्वनि, न प्रकम्पो ध्याने। न चैवमुपमा मृषा, तद्द्वारेण तदसाधारणगुणाभिधानादिति।

एते च सुचारुशिष्यैः सजातीयोपमायोगिन एवेष्यन्ते, विजातीयेनोपमायां तत्सदृशधर्मापत्त्या पुरुषत्वाद्यभावप्राप्तेः।

---

१ उपचित०–मु.॥ २ ०रम्भिणो दृढा०–मु.। दृश्यतां ललितविस्तरा॥ ३ ०संवादसत्यवादिभिः संस्कृता०–मु.॥ ४ प्रधानाः शौर्या०–मु.॥ ५ ०प्राप्तिः–मु.॥

यदाहुस्ते—“ विरुद्धोपमायोगे तद्धर्म्मापत्त्या तदवस्तुत्वम् ” [ . ] इति। तद्व्यपोहायाह—पुरुषवरपुण्डरीकेभ्यः। पुरुषा वरपुण्डरीकाणीव संसारजलासङ्गादिना[1] धर्मकलापेन पुरुषवरपुण्डरीकाणि, तेभ्यः। यथा हि पुण्डरीकाणि पङ्के जातानि जलेन वर्धितानि तदुभयं विहायोपरि वर्तन्ते, प्रकृतिसुन्दराणि च भवन्ति, निवासो भुवनलक्ष्म्याः, आयतनं चक्षुराद्यानन्दस्य, प्रवरगुणयोगतो विशिष्टतिर्य्यग्नरामरैः सेव्यन्ते, सुखहेतवो भवन्ति, तथा भगवन्तोऽपि कर्मपङ्के जाता दिव्यभोगजलेन वर्धिता उभयं विहाय वर्तन्ते, सुन्दराश्चातिशययोगेन, निवासो गुणसम्पदः, हेतवः परमानन्दस्य, केवलादिगुणभावेन तिर्यन्नरामरैः सेव्यन्ते, निर्वृत्तिसुखहेतवश्च जायन्ते, इति भिन्नजातीयोपमायोगेऽप्यर्थतो विरोधाभावेन यथोदितदोषासम्भवः। यदि तु विजातीयोपमायोगे[2] तद्धर्मापत्तिरापद्यते[3] तर्हि सिंहादिसजातीयोपमायोगे तद्धर्म्माणां पशुत्वादीनामप्यापत्तिः स्यादिति।

एतेऽपि यथोत्तरं गुणक्रमाभिधानवादिभिः सुरगुरुविनेयैर्हीनगुणोपमापूर्वकमधिकगुणोपमार्हा[4] इष्यन्ते, “अभिधानक्रमाभावे अभिधेयमपि तद्वदक्रमवदसत् ” [ ] इति वचनात्। एतन्निरासायाह—पुरुषवरगन्धहस्तिभ्यः। पुरुषा वरगन्धहस्तिन इव वरगजेन्द्रा इव पुरुषवरगन्धहस्तिनः, यथा गन्धहस्तिनां गन्धेनैव तद्देशविहारिणः क्षुद्रगजा भज्यन्ते तद्वदीति-[5]परचक्र-दुर्भिक्ष-मारिप्रभृतयः सर्व एवोपद्रवगजा भगवतामचिन्त्यपुण्यानुभावानां विहारपवनगन्धादेव भज्यन्ते। न चैवमभिधानक्रमाभावेऽभिधेयमक्रमवदसदिति[6] वाच्यम्, सर्वगुणानामेकत्राऽन्योन्यसंवलितत्वेनावस्थानात्, तेषां[7] च यथारुचि स्तोत्राभिधाने न दोषः।

१ संसारिजला०–खं.॥ २ ०मायोगेन तद्धर्मा०–मु.॥ ३ ०रापाद्यते–मु. शां.॥ ४ सुरगुरोर्विनेयै०–मु.॥ ५ तद्वदिति पर०–मु.॥ ६ ०यमपि क्रमव०–मु.। ०यक्रमव०–सं.॥ ७ तेषां यथा०–मु.॥

एवं पुरुषोत्तमत्वादिना प्रकारेण स्तोतव्यसम्पद एव हेतुविशेषसम्पत्[1] तृतीया ३।

इदानीं स्तोतव्यसम्पद एव सामान्येनोपयोगसम्पदमाह—लोगोत्तमाणं[2] लोगनाहाणं लोगहिआणं लोगपईवाणं लोगपज्जो-[3]अगराणं। समुदायेष्वपि प्रवृत्ताः शब्दा अनेकधा अवयवेष्वपि प्रवर्तन्ते इति न्यायाद्यद्यपि लोकशब्देन तत्त्वतः पञ्चास्तिकाया उच्यन्ते,

"धर्मादीनां वृत्तिर्द्रव्याणां भवति यत्र तत् क्षेत्रं।
तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यम्॥" [ ]

इति वचनात्। तथापीह लोकशब्देन भव्यसत्त्वलोक एव परिगृह्यते, सजातीयोत्कर्ष एवोत्तमत्वोपपत्तेः। अन्यथा अभव्यापेक्षया सर्वभव्यानामप्युत्तमत्वान्नैषामतिशय उक्तः स्यात्। ततश्च भव्यसत्त्वलोकस्य सकलकल्याणनिबन्धनैतथाभव्यत्व-[4]भावेनोत्तमा लोकोत्तमाः, तेभ्यः।



तथा[5] लोकनाथेभ्यः। इह लोकशब्देन बीजाधानादिना संविभक्तो रागाद्युपद्रवेभ्यो रक्षणीयो विशिष्टो भव्यलोकः परिगृह्यते, अस्मिन्नेव[6] नाथत्वोपपत्तेः "योग-क्षेमकृन्नाथः" [ ] इति वचनात्। तादिह येषामेव बीजाधानोद्भेद-पोषणैर्योगः, क्षेमं च तत्तदुपद्रवरक्षणेन, ते एव भव्या लोकशब्देन गृह्यन्ते। न चैते योग-क्षेमे सकलभव्यसत्त्वविषये कस्यचित् सम्भवतः, सर्वेषामेव मुक्तिप्रसङ्गात्। तस्मादुक्तस्यैव लोकस्य नाथा इति।

१ हेतुर्विशेष०-सं.। हेतुं विशेष०-खं.॥ २ लोगु०-मु.॥ ३ पज्जोयग०-शां.॥ ४ ०नतया भव्य०-मु.॥ ५ तथा-नास्ति मु.॥ ६ तस्मिन्नेव-खं.॥

तथा लोकहितेभ्यः। इह लोकशब्देन सकल एव सांव्यवहारिकादिभेदभिन्नः प्राणिवर्गो गृह्यते, तस्मै सम्यग्दर्शनप्ररूपणरक्षणयोगेन हिता लोकहिताः।

तथा लोकप्रदीपेभ्यः। अत्र लोकशब्देन विशिष्ट एव देशनांशुभिर्मिथ्यात्वतमोऽपनयनेन यथार्हं प्रकाशितज्ञेयभावः संज्ञिलोकः परिगृह्यते, तं प्रत्येव भगवतां प्रदीपत्वोपपत्तेः। न ह्यन्धं प्रति प्रदीपः प्रदीपो नाम। तदेवंविधं लोकं प्रति प्रदीपा लोकप्रदीपाः।

तथा लोकप्रद्योतकरेभ्यः। इह लोकशब्देन विशिष्टचतुर्दशपूर्वविल्लोकः परिगृह्यते, तत्रैव तत्त्वतः प्रद्योतकरत्वोपपत्तेः, प्रद्योत्यं[1] च सप्तप्रकारं जीवादिवस्तुतत्त्वम्, तत्प्रद्योतकरणञ्च विशिष्टानामेव पूर्वविदां भवति, तेऽपि षट्स्थानपतिता एव श्रूयन्ते, न च तेषां सर्वेषामपि प्रद्योतः सम्भवति, प्रद्योतो हि विशिष्टा[2] तत्त्वसंवेदनयोग्यता, सा च विशिष्टानामेव भवति। तेन विशिष्टचतुर्दशपूर्वविल्लोकापेक्षया प्रद्योतकराः।

एवं लोकोत्तमत्वादिभिः पञ्चभिः प्रकारैः परार्थकरणात्[3] स्तोतव्यसम्पदः सामान्येनोपयोगसम्पच्चतुर्थी ४।

इदानीमुपयोगसम्पद एव हेतुसम्पदुच्यते—अभयदयाणं चक्खुदयाणं मग्गदयाणं सरणदयाणं बोहिदयाणं। इहं[4] भयं सप्तधा इह-परलोका-ऽऽदाना-ऽकस्मादा-ऽऽजीव-मरण-श्लाघाभेदेन। एतत्प्रतिपक्षतोऽभयं विशिष्टमात्मनः स्वास्थ्यं निःश्रेयस[5]-धर्मभूमिकानिबन्धनभूतं धृतिरित्यन्येषाम्। तदित्थंभूतमभयं गुणप्रकर्षयोगादचिन्त्यशक्तियुक्तत्वात् सर्वथा परार्थकारित्वाद् भगवन्त एव ददतीत्यभयदाः, तेभ्यः।

१ प्रद्योतं–मु.॥ २ विशिष्टतत्त्व०–मु.॥ ३ ०करणाः स्तोत०–मु.॥ ४ इह अभयं–मु.॥ ५ निःश्रेयसे धर्म०–मु.॥

तथा चक्षुर्देभ्यः। इह चक्षुर्विशिष्टमात्मधर्मरूपं [1]तथावबोधनिबन्धनं गृह्यते, तच्च श्रद्धेत्यन्येषाम्, तद्विहीनस्याचक्षुष्मत इव वस्तुतत्त्वदर्शनायोगाद्। न च मार्गानुसारिणी श्रद्धा सुखेनावाप्यते। सत्यां चास्यां कल्याण[2]चक्षुषीव भवति वस्तुतत्त्व-दर्शनम्। तदियं धर्मकल्पद्रुमस्यावन्ध्यबीजभूता भगवद्भ्य एव भवतीति चक्षुर्ददतीति चक्षुर्दाः।

तथा मार्गदेभ्यः। इह मार्गो भुजङ्गमनलिकायामतुल्यो विशिष्टगुणस्थानावाप्तिप्रवणः स्वरसवाही क्षयोपशम[3]विशेषो यममुमन्ये सुखेत्याचक्षते। अस्मिन्नसति न यथोचितगुणस्थानावाप्तिर्मार्गविषमतया चेतःस्खलनेन प्रतिबन्धोपपत्तेः। मार्गश्च भगवद्भ्य एवेति मार्गं ददतीति मार्गदाः।

तथा शरणदेभ्यः। इह शरणं भयार्तत्राणम्, तच्च संसारकान्तारगतानामतिप्रबलरागादिपीडितानां समाश्वासनस्थानकल्पं तत्त्वचिन्तारूपमध्यवसानं विविदिषेत्यन्येषाम्। अस्मिंश्च सति तत्त्वगोचराः शुश्रूषा-श्रवण-ग्रहण-[4]धारणा-विज्ञानो-हापोह-तत्त्वाभि-निवेशाः प्रज्ञागुणा भवन्ति, तत्त्वचिन्तामन्तरेण तेषामभावात्। सम्भवन्ति तु[5] तामन्तरेणापि तदाभासाः, न पुनः स्वार्थसाधकत्वेन भावसाराः। तत्त्वचिन्ता[6]रूपं च शरणं भगवद्भ्य एव भवतीति शरणं ददतीति शरणदाः।

तथा बोधिदेभ्यः। इह बोधिर्जिनप्रणीतधर्म[7]प्राप्तिः, इयं पुनर्यथाप्रवृत्त-अपूर्व-अनिवृत्तिकरणत्रयव्यापाराभिव्यङ्ग्यमभिन्न-पूर्वग्रन्थिभेदतः प्रशम-संवेग-निर्वेदा-ऽनुकम्पा-ऽऽस्तिक्याभिव्यक्तिलक्षणं तत्त्वार्थश्रद्धानं सम्यग्दर्शनमुच्यते, विज्ञप्तिरित्य-

१ तत्त्वावबो०-मु., ललितविस्तरा॥ २ ०चक्षुषो भवति-मु.॥ ३ विशेषोऽयममु०-मु.॥ ४ ०धारण०-मु.॥ ५ नु-खं.॥ ६ ०रूपत्वं च-खं.॥ रूपं शरणं-मु.॥ ७ धर्मावाप्तिः-मु.॥

न्येषाम्। पञ्चकमप्येतदपुनर्बन्धकस्य, पुनर्बन्धके यथोचितस्यास्याभावात्। एते च यथोत्तरं पूर्वपूर्वफलभूताः, तथाहि–अभयफलं चक्षुः, चक्षुःफलं मार्गः, मार्गफलं शरणम्, शरणफलं बोधिः, सा च भगवद्भ्य एव भवतीति बोधिं ददतीति बोधिदाः।

एवमभयदान-चक्षुर्दान-मार्गदान-शरणदान-बोधिदानेभ्यो यथोदितोपयोगसिद्धेरुपयोगसम्पद एव हेतुसम्पदुक्ता।

साम्प्रतं स्तोतव्यसम्पद एव विशेषेणोपयोगसम्पदुच्यते[1]–धम्मदयाणं धम्मदेसयाणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरंतचक्कवट्टीणं। धर्मदेभ्यः, इह धर्मश्चारित्रधर्मो गृह्यते, स च यति-श्रावकसम्बन्धिभेदेन द्वेधा। यतिधर्मः सर्वसावद्ययोगविरतिलक्षणः, श्रावकधर्मस्तु देशविरतिरूपः। स चायमुभयरूपोऽपि भगवद्भ्य एव, हेत्वन्तराणां सद्भावेऽपि भगवतामेव प्रधानहेतुत्वादिति धर्मं ददतीति धर्मदाः।

धर्मदत्वं च धर्मदेशनाद्वारेणैव भवति, नान्यथेत्याह–धर्मदेशकेभ्यः, धर्मं प्रस्तुतं यथाभव्यमवन्ध्यतया देशयन्ति[2] धर्मदेशकाः।

तथा धर्मनायकेभ्यः। धर्मोऽधिकृत एव, तस्य नायकाः स्वामिनः, तद्वशीकरणभावात् तदुत्कर्षावाप्तेस्तत्प्रकृष्टफलभोगात् तद्विघातानुपपत्तेश्च[3] धर्मनायकाः।

तथा धर्मसारथिभ्यः। प्रस्तुतस्य धर्मस्य स्वपरापेक्षया सम्यक्प्रवर्तन-पालन-दमनयोगतः सारथयो धर्मसारथयः।

तथा धर्मवरचतुरन्तचक्रवर्तिभ्यः। धर्मः प्रस्तुतः, स एव त्रिकोटिपरिशुद्धत्वेन[4] सुगतादिप्रणीतधर्मचक्रापेक्षया उभय-

---

१ विशेषोपयोग०–मु.॥ २ देशयन्तीति–मु.॥ ३ तद्व्याघाता०–मु.॥ ४ शुद्धितया–मु.॥

॥ ६११ ॥

लोकहितत्वेन चक्रवर्त्यादिचक्रापेक्षया च वरं प्रधानं चतसृणां गतीनां नारक-तिर्यग्-नरा-ऽमरलक्षणानामन्तो यस्मात् तच्चतुरन्तं चक्रमिव चक्र रौद्रमिथ्यात्वादिभावशत्रुलवनात्, तेन वर्तन्ते इत्येवंशीला धर्मवरचतुरन्तचक्रवर्तिनः। चाउरन्तेति संमृद्ध्यादित्वादात्वम् [1]।

एवं धर्मदत्वादिभिः पञ्चभिः स्तोतव्यसम्पद [2] एव विशेषोपयोगसम्पदुक्ता । ६ । इदानीं

"सर्वं [3] पश्यतु वा मा वा तत्त्वमिष्टं तु पश्यतु।
कीटसंख्यापरिज्ञानं तस्य नः कोपयुज्यते ? ॥ १ ॥" [प्रमाणवा० १।३३]

इति सर्वदर्शनप्रतिक्षेपेणेष्टतत्त्वदर्शनवादिनः सौगतान् प्रतिक्षिपति—अप्पडिहयवरनाणदंसणधराणं विअट्टछउमाणं। अप्रतिहते सर्वत्राप्रतिस्खलिते वरे क्षायिकत्वात् प्रधाने ज्ञानदर्शने विशेषसामान्यावबोधरूपे [4] धारयन्तीति अप्रतिहतवरज्ञानदर्शनधराः, तेभ्यः। अप्रतिहतवरज्ञानदर्शनधरत्वं च निरावरणत्वेन [5] सर्वज्ञानदर्शनस्वभावतया च। ज्ञानग्रहणं चादौ 'सर्वा लब्धयः साकारोपयोगोपयुक्तस्य [6] भवन्ति' इति ज्ञापनार्थमिति।

१ "अतः समृद्ध्यादौ वा" [सि० ८।१।४४] इति सूत्रेण आत्वम् इत्यर्थः ॥ २ ०सम्पदेव विशे०-मु. ॥ ३ "तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यताम्। कीटसंख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ॥ ३३॥ हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदकः। यः प्रमाणमसाविष्टो न तु सर्वस्य वेदकः ॥ ३४॥ दूरं पश्यतु वा मा वा तत्त्वमिष्टं तु पश्यतु। प्रमाणं दूरदर्शी चेदेत गृध्रानुपास्महे ॥ ३५॥" इति बौद्धाचार्यधर्मकीर्तिविरचिते प्रमाणवार्तिके प्रमाणसिद्धिपरिच्छेदे पाठः ॥ ४ सामान्यविशेषावबोध०-शां. ॥ ५ ०णत्वे सर्वे०-सं. ॥ ६ ०युक्तस्येति ज्ञाप०-मु., ललितविस्तरा ॥

एते च कैश्चित् तत्त्वतः खल्वव्यावृत्तच्छद्मान एवेष्यन्ते । यदाह—

" ज्ञानिनो धर्मतीर्थस्य कर्तारः परमं पदम् ।
गत्वाऽऽगच्छन्ति भूयोऽपि भवं तीर्थनिकारतः ॥ १ ॥" [ .]

तथा—

" दग्धेन्धनः पुनरुपैति भवं प्रमथ्य, निर्वाणमप्यनवधारितभीरुनिष्ठम् ।
मुक्तः स्वयं कृतभवश्च परार्थशूरस्त्वच्छासनप्रतिहतेष्विह मोहराज्यम् ॥ १ ॥" [ सिद्ध० द्वा० २।१८ ]

इति । तन्निवृत्त्यर्थमाह—व्यावृत्तच्छद्मभ्यः । छादयतीति छद्म ज्ञानावरणादिघातिकर्म तद्बन्धयोग्यतालक्षणो भवाधिकारश्च, व्यावृत्तं निवृत्तं छद्म येभ्यस्ते तथाविधाः । नाऽक्षीणे संसारे अपवर्गः क्षीणे च जन्मपरिग्रह इत्यसत्, हेत्वभावात् । न च तीर्थनिकारजन्मा पराभवो हेतुः, तेषां मोहाभावाद्, मोहे वा अपवर्ग इति प्रलापमात्रम् । एवमप्रतिहतवरज्ञानदर्शनधरत्वेन व्यावृत्तच्छद्मतया च स्तोतव्यसम्पद एव सकारणा स्वरूपसम्पत् ।

एते च कल्पिताविद्यावादिभिः परमार्थेनाजिनादय एवेष्यन्ते " भ्रान्तिमात्रमसदविद्या " [ ] इति वचनात् । एतद्व्यपोहाय आह—जिणाण जावयाणं । रागादिजेतृत्वाज्जिनाः । न च रागादीनामसत्त्वम्, प्रतिप्राण्यनुभवसिद्धत्वात् । न चानुभवोऽपि भ्रान्तः, सुखदुःखाद्यनुभवेष्वपि भ्रान्तिप्रसङ्गात् । एवं च जेयसम्भवाज्जिनत्वमविरुद्धम् । एवं रागादीनेव सदुपदेशादिना जापयन्तीति जापकाः, तेभ्यः ।

१ ०जन्मपरा०-मु. ॥ २ कल्पिताविद्यावादिभिः परमार्थतो जिनादय एवेष्यन्ते भ्रान्तिमात्रमसद्विद्येति-मु. ॥

एतेऽपि कालकारणवादिभिरनन्तशिष्यैर्भावतोऽतीर्णादय एवेष्यन्ते " काल एव कृत्स्नं जगदावर्तयति " [ ] इति वचनात्। एतन्निरासायाह—तिण्णाणं तारयाणं। सम्यग्ज्ञानदर्शनचारित्रपोतेन भवार्णवं तीर्णवन्तः तीर्णाः। न चैषां तीर्णानां पारगतानामावर्तः सम्भवति, तद्भावे मुक्त्यसिद्धेः। एवं च न मुक्तः पुनर्भवे भवतीति तीर्णत्वसिद्धिः। एवं तारयन्ति अन्यानपीति तारकाः, तेभ्यः।

चैत्यवन्दन-सूत्रव्याख्या

एतेऽपि परोक्षज्ञानवादिभिर्मीमांसकभेदैरबुद्धादय एवेष्यन्ते " अप्रत्यक्षा हि नो बुद्धिः, प्रत्यक्षोऽर्थः " [ शाबरभा० ] इति वचनात्। एतद्व्यवच्छेदार्थमाह–बुद्धाणं बोहयाणं। अज्ञाननिद्राप्रसुप्ते जगत्यपरोपदेशेन जीवाजीवादिरूपं तत्त्वं स्वसंविदितेन ज्ञानेन बुद्धवन्तो बुद्धाः। न चास्वसंविदितेन ज्ञानेनार्थज्ञानं सम्भवति। न ह्यदृष्टप्रदीपो बाह्यमर्थं प्रत्यक्षीकरोति। न चेन्द्रियवदस्वसंविदितस्यापि ज्ञानस्यार्थप्रत्यक्षीकरणम्, इन्द्रियस्य भावेन्द्रियत्वात् तस्य च स्वसंविदितरूपत्वात्। यदाह—

" अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति। " [ प्रमाणवि० ]

एवं च सिद्धं बुद्धत्वम्। एवमपरानपि बोधयन्तीति बोधकाः, तेभ्यः।

एतेऽपि जगत्कर्तृलीनमुक्तवादिभिः सन्तपनविनेयैस्तत्त्वतोऽमुक्तादय एवेष्यते, " ब्रह्मवद् ब्रह्मसङ्गतानां स्थितिः " [ ] इति वचनात्। एतन्निराचिकीर्षयाऽऽह–मुत्ताणं मोअगाणं। चतुर्गतिविपाकचित्रकर्मबन्धमुक्तत्वात् मुक्ताः कृत-

१ " सहोपलम्भनियमादभेदो नीलतद्धियोः। अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति॥ " इति बौद्धाचार्यधर्मकीर्तिविरचिते प्रमाणविनिश्चये प्रथमपरिच्छेदे॥ २ मुक्काणं–शां. सं.॥

कृत्या निष्ठितार्था इत्यर्थः, न च जगत्कर्तरि लये निष्ठितार्थत्वं सम्भवति, जगत्करणेन कृतकृत्यत्वायोगात्, हीनादिकरणे च रागद्वेषानुषङ्गः। न चान्यत्राऽन्यस्य लयः सम्भवति, एकतराभावप्रसङ्गात्। एवं च जगत्कर्तरि लयाभावाद् मुक्तत्वसिद्धिः। एवं मोचयन्त्यन्यानपीति मोचकाः, तेभ्यः।

एवं च जिनत्व-जापकत्व-तीर्णत्व-तारकत्व-बुद्धत्व-बोधकत्व-मुक्तत्व-मोचकत्वैः स्व-परहितसिद्धेरात्मतुल्यपर-फलकर्तृत्वसम्पदष्टमी ॥ ८ ॥[1]

एतेऽपि बुद्धियोगज्ञानवादिभिः कापिलैरसर्वज्ञा असर्वदर्शिनश्चेष्यन्ते[2] " बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते " [ ] इति वचनात्। एतन्निराकरणायाह–सव्वण्णूणं सव्वदरिसीण। सर्वं जानन्तीति सर्वज्ञाः, सर्वं पश्यन्तीत्येवंशीलाः सर्वदर्शिनः, तत्स्वभावत्वे निरावरणत्वात्। उक्तं च—

" स्थितः शीतांशुवज्जीवः, प्रकृत्या भावशुद्धया।
चन्द्रिकावच्च विज्ञानं, तदावरणमभ्रवत् ॥ १ ॥" [ ]

न करणाभावे कर्ता तत्फलसाधक इत्यप्यनैकान्तिकम्, परिनिष्ठितप्लवकस्य[3] तरकाण्डाभावेऽपि प्लवनदर्शनात्। इति बुद्धिलक्षणं करणमन्तरेणापि आत्मनः सर्वज्ञत्वसर्वदर्शित्वसिद्धिः।

अन्यस्त्वाह—ज्ञानस्य विशेषविषयत्वाद् दर्शनस्य च सामान्यविषयत्वात् तयोः सर्वार्थविषयत्वमयुक्तं तदुभयस्य सर्वार्थविषयत्वादिति। उच्यते–न हि सामान्यविशेषयोर्भेद एव, किन्तु ते एव पदार्थाः समविषमतया संप्रज्ञायमानाः सामान्य-

१ आत्मतुल्यफलकर्तृत्वं सम्प०–मु.॥ २ ०दर्शिन एवेष्यन्ते–मु.॥ ३ परिनिष्ठितप्लवकस्य तरण्डकाभावे–मु.॥

विशेषशब्दाभिधेयतां प्रतिपद्यन्ते, ततश्च ते एव ज्ञायन्ते ते एव च दृश्यन्ते इति युक्तं ज्ञानदर्शनयोः सर्वार्थविषयत्वमिति।

ननु ज्ञानेन विषमताधर्मविशिष्टा एव गम्यन्ते न समताधर्मविशिष्टा अपि, दर्शनेन च समताधर्मविशिष्टा एव गम्यन्ते न विषमताधर्मविशिष्टा अपि, ततश्च ज्ञानदर्शनाभ्यां समता-विषमतालक्षणधर्मद्वयाग्रहणादयुक्तमेव तयोः सर्वार्थविषयत्वमिति। न, धर्मधर्मिणोः सर्वथा भेदानभ्युपगमात्। ततश्चाभ्यन्तरीकृतसमताख्यधर्माण एव विषमताधर्मविशिष्टा ज्ञानेन गम्यन्ते, अभ्यन्तरीकृतविषमताख्यधर्माण[1] एव समताधर्मविशिष्टा दर्शनेन गम्यन्ते इति ज्ञानदर्शनयोर्नासर्वार्थविषयत्वमिति सर्वज्ञाः सर्वदर्शिनश्च, तेभ्यः।

एते च सर्वगतात्मवादिभिर्मुक्तत्वे सति न नियतस्थानस्था एवेष्यन्ते। यदाहुस्ते—

“ मुक्ताः सर्वत्र तिष्ठन्ति व्योमवत्तापवर्जिताः। ” [ ] इति।

तन्निराकरणार्थमाह—सिवमयलमरुयमणंतमक्खयमव्वाबाहमपुणरावत्ति[3] सिद्धिगइनामधेयं ठाणं संपत्ताणं। शिवं सर्वोपद्रवरहितत्वात्। अचलं स्वाभाविक-प्रायोगिकचलनक्रियारहितत्वात्। अरुजं व्याधिवेदनारहितम्, तन्निबन्धनयोः शरीरमनसोरभावात्। अनन्तमनन्तज्ञानविषयत्वयुक्तत्वात्। अक्षयं विनाशकारणाभावात्। अव्याबाधमकर्मकत्वात्[5]। अपुनरावृत्ति[4], न पुनरावृत्तिः[6] संसारेऽवतारो यस्मात्। सिद्धिगतिनामधेयम्, सिद्ध्यन्ति निष्ठितार्था भवन्त्यस्यां[7] जन्तव इति सिद्धिर्लोकान्त-

१ एव दृश्यन्ते–मु.॥ २ ०ताख्यधर्माण–खं.॥ ३ ०मरुअम०–मु.॥ ४ ०राचित्ति०–मु.॥ ५ ०मकर्मत्वात्–मु.॥ ६ ०वृत्तिः–शां. सं.॥ ७ भवन्त्यस्या–खं.॥

क्षेत्रलक्षणा, सैव गम्यमानत्वाद् गतिः, सिद्धिगतिरेव नामधेयं यस्य तत्तथा। स्थानम्, तिष्ठन्त्यस्मिन्निति स्थानं व्यवहारतः सिद्धिक्षेत्रम्। यदाहुः—

"इहं बुंदिं चइत्ताणं तत्थ गंतूण सिज्झइ[2]। [आवश्यकनिर्युक्तौ ९५९]

इति। निश्चयतस्तु स्वस्वरूपमेव, "सर्वे भावा आत्मभावे तिष्ठन्ति" [ ] इति वचनात्। विशेषणानि च निरुपचरितत्वेन यद्यपि मुक्तात्मन्येव भूयसा सम्भवन्ति तथापि स्थानस्थानिनोरभेदोपचारादेवं व्यपदेशः। तदेवंविधं स्थानं सम्प्राप्ताः सम्यगशेषकर्मविच्युत्या स्वरूपगमनेन परिणामान्तरापत्त्या प्राप्ताः, तेभ्यः। न हि विभूनामेवंविधप्राप्तिसम्भवः, सर्वगतत्वे सति सदैकस्वभावत्वात्[3], नित्यानां चैकरूपतया अवस्थानं तद्भावाव्ययस्य नित्यत्वात्। अतः क्षेत्रासर्वगतपरिणा[4]मिनामेवैवं प्राप्तिसम्भव[5] इति, अत एव कायप्रमाणं आत्मेति[6] सुस्थितं वचनम्। तेभ्यो नम इति क्रियायोगः। एवभूता एव प्रेक्षावतां नमस्काराहाः, आद्यन्तसङ्गतश्च नमस्कारो मध्यव्यापीति[7]।

जितभया अप्येते एव नान्ये इति प्रतिपादयितुमुपसंहरन्नाह—नमो जिणाणं जिअभयाणं, नमो जिनेभ्यो जितभयेभ्य इति।

तदेवं 'सव्वण्णूणं सव्वदरिसीणं[8]' इत्यत आरभ्य 'नमो जिणाणं जियभयाणं' इत्येवमन्तैस्त्रिभिरालापकैः प्रधानगुणापरिक्षयप्रधानफलावाप्तिरूपा सम्पन्नवमी। ९।

१ इह-मु.॥ इह शरीरं त्यक्त्वा तत्र गत्वा सिध्यति॥ २ सिज्झई-खं॥ ३ सदैकस्वभावात्-खं॥ तदेकस्वभावात्-सं.॥ ४ क्षेत्रतोऽसर्वगत-मु.॥ दृश्यतां ललितविस्तरा॥ ५ प्राप्तिः सम्भवति-मु.॥ ६ ०णमात्मेति-मु.॥ ७ "मध्यव्यापीति भावना"-ललितविस्तरा॥ ८ सव्वदंसीणं-खं. सं.॥

अत्र स्तुतिप्रस्तावान्न पौनरुक्त्यशङ्का करणीया, यदाह—

"सज्झाय-ज्झाण-तव-ओसहेसु उवएस-थुइ-[1]पयाणेसु ।
संतगुणकित्तणेसु य न होंति पुणरुत्तदोसा उ ॥" [आवश्यकनिर्युक्तौ १५१८]

एताभिर्नवभिः सम्पद्भिः प्रणिपातदण्डक उच्यते, तत्पाठानन्तरं प्रणिपातकरणात्, जिनजन्मादिषु [2]स्वर्विमानेषु तीर्थ-प्रवृत्तेः पूर्वमपि शक्रोऽनेन भगवतः स्तौतीति शक्रस्तवोऽप्युच्यते। अयञ्च प्रायेण भावार्हद्विषयो भावार्हदध्यारोपाच्च स्थापनार्हतामपि पुरः पठ्यमानो न दोषाय।

प्रणिपातदण्डकानन्तरं चाऽतीतानागतवर्तमानजिनवन्दनार्थं केचिदेतां गाथां पठन्ति—

जे अ [3]अईआ सिद्धा, जे अ [4]भविस्संतऽणागए काले ।
संपइ अ वट्टमाणा, सव्वे तिविहेण वंदामि ॥ १ ॥

सुगमा चेयम्।

ततश्चोत्थाय स्थापनार्हद्वन्दनार्थं जिनमुद्रया '[5]अरिहंत[6]चेइयाणं' इत्यादिसूत्रं [7]पठति। अर्हतां पूर्वोक्तस्वरूपाणां चैत्यानि प्रतिमालक्षणानि अर्हच्चैत्यानि। चित्तमन्तःकरणम्, तस्य भावः कर्म वा [8]वर्णदृढादित्वात् ष्यणि चैत्यम्, बहुविषयत्वे चैत्यानि। तत्रार्हतां [9]प्रतिमाः प्रशस्तसमाधिचित्तोत्पादकत्वादर्हच्चैत्यानि भण्यन्ते, तेषां किम्? वन्दनादिप्रत्ययं कायोत्सर्गं

१ ०पमाणेसु–खं ॥ २ स्वर्विमा०–मु. ॥ ३ अइआ–खं. । अइया–सं. ॥ ४ भविस्संति–णागए–मु. ॥ ५ अरहंत०–शां. ॥ ६ चेइआण०–खं. ॥ ७ पठंति–खं. ॥ ८ "वर्णदृढादिभ्यष्ट्यण् च वा" [सि० ७।१।५९] ॥ ९ प्रतिमा हि प्रश०–मु. ॥

करोमीति सम्बन्धः-कायस्य शरीरस्य उत्सर्गः कृताकारस्य स्थान-मौन-ध्यानक्रियाव्यतिरेकेण क्रियान्तराध्यासमधिकृत्य परित्यागः, तं करोमि। 'वंदणवत्तियाए' वन्दनप्रत्ययम्, वन्दनमभिवादनं प्रशस्तकायवाङ्मनःप्रवृत्तिरित्यर्थः, तत्प्रत्ययं तन्निमित्तं 'कथं नाम कायोत्सर्गादेव मम वन्दनं स्यात्' इति। वत्तियाए इत्यार्षत्वात्सिद्धम्, एवं सर्वत्र द्रष्टव्यम्। तथा 'पूअणवत्तियाए', पूजनप्रत्ययं पूजननिमित्तम्, पूजनं गन्धमाल्यादिभिरभ्यर्चनम्। तथा 'सक्कारवत्तिआए', सत्कारप्रत्ययं सत्कारनिमित्तम्, सत्कारः प्रवरवस्त्राभरणादिभिरभ्यर्चनम्। ननु यतेः पूजनसत्कारावनुचितौ द्रव्यस्तवत्वात्, श्रावकस्य तु साक्षात् पूजासत्कारकर्तुः कायोत्सर्गद्वारेण तत्प्रार्थना निष्फला, उच्यते—

साधोर्द्रव्यस्तवप्रतिषेधः करणमधिकृत्य, न पुनः कारणानुमती, यत उपदेशदानतः कारणसद्भावो भगवतां च पूजासत्कारदर्शनात् प्रमोदेनानुमतिरपि। यदाह—

"सुव्वइ अ वइररिसिणा कारवणं पि अ अणुट्ठियमिमस्स।
वायगगंथेसु तहा एअगया देसणा चेअ ॥ १ ॥" [ पञ्चवस्तुके १२२७ ]

---

१ वत्तिआए-मु.। एवमग्रेऽपि सर्वत्र ॥ २ पूयण० शां. ॥ ३ ननु च यतेः-मु. शां. ॥ ४ "श्रूयते च वज्रर्षिणा पूर्वधरेण कारणमपि, तत्त्वतः करणमपि, अनुष्ठितमेतस्य द्रव्यस्तवस्य 'माहेसरीउ [सेसा] पुरिअ' [ आवश्यकनिर्युक्तौ ७७२ ] इत्यादिवचनात्, वाचकग्रन्थेषु तथा धर्मरत्नमालादिषु एतद्गता जिनभवनादिद्रव्यस्तवगता देशना चैव श्रूयते 'जिनभवनम्' [ ] इत्यादिवचनादिति गाथार्थः ॥" इति अभयदेवसूरिविरचितायां पञ्चवस्तुकटीकायाम् ॥ ५ तहा आगया-मु. ॥ ६ चेव-मु., पञ्चवस्तु ॥

श्रावकस्तु सम्पादयन्नपि एतौ भावातिशयादधिकसम्पादनार्थं पूजासत्कारौ प्रार्थयमानो न निष्फलारम्भः. तथा 'सम्माणवत्तियाए', सम्मान[1]प्रत्ययं सम्माननिमित्तम्, सम्मानः स्तुत्यादिभिर्गुणोन्नतिकरणम्, मानसः[2] प्रीतिविशेष इत्यन्ये ।

अथ वन्दनादयः किंनिमित्तमित्याह—'बोहिलाभवत्तियाए,' बोधिलाभोऽर्हत्प्रणीतधर्म[3]प्राप्तिः, तत्प्रत्ययं तन्निमितम् । बोधिलाभोऽपि किंनिमित्तमित्याह—'निरुवसग्गवत्तियाए,' जन्माद्युपसर्गाभावेन निरुपसर्गो मोक्षः, तत्प्रत्ययं तन्निमित्तम् । ननु साधुश्रावकयोर्बोधिलाभोऽस्त्येव, तत्किं सततस्य प्रार्थनया ? बोधिलाभमूलो मोक्षोऽप्यनभिलषणीय एव । उच्यते—क्लिष्टकर्मोदयवशेन बोधिलाभस्य प्रतिपातसम्भवाद् जन्मान्तरे च तस्याप्राप्यमानत्वान्निरुपसर्गोऽपि तद्द्वारेण प्रार्थ्यत एवेति युक्तोऽनयोरुपन्यासः ।

'अरिहंत चेइयाणं'-सूत्रव्याख्या

अयं च कायोत्सर्गः क्रियमाणोऽपि श्रद्धादिविकलस्य नाभिलषितार्थप्रसाधनायालमित्याह—'सद्धाए मेहाए धिईए धारणाए अणुप्पेहाए वड्ढमाणीए ठामि काउसग्गं' । श्रद्धा मिथ्यात्वमोहनीयकर्मक्षयोपशमादिजन्योदकप्रसादकमणिवच्चेतसः प्रसादजननी, तया श्रद्धया, न तु बलाभियोगादिना, एवं मेधया, न जडत्वेन, मेधा च सच्छास्त्रग्रहणपटुः पापश्रुतावज्ञाकारी ज्ञानावरणीयक्षयोपशमजश्चित्तधर्मः, अथवा मेधया मर्यादावर्तितया, नासमञ्जसत्वेन । एवं धृत्या मनःसमाधिलक्षणया, न रागद्वेषाद्याकुलतया । [ एँव[4] ] धारणया अर्हद्गुणाविस्मरणरूपया, न तु तच्छून्यतया । एवमनुप्रेक्षयाऽर्हद्गुणानामेव मुहुर्मुहुरनु-

१ सन्मान०-मु.। एवमग्रेऽपि सर्वत्र ॥ २ मानसप्रीति०-मु. ॥ ३ ०धर्मावाप्तिः-मु. ॥ ४ एवं-नास्ति मु. विना ॥

स्मरणेन न तद्वैकल्येन । वर्धमानयेति[1] श्रद्धादिभिः प्रत्येकमभिसम्बध्यते । श्रद्धादीनां क्रमोपन्यासो लाभापेक्षया, श्रद्धायां हि सत्यां मेधा, तद्भावे धृतिः, ततो धारणा, तदन्वनुप्रेक्षा, वृद्धिरप्यासा[2]मेवमेव । 'तिष्ठामि' करोमि कायोत्सर्गम् । ननु प्राक् 'करोमि कायोत्सर्गम्' इत्युक्तम्, साम्प्रतं 'तिष्ठामि' इति किमर्थमुच्यते? सत्यम्, सत्सामीप्ये[3] सद्वत् प्रत्ययो भवतीति करोमि करिष्यामि इति क्रियाभिमुख्यं पूर्वमुक्तम्, इदानीं त्वासन्नतरत्वात् क्रियाकाल-निष्ठाकालयोः कथञ्चिदभेदात् तिष्ठाम्येवाहमिति।

किं सर्वथा तिष्ठामि कायोत्सर्गम्? नेत्याह—अन्नत्थ ऊससिएणमित्यादि व्याख्यात[4]पूर्वम्। कायोत्सर्गश्चाष्टोच्छ्वास[5]मानः, न त्वत्र ध्येयनियमोऽस्ति। कायोत्सर्गान्ते च यद्येक एव ततो 'नमो अरहंताणं'[6] इति नमस्कारेण पारयित्वा यत्र चैत्यवन्दनां कुर्वन्नस्ति तत्र यस्य भगवतः सन्निहितं स्थापनारूपं तस्य स्तुतिं पठति, अथ बहवस्तत एक एव स्तुतिं पठति अन्ये तु कायोत्सर्गस्थिता एव शृण्वन्ति यावत् स्तुतिसमाप्तिः, ततः सर्वेऽपि नमस्कारेण पारयन्तीति।

तदनन्तरं [7]तस्यामेवावसर्पिण्यां ये भारते वर्षे तीर्थकृतो अभूवन् तेषामेवैकक्षेत्र[8]निवासादिना[9] आसन्नोपकारित्वेन कीर्तनाय चतुर्विंशतिस्तवं पठति, पठन्ति वा[10]—

१ वर्धमानतयेति-मु. ॥ २ ०सामेव। मु. ॥ ३ "सत्सामीप्ये सद्वद्वा"-सि. ५।१।१ ॥ ४ व्याख्यातं-मु. ५ ०मानः-शां. ॥ तुलना-ललितविस्तरा ॥ ६ अरिहंता०-मु. ॥ ७ अत्र 'त्वस्यामेव' इति पाठः समीचीनो भाति। तुलना-"पुनरत्रान्तरेऽस्मिन्नेवावसर्पिणीकाले ये भारते ...... "-ललितविस्तरा ॥ ८ ०क्षेत्रे-शां. ॥ ९ ०निवासिनामास०-मु. ॥ १० वा तथा लोगस्स-मु. ॥ अयं 'तथा' इति पाठः सं. मध्ये नास्ति। शां. खं. मध्ये किमस्ति तद् न ज्ञायते। "पठति पठन्ति वा। स चायम्-लोगस्स"-ललितविस्तरा ॥ इत आरभ्य तुलना-आवश्यकसूत्रस्य हारिभद्री वृत्तिः पृ० ४९१-५१० ॥

॥ ६२१ ॥

लोगस्स उज्जोयगरे धम्मतित्थयरे जिणे। अरिहंते[1] कित्तइस्सं[2] चउवीसं[3] पि केवली ॥ १ ॥

अरिहंत[4] इति विशेष्यपदम्, अर्हत उक्तनिर्वचनान् कीर्तयिष्यामि[5] नामोच्चारणपूर्वकं स्तोष्ये। ते च राज्याद्यवस्थासु द्रव्यार्हन्तो भवन्तीति भावार्हत्त्वप्रतिपादनायाह–केवलिनः, उत्पन्नकेवलज्ञानान् भावार्हत इत्यर्थः, अनेन ज्ञानातिशय उक्तः। तत्संख्यामाह–चतुर्विंशतिमपि, अपिशब्दादन्यानपि। किंविशिष्टान्? लोकस्योद्द्योतकरान्। लोक्यते प्रमाणेन दृश्यत इति लोकः पञ्चास्तिकायात्मकः। तस्योद्द्योतकरणशीलान्, केवलालोकदीपेन सर्वलोकप्रकाशकरणशीलान् इत्यर्थः। ननु केवलिन इत्यनेनैव गतार्थमेतत्, लोकोद्द्योतकरणशीला एव हि केवलिनः। सत्यम्, विज्ञानाद्वैतनिरासेनोद्द्योतकादुद्द्योत्यस्य भेददर्शनार्थम्।

लोकोद्द्योतकरत्वं च तत्स्तावकानामुपकाराय, न चानुपकारिणः कोऽपि स्तौति इत्युपकारकत्वप्रदर्शनायाह–धर्मतीर्थकरान्। धर्म उक्तस्वरूपः, तीर्यतेऽनेन तीर्थम्, धर्मप्रधानं तीर्थं धर्मतीर्थम्, धर्मग्रहणाद् द्रव्यतीर्थस्य नद्यादेः शाक्यादिसम्बन्धिनश्च अधर्मप्रधानस्य परिहारः। तत्करणशीला धर्मतीर्थकराः, तान्, सदेवमनुजासुरायां पर्षदि सर्वभाषापरिणामिन्या वाचा धर्मतीर्थप्रवर्तकानित्यर्थः। अनेन पूजातिशयो वागतिशयश्चोक्तः।

अपायापगमातिशयमाह—जिनान् रागद्वेषादिजेतॄनित्यर्थः ।

यदुक्तं 'कीर्तयिष्यामि' इति तत्कीर्तनं कुर्वन्नाह—

उसभ[1]मजियं ज वंदे, संभवमभिनं[2]दणं च [3]सुमइं च ।
पउमप्पह सुपासं, जिणं च चंदप्पहं वंदे ॥ २ ॥
सुविहिं च [4]पुप्फदंतं, [5]सीयल [6]सेज्जंस [7]वासुपुज्जं च ।
विमलमणंतं च जिणं, धम्मं संतिं च वंदामि॥ ३ ॥
कुंथुं [8]अरं च मल्लिं, वंदे मुणिसुव्वयं नमिजिणं च ।
वंदामि रिट्ठनेमिं, पासं तह वद्धमाणं च ॥ ४ ॥

समुदायार्थः सुगमः। पदार्थस्तु विभज्यते, स च सामान्यतो विशेषतश्च। तत्र सामान्यतः ऋषति गच्छति परमपदमिति ऋषभः, "उद्दत्वादौ" [ सि० ८।१।१३१ ] इत्युत्वे उसहो। वृषभ इत्यपि, वर्षति सिञ्चति देशनाजलेन दुःखाग्निना दग्धं जगत् इत्यस्यान्वर्थः, "वृषभे वा वा" [ सि० ८।१।१३३ ] इति वकारेण ऋत उत्वेऽस्यापि उसहो। विशेषतस्तु ऊर्वोर्वृषभो लाञ्छनमभूद्भगवतः, जनन्या च चतुर्दशानां स्वप्नानामादावृषभो दृष्टस्तेन [9]ऋषभो वृषभो वा। १।

---

१ ०मजिअ-मु.॥ २ ०दनं-शां.॥ ३ सुमयं-खं.॥ ४ पुप्पदंतं-शां. खं। पुष्फदंतं-सं.॥ ५ सीअल-मु.॥ ६ सेयंस-शां.। सेयंच-खं.॥ सिज्जंस-मु. ७ वासपूज्जं-खं. सं.॥ ८ अरुं-खं॥ ९ ऋषभो वा-खं. सं.। खं. सं. मध्ये 'वृषभो' इति पाठो नास्ति। 'वृषभो ऋषभो वा' इत्यपि पाठोऽत्र सम्भवति॥

॥ ६२३ ॥

परीषहादिभिर्न जित इति अजितः। तथा गर्भस्थे भगवति जननी द्यूते राज्ञा[1] न जिता इत्यजितः। २।

सम्भवन्ति प्रकर्षेण भवन्ति चतुस्त्रिंशदतिशयगुणा अस्मिन्निति सम्भवः, शं सुखं भवत्यस्मिन् स्तुते इति शम्भवो वा, तत्र "शषोः सः" [सि० ८।१।२६०] इति सत्वे[2] संभवो। तथा गर्भगतेऽप्यस्मिन् अभ्यधिकसस्यसम्भवात् सम्भवः। ३।

अभिनन्द्यन्ते देवेन्द्रादिभिरित्यभिनन्दनः, तथा गर्भात् प्रभृति एवाभीक्ष्णं शक्राद्यभिनन्दनात् अभिनन्दनः। ४।

सु शोभना मतिरस्येति सुमतिः, तथा गर्भस्थे जनन्याः[3] सुनिश्चिता मतिरभूदिति सुमतिः। ५।

निष्पङ्कतामङ्गीकृत्य पद्मस्येव प्रभा यस्यासौ पद्मप्रभः, तथा पद्मशयनदोहदो मातुर्देवतया पूरित इति पद्मवर्णश्च भगवानिति पद्मप्रभः। ६।

शोभनाः[4] पार्श्वा अस्येति सुपार्श्वः। तथा गर्भस्थे भगवति जनन्यपि सुपार्श्वा जातेति सुपार्श्वः। ७।

चन्द्रस्येव प्रभा ज्योत्स्ना सौम्यलेश्याविशेषोऽस्येति चन्द्रप्रभः। तथा देव्याश्चन्द्रपानदोहदोऽभूत् चन्द्रसमवर्णश्च भगवानिति चन्द्रप्रभः। ८।

शोभनो विधिः सर्वत्र कौशलमस्येति सुविधिः, तथा गर्भस्थे भगवति जनन्यप्येवमिति सुविधिः। पुष्पकलिकामनोहरदन्तत्वात् पुष्पदन्त इति द्वितीयं नाम। ९।

१ राज्ञामजिता-खं.॥ २ सम्भवः-मु.॥ ३ जनन्या-शां. खं.॥ ४ शोभना पार्श्वा-खं. सं.॥

सकलसत्त्वसन्तापहरणाच्छीतलः, तथा गर्भस्थे भगवति पितुः पूर्वोत्पन्नाचिकित्स्यपित्तदाहो जननीकरस्पर्शादुपशान्त इति शीतलः । १० ।

सकलभुवनस्यापि प्रशस्यतमत्वेन श्रेयान्, श्रेयांसावंसावस्येति पृषोदरादित्वात् श्रेयांसो वा । तथा गर्भस्थेऽस्मिन् केनाप्यनाक्रान्तपूर्वा देवताधिष्ठितशय्या जनन्या आक्रान्तेति श्रेयो जातमिति श्रेयांसः । १० ।

वसवो देवविशेषाः, तेषां पूज्यो वसुपूज्यः, प्रज्ञादित्वादणि[1] वासुपूज्यः । तथा गर्भस्थेऽऽस्मिन् वसु हिरण्यं तेन वासवो राजकुलं पूजितवानिति वासुपूज्यः । वसुपूज्यस्य राज्ञोऽयमिति वा "तस्येदम्"। [सि० ६।३।६०] इत्यणि वासुपूज्यः । १२ ।

विगतमलो[2] विमलानि वा ज्ञानादीन्यस्येति विमलः । तथा गर्भस्थे मातुर्मतिस्तनुश्च विमला जातेति विमलः । १३ ।

अनन्तकर्मांशान् जयति, अनन्तैर्वा ज्ञानादिभिर्जयति अनन्तजित् । तथा गर्भस्थे जनन्या अनन्तरत्नं[3] दाम दृष्टम्, जयति च त्रिभुवनेऽपीति अनन्तजित्, भीमो भीमसेन इति न्यायादनन्त इति । १४ ।

दुर्गतौ प्रपतन्तं सत्त्वसङ्घातं धारयतीति धर्मः । तथा गर्भस्थे जननी दानादिधर्मपरा जातेति धर्मः । १५ ।

शान्तियोगात् तदात्मकत्वात् तत्कर्तृत्वाद्वा शान्तिरिति । तथा गर्भस्थे पूर्वोत्पन्नाशिवशान्तिरभूदिति शान्तिः । १६ ।

---

१ प्राज्ञादित्वादणि वासपूज्यः-सं. । "प्रज्ञादिभ्योऽण्" सि० ७।२।१६५ ॥ २ विगतमलो विमलः, विमलानि वा-मु. ॥ ३ ०रत्नदाम-मु. ॥

कुः पृथ्वी तस्यां स्थितवानिति निरुक्तात् कुन्थुः। तथा गर्भस्थे जननी रत्नानां कुन्थुं[1] राशिं दृष्टवतीति कुन्थुः ।१७।

"सर्वो नाम महासत्त्वः कुले य उपजायते।
तस्या[2]ऽभिवृद्धये वृद्धैरसावर उदाहृतः ॥ १ ॥" [ ]

इति वचनादरः। तथा गर्भस्थे जनन्या स्वप्ने सर्वरत्नमयोऽरो दृष्ट इत्यरः। १८।

परीषहादिमल्लजयान्निरुक्तान्मल्लिः, तथा गर्भस्थे मातुः[3] सुरभिकुसुममाल्यशयनीयदोहदो देवतया पूरित इति मल्लिः। १९।

मन्यते जगतस्त्रिकालावस्थामिति मुनिः, "मनेरुदेतौ चास्य वा" [उणादि० ६१२] इति इप्रत्यये उपान्त्यस्योत्वम्। शोभनानि व्रतान्यस्येति सुव्रतः। मुनिश्चासौ सुव्रतश्च मुनिसुव्रतः, तथा गर्भस्थे जननी मुनिवत् सुव्रता जातेति मुनिसुव्रतः। २।

परीषहोपसर्गादिर्नामनाद्[4] "नमेस्तु वा" [उणादि० ६१३] इति विकल्पेनोपान्त्यस्येकाराभावपक्षे नमिः, तथा गर्भस्थे भगवति परचक्रनृपैरपि प्रणतिः कृतेति नमिः। २१।

धर्मचक्रस्य नेमिवन्नेमिः, तथा गर्भस्थे भगवति जनन्या रिष्टरत्नमयो महानेमिर्दृष्ट इति रिष्टनेमिः, अपश्चिमादिशब्दवत् नञ्पूर्वत्वेऽरिष्टनेमिः। २२।

---

१ कुन्थुराशिं-शां. खं.॥ २ तस्यातिवृद्धये-खं.॥ ३ मातुः एकऋतौ सर्वर्तुसुरभिकुसुम०-मु.॥ ४ नमनाद्-शां.॥

पश्यति सर्वभावानिति निरुक्तात् पार्श्वः। तथा गर्भस्थे जनन्या निशि शयनीयस्थयाऽन्धकारे सर्पो दृष्ट इति गर्भानुभावोऽयमिति मत्वा पश्यतीति पार्श्वः। पार्श्वोऽस्य वैयावृत्त्यकरः, तस्य नाथः पार्श्वनाथः, भीमो भीमसेन इतिवत् पार्श्वः। २३।

उत्पत्तेरारभ्य ज्ञानादिभिर्वर्धत इति वर्धमानः। तथा [1]गर्भस्थे भगवति ज्ञातकुलं धनधान्यादिभिर्[2]वर्धत इति वर्धमानः।२४। विशेषाभिधानार्थसंग्राहिकाश्चेमाः श्रीभद्रबाहुस्वामिप्रणीता गाथाः—

"[3]ऊरूसु उसहलंछणमुसभं सुमिणम्मि तेण उसहजिणो।
अक्खेसु जेण अजिआ जणणी अजिओ जिणो तम्हा ॥ १ ॥
अभिसंभूआ सास त्ति संभवो तेण वुच्चइ भयवं।
[4]अभिणंदई अभिक्खं सक्को अभिणंदणो तेण ॥ २ ॥
जणणी सव्वत्थ विणिच्छएसु सुमइ त्ति तेण सुमइजिणो।
पउमसयणम्मि [5]जणणीइ [6]डोहलो तेण पउमाभो ॥ ३ ॥

१ भगवति गर्भस्थे–मु. ॥ २ ०धान्यादि च वर्धत–मु. ॥ ३ ऊर्वोः ऋषभलाञ्छनमृषभं स्वप्ने तेन ऋषभजिनः। अक्षेषु येनाजिता जननी अजितो जिनस्तस्मात् ॥ १ ॥ अभिसम्भूतानि सस्यानीति सम्भवस्तेनोच्यते भगवान्। अभिनन्दत्यभीक्ष्णं शक्रोऽभिनन्दनस्तेन ॥ २ ॥ जननी सर्वत्र विनिश्चयेषु सुमतिरिति तेन सुमतिजिनः। पद्मशयने जनन्या दोहदस्तेन पद्माभः ॥ ३ ॥ ४ अभिनंदइ–मु. ॥ ५ जणणीए–सं. ॥ ६ दोहलो–शां. ॥

॥ ६२७ ॥

गब्भगए[1] जं जणणी जाय सुपासा तओ सुपासजिणो ।
जणणीइ[2] चंदपियणम्मि डोहलो तेण चंदाभो ॥ ४ ॥
सव्वविहीसु अ कुसला गब्भगए जेण होइ सुविहिजिणो ।
पिउणो दाहोवसमो गब्भगए सीयलो तेणं ॥ ५ ॥
महरिहसेज्जारुहणम्मि[3] डोहलो होइ तेण सेज्जंसो[4] ।
पूएइ वासवो जं अभिक्खणं तेण वसुपुज्जो ॥ ६ ॥
विमलतणुबुद्धि जणणी गब्भगए तेण होई विमलजिणो ।
रयणविचित्तमणंतं दामं सुमिणे तओऽणंतो ॥ ७ ॥
गब्भगए जं जणणी जाय सुधम्मत्ति तेण धम्मजिणो ।
जाओ असिवोपसमो[5] गब्भगए तेण संतिजिणो ॥ ८ ॥

---

१ गर्भगते यज्जननी जाता सुपार्श्वा ततः सुपार्श्वजिनः । जनन्या चन्द्रपाने दोहदस्तेन चन्द्राभः ॥४॥ सर्वविधिषु च कुशला गर्भगते येन भवति सुविधिजिनः । पितुर्दाहोपशमो गर्भगते शीतलस्तेन ॥ ५ ॥ महार्हशय्यारोहणे दोहदो भवति तेन श्रेयांसः । पूजयति वासवो यदभीक्ष्णं तेन वासुपूज्यः ॥ ६ ॥ विमलतनुबुद्धिर्जननी गर्भगते तेन भवति विमलजिनः । रत्नविचित्रमनन्तं दाम स्वप्ने ततोऽनन्तः ॥ ७ ॥ गर्भगते यज्जननी जाता सुधर्मेति तेन धर्मजिनः । जातोऽशिवोपशमो गर्भगते तेन शान्तिजिनः ॥ ८ ॥

२ जणणीए–शां. ॥ ३ ०सिज्जा–मु. सं. ॥ ४ सिज्जंसो–मु. ॥ ५ ०वसमो–मु. ॥

थूंहं[1] रयणविचित्तं कुंथुं सुमिणम्मि तेण कुंथुजिणो ।
सुमिणे अरं महरिहं पासइ जणणी अरो तम्हा ॥ ९ ॥

वरसुरहिमल्लसयणम्मि डोहलो तेण होइ मल्लिजिणो ।
जाया जणणी जं सुव्वयत्ति[2] मुणिसुव्वओ तम्हा ॥ १० ॥

पणया पच्चंतनिवा दंसियमित्ते[3] जिणम्मि तेण नमी ।
रिट्ठरयणं च नेमिं उप्पयमाणं तओ नेमी ॥ ११ ॥

सप्पं सयणे जणणी ज पासइ तमसि तेण पासजिणो ।
वड्ढइ[4] नायकुलं ति अ तेण जिणो वद्धमाणो त्ति[5] ॥ १२ ॥ [ आवश्यकनिर्युक्तौ १०९३–११०४ ]

---

१ स्तुपं रत्नविचित्रं कुन्थुं स्वप्ने तेन कुन्थुजिनः । स्वप्नेऽरं महार्हं पश्यति जननी अरस्तस्मात् ॥९॥ वरसुरभिमाल्यशयने दोहदस्तेन भवति मल्लिजिनः । जाता जननी यत् सुव्रतेति मुनिसुव्रतस्तस्मात् ॥ १० ॥ प्रणताः प्रत्यन्तनृपा दर्शितमात्रे जिने तेन नमिः । रिष्टरत्नं च नेमिमुत्पतन्तं ततो नेमिः ॥ ११ ॥ सर्पं शयने जननी यत् पश्यति तमसि तेन पार्श्वजिनः । वर्द्धते ज्ञातकुलमिति च तेन जिनो वर्द्धमान इति ॥ १२ ॥ २ ०सुव्वइ त्ति–खं. सं. ॥ ३ देसिय०–खं. ॥ ४ वड्ढइ य नायकुलं–मु. वड्ढइ नाइकुलं–सं. ॥ ५ इतः परमेका अधिका गाथा सं. प्रतौ अधस्तात् परिपूरितास्ति–"नवफण सत्तफणो वा नागो लीलावेए (लीलावए?) जिणं पासं। पंचइ फणी सुपासो भणिओ पढमाणुजोगाओ ॥"

॥६२९॥

कीर्तनं[1] कृत्वा चेतःशुद्ध्यर्थं प्रणिधानमाह—

एवं मए अभिथुया विहुयरयमला पहीणजरमरणा ।
चउवीसं पि जिणवरा तित्थयरा मे पसीयंतु ॥ ५ ॥

एवमनन्तरोदितेन विधिना, मयेत्यात्मनिर्देशः, अभिष्टुता आभिमुख्येन स्तुताः स्वनामभिः कीर्तिता इत्यर्थः । किंविशिष्टास्ते ? विधूतरजोमलाः, रजश्च मलं च रजोमले, विधूते प्रकम्पिते अनेकार्थत्वादपनीते वा रजोमले यैस्ते विधूतरजोमलाः, बध्यमानं च कर्म रजः, पूर्वबद्धं तु मलम्, अथवा बद्धं रजः, निकाचितं मलम्, अथवा ऐर्यापथं रजः, साम्परायिकं मलमिति । यतश्चैवंभूता अत एव प्रक्षीणजरामरणाः कारणाभावात् । चतुर्विंशतिरपि, अपिशब्दादन्येऽपि, जिनवराः श्रुतादिजिनेभ्यः प्रकृष्टाः, ते च तीर्थकरा इति पूर्ववत्, मे मम, किम् ? प्रसीदन्तु प्रसादपरा भवन्तु । ते च वीतरागत्वाद्यद्यपि स्तुताः तोषम्, निन्दिताश्च द्वेषं न यान्ति, तथापि स्तोता स्तुतिफलं निन्दकश्च निन्दाफलमाप्नोत्येव यथा चिन्तामणिमन्त्राद्याराधकः, यदवोचाम वीतरागस्तोत्रे[3]—

“ अप्रसन्नात् कथं प्राप्यं फलमेतदसङ्गतम् ।
चिन्तामण्यादयः किं न फलन्त्यपि विचेतनाः ? ॥ १ ॥” [ वीतराग० १९।३ ]

इत्युक्तमेव । अथ यदि न प्रसीदन्ति तत् किं प्रसीदन्त्विति वृथा प्रलापेन ? । नैवम् । भक्त्यतिशयत एवमभिधानेऽपि न दोषः ।



---

१ इति कीर्तनं-मु. ॥ २ अभि०-खं. सं. ॥ ३ ०स्तवे-मु. ॥

यदाह—

"क्षीणक्लेशा एते न हि प्रसीदन्ति न[2] स्तवोऽपि वृथा ।
तत्स्तवभावविशुद्धेः प्रयोजनं कर्मविगम इति ॥ १ ॥" [ ]

तथा—

"कित्तिय वंदिय महिया जे[3] ए लोगस्स उत्तमा सिद्धा ।
आरुग्ग[4]बोहिलाभं समाहिवरमुत्तमं[5] दिंतु ॥ ६ ॥

कीर्तिताः स्वनामभिः प्रोक्ताः, वन्दितास्त्रिविधयोगेन सम्यक् स्तुताः, महिताः पुष्पादिभिः पूजिताः । मइआ इति पाठान्तरम्, तत्र मयका मया । के एते ? इत्याह–ये एते लोकस्य प्राणिवर्गस्य कर्ममलकलङ्काभावेनोत्तमाः प्रकृष्टाः, सिद्ध्यन्ति स्म सिद्धाः कृतकृत्या इत्यर्थः, अरोगस्य भाव आरोग्यं सिद्धत्वम्, तदर्थं बोधिलाभः अर्हत्प्रणीतधर्मप्राप्तिरारोग्यबोधिलाभः, स ह्यनिदानो मोक्षायैव भवति, तम् । तदर्थं च समाधिवरं वरसमाधिं परमस्वास्थ्यरूपं भावसमाधिमित्यर्थः । असावपि तारतम्यभेदादनेकधैव, अत आह—उत्तमं सर्वोत्कृष्टम्, ददतु प्रयच्छन्तु, एतच्च भक्त्योच्यते । यत उक्तम्—

"भासा असच्चमोसा नवरं भत्तीइ भासिआ एसा ।
न हु खीणपिज्जदोसा दिंति समाहिं च बोहिं च ॥ १ ॥" [आवश्यकनिर्युक्तौ ११०८] इति ।

---

१ इदं वचनं ललितविस्तरायाम् "उक्तं च" इत्यभिधायोद्धृतम् ॥ २ न तत्स्तवो–मु. ॥ ३ जे ते लो०–सं. । जित्तिअ लोगस्स उत्तिमा–खं. ॥ ४ आरोग–शां. सं. । आरोग्ग–खं. ॥ ५ ०मुत्तिमं–खं. ॥

तथा—

चंदेसु निम्मलयरा आइच्चेसु अहियं पयासयरा ।
सागरवरगंभीरा सिद्धा सिद्धिं मम दिसंतु ॥ ७ ॥

"पञ्चम्यास्तृतीया च" [ सि० ८।३।१३६ ] इति पञ्चम्यर्थे सप्तमी, अतश्चन्द्रेभ्यो[1] निर्मलतराः सकलकर्ममलापगमात्, पाठान्तरं वा 'चंदेहिं निम्मलयरा'। एवमादित्येभ्यो[2]ऽधिकं प्रकाशकराः, केवलोद्द्योतेन लोकालोकप्रकाशकत्वात्। उक्तं च—

"चंदाइच्चगहाणं पहा पयासेइ परिमियं खित्तं ।
केवलिअनाणलंभो लोआलोयं[3] पयासेइ ॥ १ ॥" [ आवश्यकनिर्युक्तौ ११०२ ]

सागरवरः स्वयम्भूरमणाख्यः[4] समुद्रः, परीषहोपसर्गाद्यक्षोभ्यत्वात् तस्मादपि गम्भीराः, सिद्धाः, कर्मविगमात् कृतकृत्याः, सिद्धिं परमपदप्राप्तिम्, मम दिशन्तु प्रयच्छन्तु ।

एवं चतुर्विंशतिस्तवमुक्त्वा सर्वलोक एवार्हच्चैत्यानां वन्दनाद्यर्थं कायोत्सर्गकरणायेदं पठति पठन्ति वा—सव्वलोए [5]अरहंतचेइआणं करेमि [6]काउस्सग्गमित्यादि वोसिरामीति[7] यावत्। व्याख्या पूर्ववत्। नवरम्, सर्वश्चासौ लोकश्च अधस्तिर्यगूर्ध्वभेदः, तस्मिंस्त्रैलोक्ये इत्यर्थः, अधोलोके हि चमरादिभवनेषु, तिर्यग्लोके द्वीपा-ऽचल-ज्योतिष्कविमानादिषु, ऊर्ध्वलोके

१ ०न्द्रेभ्योऽपि निर्म०–मु ॥ २ ०मादित्येभ्योऽप्यधिकं–मु. ॥ ३ लोआलोअं–मु. ॥ ४ ०ख्यसमुद्रः–खं. ॥ ५ अरिहंत०–मु. ॥ ६ काउसग्ग०–मु. ॥ ७ दृश्यताम् आवश्यकसूत्रस्य कायोत्सर्गाध्ययनस्य हारिभद्री वृत्तिः पृ० ७८७। आवश्यकचूर्णिः पृ० २५७। ललितविस्तरा। धर्मसंग्रहवृत्तिः पृ० १५८ ॥

सौधर्मादिषु सन्त्येवार्हच्चैत्यानि। ततश्च मौलचैत्यं समाधिकारणमिति मूलप्रतिमायाः प्राक् स्तुतिरुक्ता। इदानीं सर्वेऽर्हन्तस्तद्गुणा इति सर्वलोकग्रहः, तदनुसारेण सर्वतीर्थकरसाधारणी स्तुतिः। अन्यथा अन्यकायोत्सर्गे अन्या स्तुतिरिति न सम्यक्, अतिप्रसङ्गात्, इति सर्वतीर्थकराणां स्तुतिरुक्ता।

इदानीं येन ते भगवन्तस्तदभिहिताश्च भावाः स्फुटमुपलभ्यन्ते तत् प्रदीपस्थानीयं सम्यक् श्रुतमर्हति कीर्तनम्, तत्रापि तत्प्रणेतॄन् भगवतः प्रथमं स्तौति—

पुक्खरवरदीवड्ढे[1] धायइसंडे[2] य जंबुद्दीवे य। भरहेरवयविदेहे धम्माइगरे नमंसामि ॥ १ ॥

भरतं भरतक्षेत्रम्, ऐरवतमैरवतक्षेत्रम्, विदेहमिति भीमो भीमसेन इति न्यायाद् महाविदेहक्षेत्रम्, एवं समाहारद्वन्द्वः, तेषु भरतै[3]रवतविदेहेषु धर्मस्य श्रुतधर्मस्यादिकरान् सूत्रतः प्रथमकरणशीलान्, नमस्यामि स्तुवे। क्व यानि भरतैरवतमहाविदेहक्षेत्राणि? इत्याह—पुष्कराणि पद्मानि, तैर्वरः पुष्करवरः, स चासौ द्वीपश्च पुष्करवर[4]द्वीपः तृतीयो द्वीपः, तस्यार्धं मानुषोत्तराचलादर्वाग्भागवर्ति, तत्र द्वे भरते द्वे ऐरवते द्वे महाविदेहे। तथा धातकीनां ख[5]ण्डानि वनानि यस्मिन् स धातकीख[6]ण्डो द्वीपः, त[7]स्मिन् द्वे भरते द्वे ऐरवते द्वे महाविदेहे। जम्ब्वा उपलक्षितः तत्प्रधानो वा द्वीपो जम्बूद्वीपः, अत्रैकं भरतमेकमैरवतमेकं च महाविदेहमित्येताः पञ्चदश कर्मभूमयः। शे[8]षास्त्वकर्मभूमयः। यदाहु—" भरतैरवतविदेहाः कर्मभूमयोऽन्यत्र

१ आवश्यकसूत्रस्य कायोत्सर्गाध्ययनस्य हारिभद्री वृत्तिः पृ० ७८८। आवश्यकचूर्णिः पृ० २५८। ललितविस्तरा। धर्मसंग्रहवृत्तिः पृ० १५८–१५९ ॥ २ धाईसंडे–खं.। धाइयसंडे–सं.॥ ३ ०तैरावत०–शां. खं.॥ ४ ०वरद्वीपद्वीपस्तृतीयो द्वीपः–खं.॥ ५ षण्डानि–खं.॥ ६ ०षण्डो–खं.॥ ७ तस्मिन् धातुकीषण्डे–खं.॥ ८ शेषास्त्वकर्मभूमयः–नास्ति शां.॥

देवकुरूत्तरकुरुभ्यः" [तत्त्वार्थ० ३।१६]। महत्तरक्षेत्रप्राधान्याङ्गीकरणाच्च पश्चानुपूर्व्या निर्देशः। धर्मादिकरत्वं यथा भगवतां भवति तथा अपौरुषेयवाद[2]निराकरणावसरे प्राग् निर्णीतम्।

नन्वेवमपि कथं धर्मादिकरत्वं भगवताम्, "तँप्पुव्विआ[3] अरहया" [आवश्यकनिर्युक्तौ गा० ५६७] इति वचनाद् वचनस्यानादित्वात्? नैवम्, बीजाङ्कुरवत्तदुपपत्तेः, बीजाद्धि अङ्कुरो भवति अङ्कुराच्च बीजमिति। एवं भगवतां पूर्वजन्मनि श्रुतधर्माभ्यासात् तीर्थकरत्वं तीर्थकृतां च श्रुतधर्मादिकरत्वमदुष्टमेव। न चायं नियमः श्रुतधर्मपूर्वकमेवार्हत्त्वमिति, मरुदेव्यादीनां श्रुतधर्मपूर्वकत्वाभावेऽपि केवलज्ञानश्रवणादित्यलं प्रसङ्गेन।

'पुक्खरवरदीवड्ढे'-सूत्रव्याख्या

एवं श्रुतधर्मादिकराणां स्तुतिरुक्ता। इदानीं श्रुतधर्मस्याह—

तमतिमिरपडलविद्धंसणस्स सुरगणनरिंदमहियस्स।
सीमाधरस्स वंदे पप्फोडियमोहजालस्स ॥ २ ॥

तमोऽज्ञानम्, तदेव तिमिरम्, अथवा बद्ध-स्पृष्ट-निधत्तं ज्ञानावरणीयं कर्म तमः; निकाचितं तिमिरम्, ततस्तमस्तिमि-रस्य तमस्तिमिरयोर्वा पटलं वृन्दम्। तद्विध्वंसयति विनाशयतीति नन्द्यादित्वा[4]दने तमस्तिमिरपटलविध्वंसनः, तस्य, अज्ञान-

१ ०णात् पश्चा०-मु. ॥ २ ०वादिनिरा०-सं. खं. ॥ ३ "तप्पुव्विया अरहया पूइयपूया य विणयकम्मं च। कयकिच्चो वि जह कहं कहेइ नमए तहा तित्थं ॥५६७॥" इति सम्पूर्णा गाथा। तत्पूर्विका अर्हत्ता पूजितपूजा च विनयकर्म च। कृतकृत्योऽपि यथा कथां कथयति नमति तथा तीर्थम्॥ ४ "नन्द्यादिभ्योऽनः"-सि० ५।१।५२॥

निरासेनैवास्य प्रवृत्तेः। सुरगणैश्चतुर्विधामरनिकायैर्नरेन्द्रैश्चक्रवर्त्यादिभिर्महितः पूजितः, तस्य। आगममहिमां हि कुर्वन्त्येव सुरादयः[1]। सीमां मर्य्यादाम्, सीमायां वा धारयतीति सीमाधरस्तस्य, श्रुतधर्म इति विशेष्यम्, ततः कर्मणि द्वितीया, तस्याश्च "क्वचिद् द्वितीयादेः" [सि० ८।३।१३४] इति प्राकृतसूत्रात् षष्ठी, अतस्तं वन्दे। तस्य वा यन्माहात्म्यं तद्वन्दे इति सम्बन्धे षष्ठी, अथवा तस्य वन्दे वन्दनं करोमीति। प्रकर्षेण स्फोटितं विदारितं मोहजालं मिथ्यात्वादिरूपं येन स तथा तस्य। श्रुतधर्मे हि सति विवेकिनो मोहजालं[2] विलयमुपयात्येव।

इत्थं श्रुतमभिवन्द्य तस्यैव गुणोपदर्शनद्वारेणाप्रमादगोचरतां प्रतिपादयन्नाह—

जाईजरामरणसोगपणासणस्स, कल्लाणपुक्खलविसालसुहावहस्स।
को देवदाणवनरिंदगणच्चियस्स, धम्मस्स सारमुवलब्भ करे पमायं? ॥ ३ ॥

कः सचेतनः, धर्मस्य श्रुतधर्मस्य, सारं सामर्थ्यम्, उपलभ्य विज्ञाय, श्रुतधर्मोदितेऽनुष्ठाने प्रमादमनादरं कुर्यात्? न कश्चित् कुर्यादित्यर्थः। किंविशिष्टस्य श्रुतधर्मस्य? जातिर्जन्म, जरा विश्रसा[3], मरणं प्राणनाशः, शोको मानसो दुःखविशेषः, तान् प्रणाशयति अपनयति जातिजरामरणशोकप्रणाशनः, तस्य। श्रुतधर्मोक्तानुष्ठानाद्धि जात्यादयः प्रणश्यन्त्येव, अनेनास्यानर्थप्रतिघातित्वमुक्तम्। कल्यमारोग्यमणाति शब्दयति इति कल्याणम्, पुष्कलं सम्पूर्णम्, न च तदल्पं किन्तु विशालं

१ सुरासुरादयः–मु. खं.। ललितविस्तरायामपि 'सुरादयः' इति पाठः॥ २ मोहजालं मिथ्यात्वादिरूपं विलयं–मु.॥ ३ विस्रसा–खं.

विस्तीर्णमेवम्भूतं सुखमावहति प्रापयतीति कल्याणपुष्कलविशालसुखावहः, तस्य, तथा च श्रुतधर्मोक्तानुष्ठानादुक्तलक्षणमपवर्गसुखमवाप्यत एव, अनेन चास्य विशिष्टार्थप्रापकत्वमाह। देवानां दानवानां नरेन्द्राणां च गणैरर्चितस्य पूजितस्य। 'सुरगणनरेन्द्रमहितस्य' इत्यस्यैव निगमनम्—देवदाणवेत्यादि। यतश्चैवमतः—

सिद्धे भो! पयओ नमो जिणमए नंदी सया संजमे, देवंनागसुवन्नकिन्नरगणस्सब्भूयभावच्चिए।

लोगो जत्थ पइट्ठिओ जगमिणं तेलोक[1]मच्चासुरं, धम्मो वड्ढउ सासयं[2] विजयओ[3] धम्मुत्तरं[4] वड्ढउ ॥ ४ ॥

सिद्धः फलाव्यभिचारेण प्रतिष्ठितः, अथवा सिद्धः सकलनयव्यापकत्वेन त्रिकोटि[5]परिशुद्धत्वेन च प्रख्यातः, तस्मिन्। भो इत्यतिशयिनामामन्त्रणम्, पश्यन्तु भवन्तः, प्रयतोऽहं यथाशक्त्येतावन्तं कालं प्रकर्षेण यतः, इत्थं परसाक्षिकं प्रयतो भूत्वा पुनर्नमस्करोति-नमो जिणमए[6], नमो जिनमताय, प्राकृतत्वाच्चतुर्थ्याः सप्तमी। अस्मिंश्च सति नन्दिः समृद्धिः, सदा सर्वकालम्, संयमे चारित्रे भूयात्। उक्तं च—'पढमं[7] नाणं तओ दया' [दशवै० ४।१०] किंविशिष्टे संयमे?, देवनागसुपर्ण[8]किन्नरगणैः सद्भूतभावेनार्चिते, देवा विमानिनः, नागा धरणादयः, सुपर्णा[9] गरुडाः, किन्नरा व्यन्तरविशेषाः, उपलक्षणं

१ तेलुक्क०-मु. ॥ २ सासओ-खं. ॥ ३ विजयउ-सं. खं. ॥ ४ धम्मोत्तरं-खं. सं. ॥ ५ त्रिकोटी०-खं. सं.। अत्र शां. मध्येऽधस्ताट्टिप्पणरूपेणैवं लिखितमस्ति—"तिस्रः कोटयस्ताप-च्छेद-कषलक्षणाः। यदाह-तापः स्यात् संगतार्थत्वं छेदो बाधकबाधनम्। पूर्वापराविरोधित्वं निघर्षः तु निगीयते ॥" ६ जिनमते-शां. ॥ ७ प्रथमं ज्ञानं ततो दया। अत्र दशवैकालिकसूत्रे चतुर्थाध्ययने प्रान्तवर्तिनीसु गाथासु "पढमं नाणं तओ दया एवं चिट्ठइ सव्वसंजए। अन्नाणी किं काही किंवा नाहीइ छेअपावगं ॥" इति सम्पूर्णा गाथा ॥ ८ ०सुवर्ण-सं. ॥ ९ सुवर्णा-खं. सं. ॥

शेषाणाम्, देवमित्यनुस्वारः छन्दःपूरणे, तथा च संयमवन्तोऽर्च्यन्त एव देवादिभिः। यत्र जिनमते, किं यत्र? लोकनं[1] लोको ज्ञानम्, प्रतिष्ठितः तद्वशीभूतः, तथा जगदिदं ज्ञेयतया प्रतिष्ठितमिति योगः। केचिन्मनुष्यलोकमेव जगन्मन्यते, अत आह– त्रलोक्यमर्त्यासुरमाधाराधेयरूपम्। अयमित्थम्भूतो धर्मः श्रुतधर्मो वर्धतां वृद्धिमुपैयातु[2], शाश्वतमिति क्रियाविशेषणं शाश्वतमप्रच्युत्या वर्धतामिति, विजयतः परप्रवादिविजयेन[3], धर्मोत्तरं चारित्रधर्मोत्तरं वर्धताम्, पुनर्वृद्ध्यभिधानं मोक्षार्थिना प्रत्यहं ज्ञानवृद्धिः कार्य्या इति प्रदर्शनार्थम्। तथा च तीर्थकरनामकर्महेतून् प्रतिपादयतोक्तम्—

"अपुंव्वनाणगहणे[4]" [आवश्यकनिर्युक्तौ गा० १८१] इति। प्रणिधानमेतद् मोक्षबीजकल्पं परमार्थतोऽनाशंसारूपमेवेति प्रणिधानं कृत्वा श्रुतस्यैव वन्दनाद्यर्थं कायोत्सर्गार्थं पठति पठन्ति[5] वा।—

सुअस्स भगवओ करेमि काउस्सग्गमित्यादि[6] वोसिरामीति यावत्, अर्थः पूर्ववत्, नवरं श्रुतस्येति प्रवचनस्य सामायिकादेर्बिन्दुसारपर्यन्तस्य, भगवतो यशोमाहात्म्यादियुक्तस्य। ततः कायोत्सर्गकरणम्, पूर्ववत् पारयित्वा श्रुतस्य स्तुतिं पठति। ततश्च अनुष्ठानपरम्पराफलभूतेभ्यः सिद्धेभ्यो नमस्करणायेदं[7] पठति पठन्ति वा—

१ लोकनं–नास्ति शां.॥ २ ०मुपयात्–खं.। ०मुपायात्–सं.॥ ३ परवादि०–मु.॥ ४ "अप्पुव्वनाणगहणे १८ सुयभत्ती १९ पवयणे पभावणया २०। एएहिं कारणेहिं तित्थयरत्तं लहइ जीवो॥१८१॥" इति संपूर्णा गाथा। प्रवचनसारोद्धारे [गा० ३१२] विचारसारेऽपि च [गा. ५३] गाथेयं वर्तते॥ ५ पठन्ति च–शां. खं. सं.। ललितविस्तरायामपि 'पठन्ति वा' इत्येव पाठः। ६ ०सग्गं–शां.॥ ७ नमस्कारकरणायेदं–मु.॥

सिद्धाणं बुद्धाणं पारगयाणं परम्परगयाणं ।
लोयग्गमुवगयाणं[2] नमो सया सव्वसिद्धाणं ॥ १ ॥

सिद्ध्यन्ति स्म सिद्धा ये येन गुणेन निष्पन्नाः परिनिष्ठिताः, सिद्धौदनवद् न पुनः साधनीया इत्यर्थः, तेभ्यो नम इति योगः । ते च सामान्यतः कर्मादिसिद्धा अपि भवन्ति, यथोक्तम्—

" कम्मे सिप्पे य विज्जाए[3] मंते जोगे य आगमे ।
अत्थ जत्ता अभिप्पाए तवे कम्मक्खए इय ॥ " [ आवश्यकनिर्युक्तौ गा० ९२७ ]

तत्र कर्म[4] आचार्योपदेशरहितं भारवहन[5]-कृषि-वाणिज्यादि[6], तत्र सिद्धः, परिनिष्ठितः सह्यगिरिसिद्धवत् । शिल्पं त्वाचार्योपदेशजं तत्र सिद्धः, कोकासवर्धकिवत् । विद्या जप-होमादिना फलदा, मन्त्रो जपादिरहितः पाठमात्रसिद्धः । स्त्रीदेवताधिष्ठाना[7] वा विद्या, पुरुषदेवताधिष्ठानस्तु मन्त्रः । तत्र विद्यासिद्ध आर्यखपुटवत् , मन्त्रसिद्धः स्तम्भाकर्षकवत् । योग औषध[8]संयोगः, तत्र सिद्धो योगसिद्धः आर्यसमितवत् । आगमो द्वादशाङ्गं प्रवचनम्, तत्रासाधारणार्थावगमात् सिद्धः आगम-

१ दृश्यताम् आवश्यकसूत्रस्य कायोत्सर्गाध्ययनस्य हारिभद्री वृत्तिः पृ० ७८९ । आवश्यकचूर्णिः पृ० २६२ । ललितविस्तरा । धर्मसंग्रहवृत्तिः पृ० १६०-१६३ ॥ २ लोगग्ग०-खं. । लोगमग्ग०-सं ॥ लोअग्ग-मु. ॥ ३ विज्जाय-शां. खं. । विज्जाअ-मु. ॥ ४ विस्तरेण जिज्ञासुभिः हरिभद्रसूरि-मलयगिरिसूरिप्रभृतिभिर्विरचिता आवश्यकवृत्तयो विलोकनीयाः ॥ ५ ०वहण०-सं. ॥ ६ वणि०-खं. ॥ ७ ०ष्ठाना विद्या-मु. ॥ ८ औषधि०-मु. ॥

सिद्धो गौतमवत् । अर्थो धनम्, स इतरासाधारणो यस्य सोऽर्थसिद्धो मम्मणवणिग्वत् । जले स्थले वा यस्याविघ्ना यात्रा स यात्रासिद्धस्तुण्डिकवत् । यमर्थमभिप्रैति तमर्थं तथैव यः साधयति सोऽभिप्रायसिद्धोऽभयकुमारवत् । यस्य सर्वोत्कृष्टं तपः स तपःसिद्धो दृढप्रहारिवत् । यः कर्मक्षयेण ज्ञानावरणीयाद्यष्टकर्मनिर्मूलनेन सिद्धः स कर्मक्षयसिद्धो मरुदेवीवत् । अतः कर्मादिसिद्धव्यपोहेन कर्मक्षयसिद्धपरिग्रहार्थमाह—बुद्धेभ्यः, अज्ञाननिद्राप्रसुप्ते जगति अपरोपदेशेन जीवादिरूपं तत्त्वं बुद्धवन्तो बुद्धाः, बुद्धत्वानन्तरं कर्मक्षयं कृत्वा सिद्धा इत्यर्थः, तेभ्यः ।

एते च संसार-निर्वाणोभयपरित्यागस्थितिमन्तः कैश्चिदिष्यन्ते—

“न संसारे न निर्वाणे स्थितो भुवनभूतये ।
अचिन्त्यः सर्वलोकानां चिन्तारत्नाधिको महान्'॥ १ ॥” [ ]

इति वचनात् । एतन्निरासायाह—पारगतेभ्यः, पारं पर्यन्तं संसारस्य प्रयोजनव्रातस्य वा गताः पारगताः, तेभ्यः ।

एते च यदृच्छावादिभिः कैश्चिद्दरिद्रराज्याप्तिवदक्रमसिद्धत्वेनाभिधीयन्ते, तद्व्युदासार्थमाह—परम्परगयाणं, परम्परया चतुर्दशगुणस्थानक्रमारोहरूपया, अथवा कथञ्चित् कर्मक्षयोपशमादिसामग्र्या सम्यग्दर्शनं तस्मात् सम्यग्ज्ञानं तस्मात् सम्यक्चारित्रमित्येवम्भूतया गता मुक्तिस्थानं प्राप्ताः परम्परागताः, तेभ्यः ।

---

१ ०सार्थमाह–मु. ॥

॥ ६३९ ॥

एते च कैश्चिदनियतदेशा अभ्युपगम्यन्ते,

"यत्र क्लेशक्षयस्तत्र[1] विज्ञानमवतिष्ठते ।
बाधा च सर्वथाऽस्येह तदभावान्न जातुचित् ॥ १ ॥" [ ]

इति वचनात् । एतन्निरासायाह–लोकाग्रमुपगतेभ्यः लोकाग्रमीषत्प्राग्भाराख्यायाः पृथिव्या उपरिक्षेत्रं तदुप सामीप्येन तदपराभिन्नदेशतया निःशेषकर्मक्षयपूर्वकं गताः प्राप्ताः । उक्तं च—

'सिद्धाणं बुद्धाणं'-सूत्रव्याख्या

"जत्थ य एग्गो सिद्धो तत्थ[2] अणंता भवक्खयविमुक्का ।
अन्नोन्नमणाबाहं[3] चिट्ठंति सुही सुहं पत्ता ॥ १ ॥" [ आवश्यकनिर्युक्तौ गा० ९७५ ]

तेभ्यः ।

---

१ ०स्तद्विज्ञान०–शां. खं.॥ २ तत्थय अणंता–मु.॥ ३ गाथेयं ललितविस्तरायामित्थमेवोद्धृता, किन्तु दिव्यदर्शन-साहित्यसमित्या प्रकाशिताय ललितविस्तरायाम् "अन्नोन्नसमोगाढा पुट्ठा सव्वे य लोगंते ।" इति उत्तरार्धं प्रत्यन्तरपाठत्वेन निर्दिष्टं वर्तते इत्यपि ध्येयम् । गाथेयम् आचार्यश्री हरिभद्रसूरिविरचिते विंशतिविंशिकाप्रकरणे १९ तम्यां सिद्धविभक्तिविंशिकायां [ गा० २० ], २० तम्यां सिद्धसुखविंशिकायाम् [ गा. १८ ] अपि वर्तते । आवश्यकनिर्युक्तौ तु "जत्थ य एगो सिद्धो तत्थ अणंता भवक्खयविमुक्का । अन्नुन्नसमोगाढा पुट्ठा सव्वे अ लोगंते ॥ ९७५॥ ………… इअ सव्वकालतित्ता अउलं निव्वाणमुवगया सिद्धा । सासयमव्वाबाहं चिट्ठंति सुही सुहं पत्ता ॥ ९८६ ॥" इति पाठः ॥

ननु क्षीणकर्मणो जीवस्य कथं लोकाग्रं यावद् गतिः? उच्यते–पूर्वप्रयोगादियोगात्। यदाह–

पूर्वप्रयोगसिद्धेर्बन्धच्छेदादसङ्गभावाच्च ।
गतिपरिणामाच्च तथा सिद्धस्योर्ध्वं गतिः सिद्धा ॥ १ ॥ [प्रशमरतौ २९५]

ननु सिद्धिक्षेत्रात् परतोऽधस्तिर्यग् वा कस्मान्न गच्छन्ति? अत्राप्युक्तम्—

"नाधो गौरवविगमादसङ्गभावाच्च गच्छति विमुक्तः ।
लोकान्तादपि न परं प्लवक इवोपग्रहाभावात् ॥ १ ॥

योगप्रयोगयोश्चाभावात्तिर्यग् न तस्य गतिरस्ति ।
तस्मात् सिद्धस्योर्ध्वं ह्या लोकान्ताद्गतिर्भवति ॥ २ ॥" [प्रशमरतौ २९३–९४] इति ।

नमः सदा सर्वसिद्धेभ्यः। नमो नमोऽस्तु, सदा सर्वकालम्, सर्वसिद्धेभ्यः सर्वं साध्यं सिद्धं येषां ते सर्वसिद्धाः, तेभ्यः। अथवा सर्वसिद्धेभ्यः तीर्थसिद्धादिभेदेभ्यः, यथोक्तम्—

"तित्थसिद्धा १, अतित्थसिद्धा २, तित्थयरसिद्धा ३, अतित्थयरसिद्धा ४, सयंबुद्धसिद्धा ५, पत्तेयबुद्धसिद्धा ६, बुद्धबोहिअसिद्धा ७, थीलिंगसिद्धा ८, पुरिसलिंगसिद्धा ९, नपुंसकलिंगसिद्धा १०, सलिंगसिद्धा ११, अन्नलिंगसिद्धा १२, गिहिलिंगसिद्धा १३, एगसिद्धा १४, अणेगसिद्धा १५ ।" [प्रज्ञापनासूत्रे प्रथमपदे सू० १६]

॥ ६४१ ॥

तत्र तीर्थे चतुर्विधश्रमणसङ्घे उत्पन्ने सति ये सिद्धाः ते तीर्थसिद्धाः । १ ।

अतीर्थे जिनान्तरे साधुव्यवच्छेदे सति जातिस्मरणादिनाऽवाप्तापवर्गमार्गाः सिद्धाः अतीर्थसिद्धाः, मरुदेवीप्रभृतयो वा, तदा तीर्थस्याऽनुत्पन्नत्वात् । २ ।

तीर्थकरसिद्धाः तीर्थकरत्वमनुभूय सिद्धाः । ३ ।

अतीर्थकरसिद्धाः सामान्यकेवलित्वे सति सिद्धाः । ४ ।

स्वयंबुद्धाः सन्तो ये सिद्धाः ते स्वयंबुद्धसिद्धाः । ५ ।

प्रत्येकबुद्धाः सन्तो ये सिद्धाः ते प्रत्येकबुद्धसिद्धाः । ६ ।

स्वयंबुद्ध-प्रत्येकबुद्धयोश्च बोध्युपधि-श्रुत-लिङ्गकृतो विशेषः-स्वयंबुद्धा हि बाह्यप्रत्ययमन्तरेण बुध्यन्ते, प्रत्येकबुद्धास्तु बाह्यप्रत्ययेन वृषभादिना करकण्ड्वादिवत् । उपधिस्तु स्वयंबुद्धानां पात्रादिर्द्वादशधा, प्रत्येकबुद्धानां प्रावरणवर्जो नवविधः । स्वयंबुद्धानां पूर्वाधीतश्रुतेऽनियमः, प्रत्येकबुद्धानां तु नियमतो भवत्येव । लिङ्गप्रतिपत्तिस्तु स्वयंबुद्धानां गुरुसन्निधावपि भवति, प्रत्येकबुद्धानां तु देवता लिङ्गं प्रयच्छति ।

बुद्धा आचार्या अवगततत्त्वाः, तैर्बोधिताः सन्तो ये सिद्धाः ते बुद्धबोधितसिद्धाः । ७ ।

एते च सर्वेऽपि केचित् स्त्रीलिङ्गसिद्धाः, केचित् पुँल्लिङ्गसिद्धाः[1], केचित् नपुंसकलिङ्गसिद्धाः । ननु तीर्थकरा अपि किं स्त्रीलिङ्गसिद्धा भवन्ति ? भवन्त्येव[2], यदुक्तं सिद्धप्राभृते—

१ पुल्लिंग०-खं. सं. । पुलिंग०-शां. ॥ २ भवन्ति उच्यते, भवन्त्येव-मु० ॥

"सव्वत्थोवा तित्थयरिसिद्धा, तित्थयरितित्थे[1] नोतित्थयरिसिद्धा[2] (नोतित्थसिद्धा?) असंखेज्जगुणा, तित्थयरितित्थे[3]

१ अत्रेदमवधेयम्—निम्नदर्शितरूपा विविधाः पाठभेदा अत्रोपलभ्यन्ते। "तित्थदारमाह—थोवा तित्थगरीओ अतित्थसिद्धा य साहुणी साहू। कमसो संखा तित्थंकरा अणंता पुणो संखा ॥ १०० ॥ [टीका—] तित्थदारं ॥ थोवा तित्थगरीओ० गाहा। सव्वत्थोवा तित्थगरिसिद्धा १, तित्थगरितित्थे णोतित्थसिद्धा संखेज्जगुणा २, तित्थगरितित्थे णोतित्थगरिसिद्धाओ संखेज्जगुणा ३, तित्थगरितित्थे णोतित्थगरसिद्धा संखेज्जगुणा ४। तेहिंतो तित्थगरा अणंतगुणा, पुणो संखगुणा तिण्णि भंगा जहक्कमेणं ति दारं ॥ १०० ॥" इति सटीके सिद्धप्राभृते पाठः पृ० २३॥ "यत उक्तं सिद्धप्राभृते—'सव्वत्थोवा तित्थयरिसिद्धा, तित्थयरितित्थे णोतित्थयरसिद्धा असंखेज्जगुणा, तित्थयरितित्थे णोतित्थयरिसिद्धा असंखेज्जगुणाओ' [ ] इति" इति आचार्यश्रीहरिभद्रसूरि विरचितायां ललितविस्तरायां पाठः। "यत उक्तं सिद्धप्राभृते—सव्वत्थोवा तित्थगरीसिद्धा, तित्थगरितित्थे णोतित्थसिद्धा संखेज्जगुणा, तित्थगर(रि?)तित्थे णोतित्थगरिसिद्धाओ संखेज्जगुणाओ, तित्थगरितित्थे णोतित्थगरसिद्धा संखेज्जगुणा' [ ] इति" इति आचार्य श्री हरिभद्रसूरिविरचितायां नन्दीवृत्तौ पाठः। "इहानन्तरसिद्धाः सत्पदप्ररूपणा १ द्रव्यप्रमाण २ क्षेत्र ३ स्पर्शना ४ काला ५ ऽन्तर ६ भावा ७ ऽल्पबहुत्व ८ रूपैरष्टभिरनुयोगद्वारैः, परम्परसिद्धाः सत्पदप्ररूपणा १ द्रव्यप्रमाण २ क्षेत्र ३ स्पर्शना ४ काला ५ ऽन्तर ६ भावा ७ ऽल्पबहुत्व ८ सन्निकर्ष ९ रूपैर्नवभिरनुयोगद्वारैः क्षेत्रादिषु पञ्चदशसु द्वारेषु सिद्धप्राभृते चिन्तिताः, ततस्तदनुसारेण वयमपि विनेयजनानुग्रहार्थं लेशतश्चिन्तयामः [पृ० ११३] ……………… नोतीर्थसिद्धाः प्रत्येकबुद्धाः [पृ० १२२] ……………… तीर्थद्वारे सर्वस्तोकाः तीर्थकरीसिद्धाः, ततः तीर्थकरीतीर्थे प्रत्येकबुद्धसिद्धाः संख्येयगुणाः, तेभ्योऽपि तीर्थकरीतीर्थेऽतीर्थकरीसिद्धाः संख्येयगुणाः, तेभ्योऽपि तीर्थकरीतीर्थे एवातीर्थकरसिद्धाः संख्येयगुणाः, तेभ्यः तीर्थकरसिद्धा अनन्तगुणाः, तेभ्योऽपि तीर्थकरतीर्थे प्रत्येकबुद्धसिद्धाः संख्येयगुणाः, तेभ्योऽपि तीर्थकरतीर्थ एव साध्वीसिद्धाः संख्येयगुणाः, तेभ्योऽपि तीर्थकरतीर्थे एवातीर्थकरसिद्धाः संख्येयगुणाः

॥ ६४३ ॥

नोतित्थयरिसिद्धाओ[1] असंखेज्जगुणाओ, तित्थयरितित्थे[2] नोतित्थयरसिद्धा असंखेज्जगुणा " [ ] इति ।

नपुंसकलिङ्गसिद्धास्तु तीर्थंकरसिद्धा न भवन्त्येव, प्रत्येकबुद्धसिद्धास्तु पुंलिङ्गसिद्धा[3] एव । ८।९।१० ।

स्वलिङ्गेन रजोहरणादिना द्रव्यलिङ्गेन सिद्धाः स्वलिङ्गसिद्धाः । ११ ।

अन्येषां परिव्राजकादीनां लिङ्गेन सिद्धा अन्यलिङ्गसिद्धाः । १२ ।

गृहिलिङ्गसिद्धा मरुदेव्यादयः । १३ ।

'सिद्धाणं बुद्धाणं'-सूत्रव्याख्या

एकैकस्मिन् समये एकाकिनः सिद्धाः एकसिद्धाः । १४ ।

एकस्मिन् समये अष्टोत्तरशतं यावत् सिद्धा अनेकसिद्धाः । १५ । यत उक्तम्—

---

१ ०यरसिद्धाओ-मु.॥ २ तित्थयतित्थे-खं. । 'तित्थयरतित्थे णोतित्थयरसिद्धा संखेज्जगुणा' इति धर्मसंग्रहवृत्तौ [पृ० १६१] पाठः । दृश्यतां पृ० ६४४ पं० ११॥ ३ पुल्लिंग०-खं. सं. ॥

---

[पृ० १२६]" इति मलयगिरिसूरिविरचितायां नन्दीसूत्रटीकायाम् । "यत उक्तं सिद्धप्राभृते—सव्वत्थोवा तित्थयरिसिद्धा, तित्थयरितित्थे नोतित्थयरसिद्धा असंखेज्जगुणा, तित्थयरितित्थे नोतित्थयरिसिद्धाओ असंखेज्जगुणाओ, तित्थयरतित्थे णोतित्थयरसिद्धा संखेज्जगुणा [ ]" इति धर्मसंग्रहवृत्तौ पृ० १६१। २ नोतित्थयरिसिद्धा-खं. सं. ॥ "णोतित्थसिद्धा" इति तु सिद्धप्राभृतादौ पाठः । दृश्यतामुपरितनं टिप्पणम् ॥ ३ ०यरतित्थे-खं. । ०यरेतित्थे-सं. ॥

"वत्तीसा[1] अडयाला सट्ठी बावत्तरी अ बोधव्वा[2] ।

चुलसीई[3] छण्णउई दुरहियअट्ठोत्तरसयं[4] च ॥ १ ॥" [जीवसमासे २४९, बृहत्संग्रहण्याम् ३३३]

नन्वेते सिद्धभेदा आद्ययोस्तीर्थसिद्धा-ऽतीर्थसिद्धयोरेवान्तर्भवन्ति, तीर्थकरसिद्धादयो हि तीर्थसिद्धा वा स्युरतीर्थसिद्धा वेति। सत्यम्, सत्यप्यन्तर्भावे पूर्वभेदद्वयादेवोत्तरोत्तरभेदाप्रतिपत्तेरज्ञातज्ञापनार्थं[5] भेदाभिधानमदुष्टमिति। इत्थं सामान्येन सर्वसिद्धनमस्कारं कृत्वा आसन्नोपकारित्वाद्वर्तमानतीर्थाधिपतेः श्रीमन्महावीरवर्धमानस्वामिनः स्तुतिं करोति—

जो देवाण वि देवो जं देवा पंजली नमंसंति ।

तं देवदेवमहिअं सिरसा वंदे महावीरं ॥ २ ॥

यो भगवान् महावीरो देवानामपि भवनवास्यादीनां पूज्यत्वाद् देवः, अत एवाह—यं देवाः प्राञ्जलयो विनयरचितकरपुटाः[6] सन्तो नमस्यन्ति प्रणमन्ति तं भगवन्तं देवदेवैः शक्रादिभिर्महितं पूजितं वन्दे शिरसा उत्तमाङ्गेन, आदरप्रदर्शनार्थं चैतत्। तं कम्? महावीरम्, विशेषेण ईरयति कर्म गमयति याति वा शिवमिति वीरः, महांश्चासौ वीरश्च महावीरस्तम्।

---

१ द्वात्रिंशदष्टाचत्वारिंशत् षष्टिः द्वासप्ततिश्च बोद्धव्या। चतुरशीतिः षण्णवतिः द्व्यधिकमष्टोत्तरशतं च ॥ २ बोद्धव्वा–मु. ॥ ३ चुलसीय। अ छ०–शां.। चुलसी अ छ०–सं. ॥ ४ दुरहिअमट्ठो०–मु. ॥ ५ ०त्तर २ भेदा०–खं.। एतदनुसारेण ०त्तरोत्तरभेद०—इति पाठः प्रतीयते, ललितविस्तरायामप्ययमेव पाठः। अतोऽयं पाठोऽत्रास्माभिरादृतः। ०त्तरभेदा०–शां. सं. मु. ॥ ६ ०करसम्पुटाः–मु. ॥

इत्थं स्तुतिं कृत्वा पुनः परोपकाराय आत्मभाववृद्धये च फलप्रदर्शनपरमिदं पठति—

[1]एक्को वि नमोक्कारो जिणवरवसहस्स वद्धमाणस्स ।
संसारसाग[2]राओ तारेइ नरं व नारिं वा ॥ ३ ॥

एकोऽप्यासतां बहवः, नमस्कारो द्रव्यभावसंकोचलक्षणः, जिनवरवृषभाय, जिनाः श्रुतावधिजिनादयः, तेषां वराः केवलिनः, तेषां वृषभः तीर्थकरनामकर्मोदयादुत्तमो जिनवरवृषभः, तस्मै । स च ऋषभादिरपि भवतीत्याह—वर्धमानाय । यत्नात् कृतः सन्निति शेषः । किम्? संसरणं संसारस्तिर्यग्नरनारकामरभवा[3]नुभवलक्षणः, स एव भवस्थिति-कायस्थितिभ्यामनेकधावस्थानेनालब्धपारत्वात् सागर इव संसारसागरः, तस्मात् तारयति पारं नयतीत्यर्थः । कमित्याह—नरं वा नारीं वा । नरग्रहणं पुरुषोत्तमधर्मप्रतिपादनार्थम्, नारीग्रहणं तासामपि तद्भव एव संसारक्षयो भवतीति ज्ञापनार्थम् । यथोक्तं यापनीयतन्त्रे[4]—

'सिद्धाणं बुद्धाणं'-सूत्रव्याख्या

"नो खलु इत्थी अजीवो, न यावि अभव्वा, न यावि दंसणविरोहिणी, नो [5]अमाणुसा, नो [6]अणायरिउप्पन्ना, नो असंखेज्जाउआ, नो अइक्कूरमई, नो [7] न उवसंतमोहा, नो न सुद्धाचारा, नो असुद्धबुंदी, नो ववसायवज्जिआ, नो अपुव्वकरणविरोहिणी, नो नवगुणट्ठाणरहिआ, नो अजोग्गा लद्धीए, नो अकल्लाणभायणं ति कहं न उत्तमधर्म्म[8]साहगा?" [ ] इति ।

१ इक्को वि नमु०-मु. ॥ २ ०सायराओ-शां. सं. ॥ ३ ०नुभाव०-मु. ॥ ४ अस्य यापनीयतन्त्रपाठस्य विस्तरेण व्याख्या ललितविस्तरायां वर्तते ॥ ५ अमाणुस्सा-मु. ॥ ६ अणायरियउप्पन्ना-मु. । 'अणारिउप्पत्ती'-ललितविस्तरा । ७ नो अणुवसन्तमोहा नो असुद्धाचारा नो असुद्धबोंदी-मु. ॥ ८ ०धम्मस्स साह०-मु. । "धम्मसाहिग त्ति"-ललितविस्तरा ।

अयमत्र भावः—सति सम्यग्दर्शने परया भावनया क्रियमाण एकोऽपि नमस्कारस्तथाभूतस्याध्यवसायस्य हेतुर्भवति यथाभूतात् श्रेणिमवाप्य निस्तरति भवोदधिमिति, अतः कार्ये कारणोपचारादेवमुच्यते। न च चारित्रस्य वैफल्यम्, तथाभूताध्यवसायस्यैव चारित्ररूपत्वादिति। एतास्तिस्रः स्तुतयो गणधरकृतत्वाद् नियमेनोच्यन्ते। केचित्तु अन्ये अपि स्तुती पठन्ति, यथा—

उज्जिंतसेलसिहरे दिक्खा नाणं निसीहिया जस्स।
तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि ॥ ४ ॥

चत्तारि अट्ठ दस दो[1] य वंदिया जिणवरा चउवीसं[2]।
परमट्ठनिट्ठिअट्ठा[3] सिद्धा सिद्धिं मम दिसंतु[4] ॥ ५ ॥

सुगमे। एवमेतत् पठित्वोपचितपुण्यसम्भार उचितेष्वौचित्येन प्रवृत्तिरिति ज्ञापनार्थं पठति पठन्ति वा—

वेयावच्चगराणं[5] संतिगराणं सम्मदिट्ठिसमाहिगराणं करेमि काउस्सग्गं।

वैयावृत्यकराणां प्रवचनार्थं व्यापृतभावानां गोमुखयक्षा-ऽप्रतिचक्राप्रभृतीनाम्, शान्तिकराणां सर्वलोकस्य, सम्यग्दृष्टिविषये समाधिकराणाम्, एषां सम्बन्धिनं[6] षष्ठ्याः सप्तम्यर्थत्वादेतद्विषयमेतान् वा आश्रित्य करोमि कायोत्सर्गम्।

१ दो वंदिआ-खं. ॥ २ चउव्वीसं-शां. ॥ ३ परमत्थनि०-खं. ॥ ४ दिसंति-शां. ॥ ५ ०च्चकराणं-शां. खं. ॥ ६ ०न्धिनां-मु. ॥

'सिद्धाणं बुद्धाणं'-सूत्रव्याख्या

अत्र[1] च वन्दनादिप्रत्ययमित्यादि न पठ्यते, अपि तु अन्यत्रोच्छ्वसितेनेत्यादि, तेषामविरतत्वात्। इत्थमेव तद्भावद्वृद्धेरुपकारदर्शनात्। एतद्व्याख्या च पूर्ववत्। नवरं स्तुतिर्वैयावृत्यक[2]राणाम्।

पुनः[3] स ते वा विधिना उपविश्य पूर्ववत् प्रणिपातदण्डकं पठित्वा मुक्ताशुक्तिमुद्रया प्रणिधानं[4] करोति कुर्वन्ति वा। यथा–

जय वीयराय! जगगुरु[5]! होउ ममं[6] तुह पहावओ[7] भयवं!।
भवनिव्वेओ मग्गाणुसारिया इट्ठफलसिद्धी ॥ १ ॥

लोगविरुद्धच्चाओ गुरुजणपूआ परत्थकरणं च।
सुहगुरुजोगो तव्वयणसेवणा आभवमखंडा ॥ २ ॥

जय वीतराग! जगद्गुरो! इति भगवतस्त्रिलोकनाथस्य बुद्धौ[9] सन्निधापनार्थमामन्त्रणम्, भवतु जायताम्, ममेत्यात्मनिर्देशः, तव प्रभावतः तव सामर्थ्येन, भगवन्निति पुनः सम्बोधनं भक्त्यतिशयख्यापनार्थम्। किं तदित्याह–भवनिर्वेदः संसारनिर्वेदः। न हि भवादनिर्विण्णो मोक्षाय यतते, अनिर्विण्णस्य तत्प्रतिबन्धान्मोक्षे यत्नोऽयत्न एव, निर्जीवक्रियातुल्यत्वात्।

---

१ अत्र वन्दना०–मु. ॥ २ ०काराणाम्–खं. ॥ ३ पुनः स ते ना विधिना–खं.। पुनस्तेनैव विधिना–मु. शां.। "पुनः स ते वा संवेगभावितमतयो विधिना उपविश्य ·········प्रणिधानं करोति कुर्वन्ति वा"–ललितविस्तरा॥ ४ ०धानं कुर्वन्ति। यथा–मु.॥ ५ जयगुरु–शां. खं.॥ ६ ममं–मु.॥ ७ पभावओ–मु. ८ पूया–शां.॥ ९ बुद्ध्यां सन्निधानार्थं०–मु.॥

तथा मार्गानुसारिता असद्ग्रहविजयेन तत्त्वानुसारिता, तथा इष्टफलसिद्धिरभिमतार्थनिष्पत्तिः ऐहलौकिकी, ययोपगृहीतस्य चित्तस्वास्थ्यं भवति तस्माच्चोपादेयप्रवृत्तिः। तथा लोकविरुद्धत्यागः सर्वजननिन्दादिलोकविरुद्धानुष्ठानवर्जनम्। यदाह—

"[1]सव्वस्स चेव निंदा विसेसओ तह य गुणसमिद्धाणं।
उजुधम्मकरणहसणं रीढा जणपूयणिज्जाणं ॥ १ ॥
बहुजणविरुद्धसंगो [3]देसादाचारलंघणं चेव।
उव्वणभोओ अ तहा [4]दाणाइ वि पयडमन्ने उ ॥ २ ॥
साहुवसणम्मि तोसो सइ सामत्थम्मि अपडियारो अ।
[5]एमाइयाइं इत्थं लोगविरुद्धाइं णेआइं ॥ ३ ॥" [ पञ्चाशके २।८–१० ]

गुरुजनस्य पूजा उचितप्रतिपत्तिर्गुरुजनपूजा, गुरवश्च यद्यपि धर्माचार्या एवोच्यन्ते तथापीह मातापित्रादयोऽपि गृह्यन्ते। यदुक्तम्—

१ सर्वस्य चैव निन्दा विशेषतस्तथा च गुणसमृद्धानाम्। ऋजुधर्मकरणहसनं हीला जनपूजनीयानाम् ॥ १॥ बहुजनविरुद्धसङ्गो देशाद्याचारलङ्घनं चैव। उल्वणभोगश्च तथा दानाद्यपि प्रकटमन्ये तु ॥ २॥ साधुव्यसने तोषः सति सामर्थ्येऽप्रतिकारश्च। एवमादिकानि अत्र लोकविरुद्धानि ज्ञेयानि ॥ ३॥ २ ०द्धाण–खं. सं. ॥ ३ देसाचारस्स लंघणं चेव–मु. शां. ॥ ४ दाणाइवियडमन्नेओ–मु० ॥ ५ एमाइयाइ–सं. खं. ॥ ६ ०द्धाय णेआइ–खं. ॥

॥ ६४९ ॥

"माता पिता कलाचार्य एतेषां ज्ञातयस्तथा ।
वृद्धा धर्मोपदेष्टारो गुरुवर्गः सतां मतः ॥ १ ॥" [ योगबिन्दौ गा० ११० ]

परार्थकरणं सत्त्वार्थकरणं जीवलोकसारं पौरुषचिह्नमेतत्। सत्येतावति लौकिके सौन्दर्ये लोकोत्तरधर्माधिकारी भवतीत्याह—शुभगुरुयोगो विशिष्टचारित्रयुक्ताचार्यसम्बन्धः, तथा तद्वचनसेवा सद्गुरुवचनसेवना, न जातुचिदयमहितमुपदिशति, आभवमासंसारमखण्डा सम्पूर्णा। इदं च प्रणिधानं न निदानरूपम्, प्रायेण निस्सङ्गाभिलाषरूपत्वात्। एतच्चाप्रमत्तसंयतादर्वाक् कर्तव्यम्, अप्रमत्तादीनां मोक्षेऽप्यनभिलाषात्। तदेवंविधशुभफलप्रणिधानपर्यन्तं चैत्यवन्दनम् ॥ १२३ ॥

इदानीमनन्तरकरणीयमाह—

**ततो गुरूणामभ्यर्णे प्रतिपत्तिपुरःसरम् ।**
**विदधीत विशुद्धात्मा प्रत्याख्यानप्रकाशनम् ॥ १२४ ॥**

ततोऽनन्तरं गुरूणां धर्माचार्याणां देववन्दनार्थमागतानां स्नात्रादिदर्शनधर्मकथाद्यर्थं तत्रैव स्थितानामभ्यर्णे उचिते समीपे, उचितत्वं चार्धचतुर्थहस्तप्रमाणात् क्षेत्राद् बहिरवस्थानम्, प्रतिपत्तिर्व्याख्यास्यमाना वन्दनकादिरूपा वा, तत्पुरःसरं तत्पूर्वकम्, विदधीत कुर्यात्, विशुद्धात्मा निर्मलचित्तो न तु दम्भादियुक्तः, प्रत्याख्यानस्य देवसमीपे कृतस्य प्रकाशनं गुरोः पुरतः प्रकटनम्; त्रिविधं हि प्रत्याख्यानविधानमात्मसाक्षिकं देवसाक्षिकं गुरुसाक्षिकं च ॥ १२४ ॥

१ देवसाक्षिकप्रत्याख्यानस्य-खं. ॥

प्रतिपत्तिपुरःसरमित्युक्तमिति गुरुप्रतिपत्तिं श्लोकद्वयेन दर्शयति—

अभ्युत्थानं तदालोकेऽभियानं च तदागमे ।
शिरस्यञ्जलिसंश्लेषः स्वयमासनढौकनम् ॥ १२५ ॥

आसनाभिग्रहो भक्त्या वन्दना पर्य्युपासनम् ।
तद्यानेऽनुगमश्चेति प्रतिपत्तिरियं गुरोः ॥ १२६ ॥

अभ्युत्थानं ससम्भ्रममासनत्यागः तदालोके गुरूणामालोकने सति, अभियानमभिमुखं गमनं तदागमे गुर्वागमने[1], शिरसि मस्तके गुरुदर्शनसमकालमञ्जलिसंश्लेषः करकोरककरणं 'नमो खमासमणाणं' ति वचनोच्चारपूर्वकम्, स्वयमित्यात्मना न तु परप्रेषणेन आसनढौकनमासनसन्निधापनम् ॥ १२५ ॥

आसनाभिग्रहः आसन उपविष्टेषु गुरुषु स्वयमासितव्यमित्यभिग्रहः आसनाभिग्रहः, भक्त्या भक्तिपूर्वकं वन्दना पञ्चविंशत्यावश्यकविशुद्धं वन्दनकम्[2], स्थानस्थितानां च गमनादिव्याकुलत्वाभावे पर्य्युपासनं सेवा, तेषां गुरूणां याने गमनेऽनुगमनं पृष्ठतः कतिपयपदान्यनुसरणम्[3]। इयं प्रतिपत्तिरुपचारविनयरूपा गुरोर्धर्माचार्यस्य ॥ १२६ ॥

१ गुर्वागमे-मु. शां. ॥ २ वन्दनम्-मु. ॥ ३ ०पदाद्यनु०-शां. । ०पदानु०-मु. ॥

ततो गुरुपार्श्वे धर्मदेशनां श्रुत्वा—

ततः प्रतिनिवृत्तः सन् स्थानं गत्वा यथोचितम् ।
सुधीर्धर्माविरोधेन विदधीतार्थचिन्तनम् ॥ १२७ ॥

ततो देवगृहात् प्रतिनिवृत्तो व्यावृत्तः सन् यथोचितं स्थानं गत्वा, यथोचितमिति यदा राजादिस्तदा धवलगृहं यद्यमात्यादिस्तदा करणम् अथ वणिगादिस्तदा आपणमिति, सुधीर्बुद्धिमान् विदधीत अर्थचिन्तनमर्थोपायचिन्तां धर्माविरोधेनेति धर्मस्य जिनधर्मस्य अविरोधेन अबाधया। अत्र चार्थचिन्तनमित्यनुवाद्यं तस्य स्वतःसिद्धत्वात्, धर्माविरोधेनेति विधेयमप्राप्तत्वात्। धर्माविरोधश्च राज्ञां दरिद्रेश्वरयोर्मान्या-ऽमान्ययोरुत्तम-नीचयोर्माध्यस्थ्येन न्यायदर्शनात्, नियोगिनां च राजार्थ-प्रजार्थसाधनेन, वणिजां च कूटतुलाकूटमानादिपरिहारेण पञ्चदशकर्मादानपरिहारेण च बोद्धव्यः ॥ १२७ ॥

ततो माध्याह्निकीं पूजां कुर्यात् कृत्वा च भोजनम् ।
तद्विद्भिः सह शास्त्रार्थरहस्यानि विचारयेत ॥ १२८ ॥

ततस्तदनन्तरं माध्याह्निकीं मध्याह्नकालभाविनीं पूजां जिनसपर्य्यां कुर्यात्, कृत्वा विधाय च भोजनमित्यनुवादः। माध्याह्निकीपूजा-भोजनयोश्च न कालनियमः। तीव्रबुभुक्षोर्हि बुभुक्षाकालो भोजनकाल इति रूढेर्मध्याह्नादर्वागपि गृहीत-

१ ०बुभुक्षोहि-शां खं. सं. ॥

प्रत्याख्यानं तीरयित्वा देवपूजापूर्वकं भोजनं कुर्वन्न दुष्यति । अत्र चायं विधिः—

"जिणपूओचियदाणं परियणसंभालणा उचियकिच्चं ।
ठाणुवएसो य तहा पच्चक्खाणस्स संभरणं ॥ १ ॥" [ ]

तथा भोजनानन्तरं सम्भवतो ग्रन्थिसहितादेः प्रत्याख्यानस्य करणम्, प्रमादपरिजिहीर्षोर्हि प्रत्याख्यानं विना न युक्तं क्षणमप्यासितुम् । शास्त्रार्थानां रहस्यानि ऐदंपर्य्याणि विचारयेत् इदमित्थं भवति नेति वा सम्प्रधारयेत्, कथं? सह सार्धम्, कैः? तद्विद्भिः, तच्छास्त्रार्थरहस्यं विदन्ति ये तैः, गुरुमुखात् श्रुतान्यपि शास्त्रार्थरहस्यानि परिशीलनाविकलानि न चेतसि सुदृढप्रतिष्ठानि भवन्तीति कृत्वा ॥ १२८ ॥

ततश्च सन्ध्यासमये कृत्वा देवार्चनं पुनः ।
कृतावश्यककर्मा च कुर्यात् स्वाध्यायमुत्तमम् ॥ १२९ ॥

ततस्तदनन्तरं यो द्विर्भुङ्क्ते स विकालसमये अन्त्यमुहूर्तादर्वाग्[2] भोजनं कृत्वा सन्ध्यासमये पुनस्तृतीयवारं देवार्चनं कृत्वा साधुसमीपं गत्वा भूमिकौचित्येन षड्विधावश्यकं सामायिक-चतुर्विंशतिस्तव-वन्दनक-प्रतिक्रमण-कायोत्सर्ग-प्रत्याख्यान-लक्षणं कुर्य्यात् । तत्र सामायिकमार्तरौद्रध्यानपरिहारेण धर्मध्यानकरणेन[3] शत्रु-मित्र-तृण-काञ्चनादिषु समता, तच्च पूर्वमेवोक्तम्[4] ।

१ जिनपूजोचितदानं परिजनसम्भालना उचितकृत्यम् । स्थानोपदेशश्च तथा प्रत्याख्यानस्य संस्मरणम् ॥ २ अन्तर्मुहू०–मु. ॥ ३. ध्यानपरिकरणेन–मु. ॥ ४ पृ० ४७६ पं० ८ ॥

वन्दनक-सूत्रस्य विस्तरेण व्याख्या

चतुर्विंशतेस्तीर्थकराणां नामोत्कीर्तनपूर्वकं स्तवो गुणकीर्तनम्, तस्य च कायोत्सर्गे[1] मनसाऽनुध्यानम्, शेषकालं व्यक्तवर्णं[2] पाठः। अयमपि पूर्वमुक्तः[3]। वन्दनं वन्दनयोग्यानां[4] धर्माचार्याणां पञ्चविंशत्यावश्यकविशुद्धं द्वात्रिंशद्दोषविरहितं[5] नमस्करणम्, तत्र पञ्चविंशतिरावश्यकानि यथा—

"दुओणयं[6] अहाजायं कीकम्मं[7] बारसावयं।
चउसिरं तिगुत्तं च दुपवेसं एगनिक्खमणं ॥ १ ॥" [आवश्यकनिर्युक्तौ १२१६] इति ॥

[8]द्वे अवनमने 'इच्छामि खमासमणो वंदिउं जावणिज्जाए[9] निसीहियाए' इत्यभिधाय गुरोश्छन्दानुज्ञापनाय[10] प्रथममवनमनम्। १।

१ ०त्सर्गेण-खं.॥ २ ०वर्णपाठः-सं. मु.॥ ३ पृ० ६२२ पं. १॥ ४ वन्दनायो०-मु.॥ ५ ०षरहितं-मु.॥ ६ द्व्यवनतं यथाजातं कृतिकर्म द्वादशावर्तम्। चतुःशिरः त्रिगुप्तं च द्विप्रवेशम् एकनिष्क्रमणम्॥ ७ कियकम्मं-मु.। किइकम्मं-आवश्यकनिर्युक्तौ॥ ८ इत आरभ्य सर्वस्य वन्दनकप्रकरणस्य तुला आवश्यकसूत्रस्य हारिभद्रयां वृत्तौ [पृ० ५४२-५४९], धर्मसंग्रहवृत्तौ [पृ० १७०-१७९], आवश्यकचूर्णौ [पृ० ४१-४९] च यथायोगं द्रष्टव्या। प्रवचनसारोद्धारेऽपि [गा० ९८] गाथेयमुद्धृता तद्वृत्तौ व्याख्याता च। विचारसारेऽपि गाथेयं ७२९ क्रमाङ्के वर्तते॥ ९ जावणजाए-खं.। जावणिजाए-शां.॥ १० अत्रेदमवधेयम्-अत्र वन्दनकप्रकरणे हरिभद्रसूरिपादैः सर्वत्र 'छन्दस्' शब्द एव प्रयुक्तः। हेमचन्द्रसूरिपादास्तु 'छन्द-' शब्दं प्रायशः प्रयुञ्जन्ति, स्वोपज्ञटीकायुते अभिधानचिन्तामणौ अपि "छन्दोऽभिप्राय आकूतं मतभावाशया अपि। ......... ॥१३८३॥ चन्दति आह्लादयति छन्दः "अच् [सि० ५।१।४९]" इत्यच्, पृषोदरादित्वात् छत्वम्" इत्यत्र अकारान्तं 'छन्द'शब्दं निर्दिशन्ति च ॥

यदा पुनः कृतावर्तो निष्क्रान्त इच्छामीत्यादिसूत्रमभिधाय पुनश्छन्दोऽनुज्ञापनायैव[1] तदा द्वितीयम् । २ ।

तथा यथाजातम्, जातं जन्म, तच्च द्वेधा—प्रसवः[2] प्रव्रज्याग्रहणं च । तत्र प्रसवकाले रचितकरसंपुटो जायते प्रव्रज्याकाले च गृहीतरजोहरणमुखवस्त्रिक इति यथा जातमस्य स यथाजातस्तथाभूत एव वन्दते इति वन्दनमपि यथाजातम् ॥ ३ ॥

तथा द्वादशावर्ताः कायचेष्टाविशेषा गुरुचरणन्यस्तहस्तशिरःस्थापनरूपा[3] यस्मिंस्तद् द्वादशावर्तम् । इह च प्रथमप्रविष्टस्य 'अहोकायं' इत्यादि सूत्रोच्चारणगर्भाः षडावर्ताः, निष्क्रम्य पुनः प्रविष्टस्याऽपि त एव षडिति द्वादश ॥ १५ ॥

चत्वारि शिरांसि यस्मिन् तच्चतुःशिरः, प्रथमप्रवेशे क्षामणाकाले शिष्याचार्ययोरवनमच्छिरोद्वयम्, निष्क्रम्य पुनः प्रवेशे तथैव च शिरोद्वयम् । १९ ।

त्रिगुप्तं मनोवाक्कायकर्मभिर्गुप्तम् । २२ ।

तथा प्रथमोऽनुज्ञाप्य प्रवेशो द्वितीयः पुनर्निर्गत्य प्रवेश इति द्वौ प्रवेशौ यत्र तद् द्विप्रवेशम् । २४ ।

एकं निष्क्रमणमावश्यिक्या[4] निर्गच्छतो यत्र तदेकनिष्क्रमणम् । २५ ।

---

१ हस्तलिखितादर्शेषु अत्र 'पुनश्छन्दोऽनुज्ञापनायैव' इत्येव पाठः । अन्यत्र तु सर्वत्र 'छन्द'शब्द एव प्रयुक्तो हेमचन्द्रसूरिपादैः । दृश्यतां पृ० ६५४ टि० १० ॥ २ प्रभवः-मु॰ ॥ ३ स्थापनारूपा-मु. शां. । धर्मसंग्रहवृत्तौ [पृ० १७०] आवश्यकहारिभद्रयां [पृ० ५४३] च ॥ ४ ०वश्यक्या-सं. मु. आवश्यकहारिभद्रयां च पृ० ५४३ ।

॥ ६५५ ॥

द्वात्रिंशद्दोषा यथा—

"[1]अणाढियं च थड्ढं च पविद्धं परिपिंडियं ।
[2]टोलगइ अंकुसं [3]चेअ तहा कच्छभरिंगिअं ॥ १ ॥
[4]मच्छोव्वत्तं [5]मणसा पउट्ठं तह य वेइयाबद्धं।
भयसा चेव भयंतं मेत्ती-गारव-कारणा ॥ २ ॥
तेणिअं [6]पडेणिअं चेव रुट्ठं तज्जियमेव य ।
सढं च हीलिअं चेव तहा [7]विपलिउंचिअं ॥ ३ ॥
दिट्ठमदिट्ठं च तहा सिंगं च करमोअणं ।
आलिद्धमणालिद्धं ऊणं उत्तर[8]चूलियं ॥ ४ ॥

---

१ एतद् गाथापञ्चकं प्रवचनसारोद्धारेऽपि [ गा० १५०–१५४ ] वर्तते, चतुर्दशभिर्गाथाभिः [ गा० १५५–१७३ ] तत्रैव तद्व्याख्यापि वर्तते; तद्वृत्तावपि विस्तरेण [ पृ० ३५–३८ ] व्याख्यातमस्ति। विचारसारेऽपि गा० ७४१–७४५॥ २ टोलग्गइ-खं। टोलगाइ-सं.॥ ३ चेव-मु. आवश्यकनिर्युक्तौ च॥ ४ मच्छोवत्तं-सं.॥ ५ मणसा य पउट्ठं-मु.। ६ पडिणिअं-सं. आवश्यकनिर्युक्तौ च। पडणीअं-मु. ॥ ७ विप्पलि०-खं. सं.॥ ८ ०रभूमिअ-शां. ॥

मूअं च ढड्ढरं[1] चेव चुडुलिं[2] च अपच्छिमं ।
बत्तीसदोसपरिसुद्धं किइकम्मं पउंजए ॥ ५ ॥" [आवश्यकनिर्युक्तौ १२२१–१२२५][3]

अनादृतम्, सम्भ्रमरहितं वन्दनम् । १ ।

स्तब्धम्, मदाष्टकवशीकृतस्य वन्दनम् । २ ।

प्रविद्धम्, वन्दनं ददत एव पलायनम् । ३ ।

परिपिण्डितम्, प्रभूतानां युगपद्वन्दनम्, यद्वा कुक्ष्योरुपरि[4] हस्तौ व्यवस्थाप्य परिपिण्डितकरचरणस्याऽव्यक्तसूत्रोच्चारणपुरःसरं वन्दनम् । ४ ।

टोलगति, तिड्डवदुत्प्लुत्योत्प्लुत्य विसंस्थुलं[5] वन्दनम् । ५ ।

अङ्कुशम्, उपकरणे चोलपट्टककल्पादौ[6] हस्ते वा अवज्ञया समाकृष्य अङ्कुशेन गजस्येवाचार्यस्योर्ध्वस्थितस्य शयितस्य प्रयोजनान्तरव्यग्रस्य वा वन्दनकार्थमासने उपवेशनम् । न हि पूज्याः कदाचिदप्याकर्षणमर्हन्ति, अविनयत्वादस्य । यद्वा रजोहरणमङ्कुशवत् करद्वयेन गृहीत्वा वन्दनम् । यदि वाऽङ्कुशाक्रान्तस्य हस्तिन इव शिरोनमनोन्नमने कुर्वाणस्य वन्दनम् ।६।

१ चेअ–सं.॥ २ चुडुलिं–खं.॥ आवश्यकनिर्युक्तौ 'चुडुलिं' इति पाठः, हारिभद्रयां वृत्तौ तु [पृ० ५४४] "चुडुली ति उल्कामिव" इति व्याख्यातम् ॥ 'चुडलियं च' इति धर्मसंग्रहवृत्तौ [पृ० १७२] पाठः ॥ 'चुडुलीयं च' इति प्रवचनसारोद्धारे [गा० १५४] पाठः ॥ ३ हारिभद्रीवृत्तियुते त्वावश्यकनिर्युक्तिग्रन्थे १२०७–१२११ गाथाङ्कानि॥ ४ कुक्षेरुपरि–मु.॥ ५ विशंस्थुलं–खं. सं.॥ ६ ०पट्टकल्पादौ–मु.॥

कच्छपरिङ्गितम्, ऊर्ध्वस्थितस्य 'तेत्तीसन्नयराए'[1] इत्यादिसूत्रमुच्चारयत उपविष्टस्य वा 'अहोकायं'[2] इत्यादिसूत्रमुच्चारयतोऽग्रतोऽभिमुखं पश्चादभिमुखं च रिङ्गतश्चलतो वन्दनम् । ७ ।

मत्स्योद्वृत्तम्, उत्तिष्ठन्निविशमानो वा जलमध्ये मत्स्य इवोद्वर्तते उद्वेल्लति[3] यत्र तत् । यद्वा एकं वन्दित्वा द्वितीयस्य साधोर्द्रुतं द्वितीयपार्श्वेन रेचकावर्तेन मत्स्यवत् परावृत्य वन्दनम् । ८ ।

वन्दनकसूत्रस्य विस्तरेण व्याख्या

मनसा प्रदुष्टम्, शिष्यस्तत्सम्बन्धी वा गुरुणा किञ्चित् परुषमभिहितो यदा भवति तदा मनसो दूषितत्वाद् मनसा प्रदुष्टम् । यद्वा वन्द्यो हीनः केनचिद्गुणेन, ततोऽहमेवंविधेनाऽपि वन्दनं दापयितुमारब्ध इति चिन्तयतो वन्दनम् । ९ ।

वेदिकाबद्धम्, जानुनोरुपरि हस्तौ निवेश्य अधो वा पार्श्वयोर्वा उत्सङ्गे वा जानु करद्वयान्तः कृत्वा वा इति पञ्चभिर्वेदिकाभिर्बद्धं युक्तं वन्दनम् । १० ।

बिभ्यत्, 'सङ्घात् कुलात् गच्छात् क्षेत्राद्वा निष्कासयिष्येऽहम्'[4] इति भयाद् वन्दनम् । ११ ।

भजमानम् 'भजते माम्, सेवायां पतितो मम, अग्रे वा मम[5] भजनं करिष्यति, अतोऽहमपि[6] वन्दनसत्कं निहोरकं निवेशयामि' इति बुद्ध्या वन्दनम् । १२ ।

मैत्रीतः, मम मित्रमाचार्य इति आचार्येणेदानीं मैत्री भवत्विति वा वन्दनम् । १३ ।

१ तित्तिसन्नयरा इत्यादि-मु. । तेतीसन्नयरा इत्यादि-सं. ॥ २ कायं काय इत्यादि-मु. ॥ ३ उद्वेलते-मु. ॥ ४ निःका०-खं. सं. ॥ ५ मम-नास्ति शां. ॥ ६ ततो-मु. ॥

गौरवात्, वन्दनकसामाचारीकुशलोऽहमिति गर्वादन्येऽप्यवगच्छन्तु मामिति यथावदावर्तादीनाराधयतो वन्दनम्।१४।

कारणाद् ज्ञानादिव्यतिरिक्ताद्वस्त्रादिलाभहेतोर्वन्दनम्, यद्वा ज्ञानादिनिमित्तमपि लोकपूज्योऽन्येभ्यो वाऽधिकतरो भवामीत्यभिप्रायतो वन्दनम्, यद्वा वन्दनकमूल्यवशीकृतो मम प्रार्थनाभङ्गं न करिष्यतीति बुद्ध्या वन्दनम् । १५ ।

स्तेनिकम्[1], मा मे लाघवं भविष्यतीति परेभ्य आत्मानं निगूहयतो वन्दनम् । अयमर्थः—एवं नाम शीघ्रं वन्दते यथा स्तेनवत् केनचिद् दृष्टः केनचिन्नेति । १६ ।

प्रत्यनीकम्, आहारादिकाले वन्दनम् । १७ । यदाह—

“ वक्खित्तपराहुत्ते[2] अ पमत्ते मा कया वि वंदेज्जा ।
आहारं च करिंते नीहारं वा जइ करेइ ॥ १ ॥ ” [ आवश्यकनिर्युक्तौ १२१२ ]

रुष्टम्, क्रोधाध्मातस्य गुरोर्वन्दनमात्मना वा क्रुद्धेन वन्दनम् । १८ ।

---

१ स्तेनकं-सं. । स्तैनिकं मम लाघवं-मु. धर्मसंग्रहवृत्तौ [ पृ० १७३ ] च। “ स्तैन्यमिति परेभ्यः खल्वात्मानं गूहयन् स्तेनक इव वन्दते मा मे लाघवं भविष्यति ”—आवश्यकसूत्रस्य हारिभद्री वृत्तिः पृ० ५४४॥ २ ०पराहुत्ते पमत्ते-सं. मु. धर्मसंग्रहवृत्तौ [ पृ० १७२ ] प्रवचनसारोद्धारे विचारसारे च। “ व्याक्षिप्तं धर्मकथादिना ‘ पराहुत्ते य ’ पराङ्मुखम्, चशब्दादुद्धू ( त्थि )-तादिपरिग्रहः, प्रमत्तं क्रोधादिप्रमादेन मा कदाचिद् वन्देत, आहारं वा कुर्वन्तम्, नीहारं वा यदि करोति ” इति आवश्यकसूत्रस्य हारिभद्र्यां वृत्तौ पृ० ५४१॥ गाथेयं प्रवचनसारोद्धारे १२४, विचारसारे ७३६॥

॥ ६५९ ॥

वन्दनकसूत्रस्य विस्तरेण व्याख्या

तर्जितम्, 'अवन्द्यमानो न कुप्यसि, वन्द्यमानश्चाविशेषज्ञतया न प्रसीदसि' इति निर्भर्त्सयतो यद्वा 'बहुजनमध्ये मां वन्दनं दापयंस्तिष्ठसि, ज्ञास्यते मया तवैकाकिनः' इति धिया तर्जन्या शिरसा वा तर्जयतो वन्दनम् । १९ ।

शठम्, शाठ्येन विश्रम्भार्थं वन्दनम्, ग्लानादिव्यपदेशं वा कृत्वा न सम्यग् वन्दनम् । २० ।

हीलितम्, हे गणिन् वाचक ! किं भवता[1] वन्दितेनेत्यादिना अवजानतो वन्दनम् । २१ ।

विपरिकुञ्चितम्, अर्धवन्दित एव देशादिकथाकरणम् । २२ ।

दृष्टादृष्टम्, तमसि स्थितः केनचिदन्तरित एवमेवास्ते दृष्टस्तु वन्दत इति । २३ ।

शृङ्गम्, 'अहो कायं काय' इत्याद्यावर्तानुच्चारयतो ललाटमध्यदेशमस्पृशतः शिरसो वामदक्षिणे[2] शृङ्गे स्पृशतो वन्दनम्[3] । २४ ।

करः, 'कर इव राजदेयभाग इव अर्हत्प्रणीतो वन्दनककरोऽवश्यं[4] दातव्यः' इति धिया वन्दनम् । २५ ।

मोचनम्, लौकिककराद् वयं मुक्ता न मुच्यामहे वन्दनकरादिति बुद्ध्या वन्दनम् । २६ ।

आश्लिष्टानाश्लिष्टम्, अत्र चतुर्भङ्गी, सा च 'अहो कायं काय[5]' इत्याद्यावर्तकाले भवति । रजोहरणस्य शिरसश्च कराभ्यामाश्लेषणम्, रजोहरणस्य न शिरसः, शिरसो न रजोहरणस्य, न रजोहरणस्य नापि शिरसः । अत्र प्रथमः शुद्धः शेषास्तु दुष्टाः । २७ ।

१ भवतां-शां. ॥ २ ०दक्षिणशृंगे-खं. ॥ ३ वन्दनकरणम्-मु. ॥ ४ ०वश्यदातव्य-मु. ॥ ५ काय-नास्ति शां. ॥

न्यूनम्, व्यञ्जनाभिलापावश्यकैरसम्पूर्णम् । २८ ।

उत्तरचूडम्[1], वन्दनं दत्त्वा महता शब्देन मस्तकेन वन्दे इत्यभिधानम् । २९ ।

मूकम्, आलापाननुच्चारयतो वन्दनम् । ३० ।

ढड्ढरम्, महता शब्देनोच्चारयतो वन्दनम् । ३१ ।

चुडुली[2] उल्मुकम्, यथोल्मुकं गृह्यते तथा रजोहरणं गृहीत्वा वन्दनम्, यद्वा[3] दीर्घहस्तं[4] प्रसार्य वन्दे इति भणतो वन्दनम्, अथवा हस्तं भ्रमयित्वा सर्वान् वन्दे इति वदतो वन्दनम् । ३२ ।

वन्दनके च शिष्यस्य षडभिलापा[5] भवन्ति, तद्यथा–इच्छा, अनुज्ञापना, अव्याबाधम्, यात्रा, यापना, अपराधक्षामणा[6] च । यदाह—

"इँच्छा[7] य अणुण्णवणा अव्वाबाहं च जत्त जवणा य ।
अवराहखामणा वि य छट्ठाणा हुंति वंदणए ॥ १ ॥" [ आवश्यकनिर्युक्तौ १२३२ ]

---

१ ०चूलं–मु. ॥ २ चुडली–मु. ॥ 'चूडली' इति धर्मसंग्रहवृत्तौ पृ० १७४ ॥ ३ यद्वा यत्र दीर्घहस्तं–मु. ॥ ४ दीर्घं हस्तं–खं. ॥ ५ ०लाषा–सं. ॥ ६ ०क्षमणा–खं. । ०क्षपणा–सं. ॥ ७ "इच्छा च अनुज्ञापना अव्याबाधं च यात्रा यापना च । अपराधक्षामणापि च षट् स्थानानि भवन्ति वन्दनके ॥" इति आवश्यकस्य हारिभद्र्यां वृत्तौ पृ० ५४८ ॥ गाथेयं प्रवचनसारोद्धारे ९९, विचारसारे ७२७ ॥

गुरुवचनान्यपि षडेव यथा—छन्देन, अनुजानामि, तथेति, तुभ्यमपि वर्तते, एवम्, अहमपि क्षमयामीति। यदाह—

"[1]छंदेण अणु[2]जाणामि तह त्ति तुब्भं पि वट्टइ एवं ।
अहमवि खामेमि तुमे[3] आलावा वंदणरिहस्स ॥ १ ॥" [ आवश्यकनिर्युक्तौ १२३८ ]

एते च द्वये यथास्थानं सूत्रव्याख्यायां दर्शयिष्यन्ते। सूत्रं च—

इच्छामि खमासमणो! वंदिउं जा[4]वणिज्जाए निसीहियाए, अणुजाणह मे मिउग्गहं, नि[5]सीही, अहोकायं कायसंफासं, खमणिज्जो मे किलामो, अप्पकिलंताण बहुसुभेण भे दिवसो वइक्कंतो, जत्ता भे, जवणिज्जं च भे, खामेमि खमासमणो देवसिअं वइक्कमं, आवसियाए पडिक्कमामि, खमासमणाणं देवसियाए आसायणाए ते[8]त्तीसन्नयराए जं किंचि मिच्छाए मणदुक्कडाए वयदुक्कडाए कायदुक्कडाए कोहाए माणाए मायाए लोभाए सव्वकालियाए सव्वमिच्छोवयाराए सव्वधम्माइक्कमणाए आसायणाए जो मे अइयारो कओ तस्स खमासमणो! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ।

१ छंदेणं-खं.। 'छंदेणऽणुजाणामि' इति आवश्यकनिर्युक्तौ, प्रवचनसारोद्धारे [ गा० १०१], विचारसारे [ गा० ७३० ] च॥ "छन्दसा, अनुजानामि, तथेति, युष्माकमपि वर्तते, एवम्, अहमपि क्षमयामि त्वाम्' वचनानि वन्दनार्हस्य वन्दनयोग्यस्य" इति आवश्यकस्य हारिभद्र्यां वृत्तौ पृ० ५४९॥ २ ०जाणामि य तहत्ति-शां.॥ ३ तुमे वयणाइं वंदण०-आवश्यकनिर्युक्तौ प्रवचनसारोद्धारे विचारसारे च॥ ४ जावणजाए-खं.। दृश्यतां पृ० ६५४ टि० ९॥ ५ निसीहि-मु.॥ ६ ०ताणं-मु.॥ ७ ०सवणो-खं.॥ ८ तित्ती०-मु.॥ ९ ०धम्मापक्क०-खं. सं.॥ १० राईओ अईआरो-खं.॥

अत्र हि शिष्यो गुरुं[1] वन्दनेन वन्दितुकामः पूर्वं लघुवन्दनपुरःसरं सन्दंशकौ प्रमृज्योपविष्ट एव मुखवस्त्रिकां पञ्चविंशतिकृत्वः प्रत्युपेक्षते, तया च शरीरं पञ्चविंशतिकृत्व एव प्रमृज्य परेण विनयेन मनोवाक्कायसंशुद्धो गुरोः सकाशादात्मप्रमाणात् क्षेत्राद् बहिःस्थितोऽधिज्यचापवदवनतकायः करद्वयगृहीतरजोहरणादिर्वन्दनायोद्यत एवमाह—

इच्छामि अभिलषामि, अनेन बलाभियोगः परिहृतः, क्षमाश्रमण[2]! "क्षमूषि[3] सहने" [धा० पा० ७८८], षित्त्वादङि[4] क्षमा, सहनमित्यर्थः, श्राम्यति संसारविषये खिन्नो भवति तपस्यतीति च[5], नन्द्यादित्वात् कर्तरि अने श्रमणः, क्षमाप्रधानः श्रमणः क्षमाश्रमणः[6], तस्य सम्बोधने प्राकृते 'खमासमणो!' "डो दीर्घो वा"। [सिद्धहेम० ८।३।३८]। इति आमन्त्र्ये सेर्डोकारः[7], क्षमाग्रहणेन मार्दवादयो[8] गुणाः सूचिताः। ततश्च 'क्षमादिगुणोपलक्षितयतिप्रधान[9]!', अनेन वन्दनार्हत्वं तस्यैव सूचितम्। किं कर्तुम्? वन्दितुं नमस्कर्तुम्, भवन्तमिति गम्यते। कया? यापनीयया नैषेधिक्या, अत्र नैषेधिक्येति विशेष्यम्, यापनीययेति विशेषणम्। 'षिधू गत्याम्' [धा० पा० ३२०] इत्यस्य निपूर्वस्य घञि निषेधः, प्राणातिपातादिनिवृत्तिः,

---

१ गुरुवन्दनेन-मु.॥ २ श्रवण-खं.॥ ३ हैमे धातुपारायणे तु अत्र "क्षमौषि सहने" इति पाठः। किन्तु 'क्षमौच् सहने' [धा० पा० ४।९२, १२३५] इत्यस्य वृत्तौ "ऊदिदयमित्येके क्षान्त्वा क्षमित्वा" इत्यपि हैमधातुपारायणेऽभिहितमिति ध्येयम्। पाणिनीये धातुपाठे तु "क्षमूष् सहने" [पा० धा० ४४२] इति पाठः॥ ४ "षितोऽङ्"-सि० ५।३।१०७॥ ५ वा-मु.। "श्रमूच् खेदतपसोः"-धा० पा० १२३३॥ ६ "नन्द्यादिभ्योऽनः"-सि० ५।१।५२॥ ७ ०श्रवणः-खं.॥ ८ मार्दवार्जवादयो-मु.॥ ९ प्रधानः-शां.॥

॥ ६६३ ॥

वन्दनकसूत्रस्य विस्तरेण व्याख्या

स प्रयोजनमस्या नैषेधिकी तनुः, तया। कीदृश्या? यापनीयया, 'यांक् प्रापणे' [धा० पा० २।४, १०६२], अस्य णिगन्तस्य [1]प्वागमे यापयतीति यापनीया, [2]प्रवचनीयादित्वात् कर्तर्यनीयः, तया, शक्तिसमन्वितया इत्यर्थः।

अयं समुदायार्थः—हे श्रमणगुणयुक्त! अहं शक्तिसमन्वितशरीरः प्रतिषिद्धपापक्रियश्च त्वां वन्दितुमिच्छामि। अत्र विश्रामः।

अत्र चान्तरे गुरुर्यदि व्याक्षेपबाधायुक्तस्तदा भणति—प्रतीक्षस्वेति। तच्च बाधादिकारणं यदि कथनयोग्यं भवति तदा कथयति, अन्यथा तु नेति [3]चूर्णिकारमतम्, [4]वृत्तिकारस्य तु मतं त्रिविधेनेति भणति मनसा वचसा कायेन प्रतिषिद्धोऽसीत्यर्थः। ततः शिष्यः संक्षेपवन्दनं करोति। व्याक्षेपादिरहितश्चेद् गुरुः तदा वन्दनमनुज्ञातुकामः छन्देनेति वदति, छन्देनाऽभिप्रायेण, ममापि एतदभिप्रेतमित्यर्थः। [5]ततो विनेयोऽवग्रहाद् बहिःस्थित एवैवमाह—'अनुजानीत' अनुमन्यध्वम्, 'मे' इति आत्मनिर्देशे,

१ "अर्तिरीब्लीह्रीक्नूयिक्ष्माय्यातां पुः"—सि० ४।२।२१॥ २ "प्रवचनीयादयः"—सि० ५।१।८॥ ३ "कहिं कहिं पुण एत्थ उवरमो? भण्णति—'इच्छामि खमासवणो! वंदितुं जावणिज्जाए निसीहियाए' एस एक्को फुडवियडसुद्धवंजणो उच्चारेतव्वो सव्वविधीए। तत्थ जदि बाधा अत्थि काइ तो भणति—अच्छ ताव, जदि तं अक्खाइतव्वं तो अक्खाति, अह रहस्सं तो रहकस्स चेव कज्जति। जदि पडिच्छितुकामो ताहे भणति—'छंदेणं'। छंदेणं नाम अभिप्पाएणं, ममाभिप्रेतमित्यर्थः।" इति आवश्यकचूर्णौ वन्दनकाध्ययने पृ० ४॥ ४६ "अत्रान्तरे गुरुर्व्याक्षेपादियुक्तः 'त्रिविधेन' इति भणति, ततः शिष्यः संक्षेपवन्दनं करोति। व्याक्षेपादिविकलस्तु 'छन्दसा' इति भणति" इतिआवश्यकसूत्रस्य हारिभद्र्यां वृत्तौ पृ०५४७॥ ५ "ताहे सीसो भणति—'अणुजाणह मे मितोग्गहं'। एत्थ उग्गहो आयरियस्स आतप्पमाणं खेत्तं, तं आयरिओग्गहो, तं अणणुण्णवेत्ता न वट्टति पविसेतुं, तो वंदितुकामो तं अणुण्णावेति जथा मम परिमितं उग्गहं अणुजाणह। ताहे आयरिओ भणति—अणुजाणामि। ताहे सीसो आयरियउग्गहं पविसति। पविसित्ता सम्मं रयहरणं भूमीए ठावेत्ता तं निडालं च फुसंतो भणति—'अहोकायं कायसंफासं, खमणिज्जो

॥ ६६५ ॥ किम्? मितश्चासाववग्रहश्च मितावग्रहः। इहाचार्यस्य चतसृषु दिक्षु आत्मप्रमाणं क्षेत्रमवग्रहः, तस्मिन्नाचार्य्यानुज्ञां विना प्रवेष्टुं न कल्पते, यदाह—

"[1] आयप्पमाणमित्तो चउद्दिसिं होइऽवग्गहो[2] गुरुणो।
अणणुण्णायस्स सया न कप्पए तत्थ पविसेउं ॥ १ ॥ [ ]

१ आत्मप्रमाणमात्रश्चतुर्दिशं भवति अवग्रहो गुरोः। अननुज्ञातस्य सदा न कल्पते तत्र प्रवेष्टुम्॥ २ होइ अवग्ग०–शां. विना। होइ उग्ग०–प्रवचनसारोद्धारे गा० १२६, विचारसारे गा० ७३४, धर्मसंग्रहवृत्तौ पृ० १७१॥

भे किलामो, अप्पकिलंताणं बहुसुभेण दिवसो वतिक्कंतो'?। रायणियस्स संफासो वि अणणुण्णवेत्ता ण वट्टति कातुं, तो एवमाह–अहोकायं आस्(स्त्रि)त्य मम कायसंफासं, 'अणुजाणह' त्ति एत्थ वि संवज्झति। अहोकायो पादाः, ते हि रयहरणे णिवेसित्ता अप्पणो कायेण हत्थेहिं फुसिस्सामि, तं च मे अणुजाणह त्ति, भणति य–'खमणिज्जो भे किलामो', "क्षमूष् सहने" [पा० धा० ४४२] सहितव्वो तुब्भेहिं किलामो, "क्लमु ग्लानौ" [पा० धा० १२०७], संफासे सति वेदणारूवे" इति आवश्यकचूर्णौ पृ०४७। "ततो विनेयस्तत्रस्थ एवमाह–'अनुजानीत' अनुजानीध्वम् अनुज्ञां प्रयच्छथ, 'मम' इत्यात्मनिर्देशो, कम्? मितश्चासाववग्रहश्चेति मितावग्रहस्तम्, चतुर्दिशमिहाचार्यस्य आत्मप्रमाणं क्षेत्रमवग्रहः, तमनुज्ञां विहाय प्रवेष्टुं न कल्पते, ततो गुरुर्भणति–अनुजाणामि। ततः शिष्यो नैषधिक्या प्रविश्य गुरुपादान्तिकं निधाय तत्र रजोहरणं तद् ललाटं च कराभ्यां संस्पृशन्निदं भणति–अधस्तात् कायः अधःकायः पादलक्षणः, तमधःकायं प्रति कायेन निजदेहेन संस्पर्शः कायसंस्पर्शः, तं करोमि, एतच्चानुजानीत। तथा क्षमणीयः सह्यो भवताम् अधुना क्लमो देहग्लानिरूपः" इति आवश्यकसूत्रस्य हारिभद्रयां ॥ ६६७ ॥ वृत्तौ पृ० ५४७॥

षट्सु आवश्यकेषु वन्दनकस्य व्याख्या

ततो गुरुर्भणति—अनुजानामि। ततः शिष्यो भुवं प्रमृज्य नैषेधिकीं कुर्वन् गुर्ववग्रहे प्रविशति। निसीहीति[1] निषिद्ध-सर्वाशुभव्यापारः सन् प्रविशाम्यहमित्यर्थः। ततः सन्दंशप्रमार्जनपूर्वकमुपविशति। गुरुपादान्तिके च भूमौ निधाय रजोहरणं तन्मध्ये च गुरुचरणयुगलं संस्थाप्य मुखवस्त्रिकया वामकर्णादारभ्य वामहस्तेन दक्षिणकर्णं यावल्ललाटमविच्छिन्नं च वामं जानु त्रिः प्रमृज्य मुखवस्त्रिकां वामजानूपरि स्थापयति। ततोऽकारोच्चारणसमकालं रजोहरणं कराभ्यां संस्पृश्य होकारोच्चारण-समकालं ललाटं स्पृशति ततः काकारोच्चारणसमकालं रजोहरणं स्पृष्ट्वा यंकारोच्चारणसमकालं ललाटं स्पृशति। पुनश्च काकारोच्चाकारणसमकालं रजोहरणं स्पृष्ट्वा यकारोच्चारणसमकालं ललाटं स्पृशति। ततः संफासमिति वदन् शिरसा पाणिभ्यां च रजोहरणं स्पृशति। ततः शिरसि बद्धाञ्जलिः 'खमणिज्जो भे किलामो' इत्यारभ्य 'दिवसो वइक्कंतो' इति[2] यावद् गुरुमुखे निविष्टदृष्टिः पठति। अधस्तात् कायोऽधःकायः पादलक्षणस्तं प्रति कायेन निजदेहेन हस्त-ललाटलक्षणेन संस्पर्श आमर्शस्तं 'करोमि' इति गम्यते। एतदपि 'ममानुजानीध्वम्' इत्यनेन योगः। आचार्यमननुज्ञाप्य हि संस्पर्शो न कार्यः।

ततो वक्ति—'खमणिज्जो' क्षमणीयः सोढव्यः, 'भे' भवद्भिः, 'किलामो' क्लमः संस्पर्शे सति देहग्लानिरूपः। तथा 'अप्पकिलंताण[3]', अल्पं स्तोकं क्लान्तं क्लमो येषां तेऽल्पक्लान्ताः, तेषामल्पवेदनानामित्यर्थः। 'बहुसुभेण,' बहु च तच्छुभं च बहुशुभम्, तेन बहुसुखेनेत्यर्थः, 'भे' भवताम्, 'दिवसो वइक्कंतो' दिवसो व्यतिक्रान्तः। अत्र दिवसग्रहणं रात्रि-पक्षा-दीनामुपलक्षणं द्रष्टव्यं।

१ निसीही निषिद्ध०–सं.॥ २ इति–नास्ति मु.॥ ३ ०ताणं–मु.॥ दृश्यतां पृ० ६६२ पं० ६ ॥

एवं योजितकरसम्पुटं गुरोः प्रतिवचनमीक्षमाणं शिष्यं प्रत्याह गुरुः—'तह त्ति' तथेति, प्रतिश्रवणेऽत्र तथाकारः, यथा भवान् ब्रवीति तथेत्यर्थः। एवं तावदाचार्यशरीरवार्ता पृष्टा।

अथ तपोनियमविषयां वार्तां पृच्छन्नाह—जत्ता भे, 'ज' इत्यनुदात्तस्वरेणोच्चारयन् रजोहरणं कराभ्यां स्पृष्ट्वा रजोहरण-ललाटयोरन्तराले 'त्ता' इति स्वरितेन स्वरेणोच्चार्य, उदात्तस्वरेण 'भे' इत्युच्चारयन् गुरुमुखनिविष्टदृष्टिर्ललाटं स्पृशति, यात्रा संयम-तपो-नियमादिलक्षणा क्षायिक-क्षायोपशमिकौपशमिकभावलक्षणा वा 'भे' भवताम् 'उत्सर्पति' इति गम्यते। अत्रान्तरे गुरोः प्रतिवचनम् 'तुब्भं पि वट्टइ', मम तावदुत्सर्पति, भवतोऽप्युत्सर्पति ?

अधुना नियन्त्रणीयपदार्थविषयां वार्तां पृच्छन् पुनरप्याह विनयः—'जवणिज्जं च भे', 'ज' इत्यनुदात्तस्वरेण रजोहरणं स्पृष्ट्वा 'व' इति स्वरितस्वरेण रजोहरण-ललाटयोरन्तराले उच्चार्य 'णि' शब्दमुदात्तस्वरेणोच्चारयन् कराभ्यां ललाटं स्पृशति, न पुनः प्रतिवचनं प्रतीक्षते, अर्धसमाप्तत्वात् प्रश्नस्य, ततो 'ज्जं' इत्यनुदात्तस्वरेणोच्चार्य कराभ्यां रजोहरणं स्पृशन् पुनरेव रजोहरण-ललाटान्तराले 'च' इति स्वरितस्वरेणोच्चार्य 'भे' इत्युदात्तस्वरेणोच्चारयन् कराभ्यां ललाट स्पृष्ट्वा प्रतिवचनं शुश्रूषमाणस्तथैवास्ते। 'जवणिज्जं च' यापनीयमिन्द्रिय-नोइन्द्रियोपशमादिना प्रकारेणाबाधितं च 'भे' भवतां 'शरीरम्' इति गम्यम्। एवं परया भक्त्या पृच्छता विनेयेन विनयः कृतो भवति। अत्रान्तरे गुरुराह—'एवं' आमं[१], 'यापनीयं च मे' इत्यर्थः।

१ आम-शां. विना। आवश्यकसूत्रस्य हारिभद्रयां वृत्तौ [पृ० ५४७] 'आमं' इति वर्तते, धर्मसंग्रहवृत्तौ तु [पृ० १७६] 'आम' इति वर्तते। अभिधानचिन्तामणौ षष्ठे काण्डे तु "स्यादां ओं परमे मते ॥ १७६ ॥" इति वर्तते।

इदानीमपराधक्षामणां कुर्वन् रजोहरणोपरिन्यस्तहस्त-मस्तको[1] विनेय इदमाह—'खामेमि खमासमणो! देवसियं वइक्कमं' क्षमयामि क्षमाश्रमण! दिवसे भवो दैवसिकस्तं व्यतिक्रममवश्यकरणीययोगविराधनारूपमपराधम्।

अत्रान्तरे च गुरुर्वदति—'अहमवि खामेमि' अहमपि क्षमयामि दैवसिकं[2] व्यतिक्रमं प्रमादोद्भवम्।

ततो विनेयः प्रणमन् क्षमयित्वा 'आवसियाए' इत्यादि 'जो मे अइयारो कओ' इत्यन्तं स्वकीयातिचारनिवेदनपरमालोचनार्हप्रायश्चित्तसूचकं सूत्रं 'तस्स खमासमणो पडिक्कमामि' इत्यादिकं च[3] प्रतिक्रमणार्हप्रायश्चित्ताभिधायकं पुनरकरणेनाभ्युत्थित आत्मानं शोधयिष्यामीति बुद्ध्याऽवग्रहाद् निःसृत्य पठति। अवश्यं कर्तव्येषु चरणकरणेषु भवा क्रिया आवश्यिकी[4], तया आसेवनाद्वारेण हेतुभूतया यदसाध्वनुष्ठितं[5] तस्मात् 'प्रतिक्रामामि[6]' निवर्ते। इत्थं सामान्येनाभिधाय विशेषेणाभिधत्ते—क्षमाश्रमणानां संबन्धिन्या दैवसिक्या ज्ञानाद्यायस्य शातना खण्डना आशातना, तया। किंविशिष्टया? त्रयस्त्रिंशदन्यतरया, त्रयस्त्रिंशत्संख्यानामाशातनानामन्यतरया कयाचित्, उपलक्षणत्वाद् द्वाभ्यां तिसृभिरपि, यतो दिवसमध्ये सर्वा अपि संभवन्ति, ताश्च वक्ष्यन्ते। यत् किञ्चित् कदालम्बनमाश्रित्य मिथ्यया मिथ्यायुक्तेन कृतयेत्यर्थः; मिथ्याभावोऽत्रास्तीत्यभ्रादित्वादकारे[7] मिथ्या, एवं क्रोधयेत्यादावपि। मनसा दुष्कृता मनोदुष्कृता, तया, प्रद्वेषनिमित्तयेत्यर्थः। वाग्

१ ०न्यस्तमस्तको–मु.॥ २ दैवसिकं स्वं व्यतिक्रमं–मु०॥ ३ च पुन०–खं॥ ४ आवश्यकी–मु.॥ ५ यत् साध्वननुष्ठित–सं.। अय पाठः समीचीनतरो यद्यपि भाति तथापि आवश्यकहारिभद्र्यां [पृ० ५४७] धर्मसंग्रहवृत्तौ [पृ० १७६] अपि च 'यदसाध्वनुष्ठितम्' इति पाठस्य दर्शनात् स एवादृतोऽत्र मूलेऽस्माभिरिति ध्येयम्॥ ६ प्रतिक्रमामि–मु.॥ ७ "अभ्रादिभ्यः"–सि० ७।२।४६॥

दुष्कृतया असभ्यपरुषादिवचननिमित्तया। कायदुष्कृतया आसन्नगमन-स्थानादिनिमित्तया। क्रोधया क्रोधयुक्तया। मानया मानयुक्तया। मायया मायायुक्तया। लोभया लोभयुक्तया। अयं भावः—क्रोधाद्यनुगतेन या काचिद् विनयभ्रंशादिलक्षणाऽऽशातना कृता तयेति। एवं दैवसिक्याशातनोक्ता।

अधुना पक्ष-चतुर्मास-संवत्सर कालकृता इहभवान्यभवगताऽतीतानागतकालकृता च या आशातना तस्याः संग्रहार्थमाह—'सव्वकालियाए', सर्वकालेषु भवा सार्वकालिकी, तया। अनागतकाले कथमाशातनासंभवः? इति चेत्, उच्यते—'श्वोऽस्य गुरोरिदमिदं वानिष्टं कर्ताऽस्मि' इति चिन्तया। इत्थं भवान्तरेऽपि तद्वधादिनिदानकरणेन संभवत्येव। सर्वं एव मिथ्योपचारा मातृस्थानगर्भाः क्रियाविशेषा यस्यां सा सर्वमिथ्योपचारा, तया। सर्वे धर्मा अष्टौ प्रवचनमातरः सामान्येन करणीयव्यापारा वा, तेषामतिक्रमणं लङ्घनं विराधनं यस्यां सा सर्वधर्मातिक्रमणा, एवंभूतयाऽऽशातनया यो मयातिचारोऽपराधः कृतो विहितस्तस्यातिचारस्य हे क्षमाश्रमण! युष्मत्साक्षिकं प्रतिक्रामामि, अपुनःकरणेन निवर्ते। तथा दुष्टकर्मकारिणं निन्दाम्यात्मानं भवोद्विग्नेन प्रशान्तेन चेतसा। तथा गर्हे आत्मानं दुष्टकर्मकारिणं युष्मत्साक्षिकम्। व्युत्सृजाम्यात्मानं दुष्टकर्मकारिणं तदनुमतित्यागेन।

---

१ चातु०-मु.॥ २ इहभवान्यभवातीतानागत-०सं.। इहभवान्यभवकृताऽतीतानागत०—धर्मसंग्रहवृत्तौ पृ० १७८। "अधुना इहभवान्यभवगतातीतानागतकालसंग्रहार्थमाह-सर्वकालेन अतीतादिना निर्वृत्ता सार्वकालिकी, तया"—आवश्यकसूत्रस्य हारिभद्र्यां वृत्तौ पृ० ५४८॥ ३ सर्व०-खं. सं. धर्मसंग्रहवृत्तौ च पृ० १७८। सार्व० इति आवश्यकसूत्रस्य हारिभद्र्यां वृत्तौ पृ० ५४८॥ ४ प्रतिक्रमामि-मु०॥

एवं तत्रस्थ एवार्धावनतकायः पुनरेवं भणति–'इच्छामि खमासमणो' इत्यारभ्य यावद् 'वोसिरामि' इति। परमयं विशेषः—अवग्रहाद् बहिर्निष्क्रमणरहित आवश्यिकीविरहितं[1] दण्डकसूत्रं पठति।

षट्सु आवश्यकेषु वन्दनकस्य व्याख्या

वन्दनकविधिविशेषसंवादिकाश्चेमा गाथाः—

[2]आयारस्स उ मूलं विणओ सो गुणवओ अ पडिवत्ती ।
[3]सा य विहिवंदणाओ विही इमो बारसावत्ते[4] ॥ १ ॥

होउ[5]महाजाओवहि [6]संडास पमज्ज [7]उक्कुडुअठाणो ।
[8]पडिलेहियमुह[9]पोत्तीप[10]मज्जिओवरिमदेहद्धो ॥ २ ॥

---

१ आवश्यकी०–मु.। २ आचारस्य तु मूलं विनयः स गुणवतश्च प्रतिपत्तिः। सा च विधिवन्दनात् विधिरयं द्वादशावर्ते ॥१॥ भूत्वा यथाजातोपधिः सन्दंशं प्रमृज्य उत्कुटुकस्थानः। प्रतिलेखितमुखवस्त्रिकाप्रमार्जितोपरिमदेहार्धः ॥२॥ ३ सो–खं.॥ ४ ०वत्तो–मु.॥ ५ ०जा उवहि–शां. सं.॥ ०जाओ बहिं–मु.॥ मु० अनुसारेण 'यथाजातो बहिः' इत्यर्थो भवति॥ "यथाजातं श्रमणत्वमाश्रित्य योनिनिष्क्रमणं च, तत्र रजोहरण-मुखवस्त्रिका-चोलपट्टमात्रया श्रमणो जातः, रचितकरपुटस्तु योन्या निर्गतः" इति आवश्यकसूत्रस्य हारिभद्र्यां वृत्तौ पृ० ५४२॥ ६ संडासं–मु.॥ ७ उक्कुडुअठाणे–शां. सं.। उक्कुट्टुअट्ठाणो–मु.॥ ८ पडिलेहीय०–सं.॥ ९ ०पत्ती०–मु.॥ १० ०ज्जिउव०–शां.॥

उट्ठेउं[1][2] परिसंठियकुप्परठियपट्टगो नमिअकाओ ।
जुत्तिपिहिअपच्छद्धो पवयणकुच्छा जह न होई ॥ ३ ॥

वामंगुलिमुहपोत्तीकरजुयलतलत्थजुत्तरयहरणो ।
अवणिय जहोत्तदोसं गुरुसमुहं[3] भणइ पयडमिणं ॥ ४ ॥

इंच्छामि[4] खमासमणो इंचाई[5] जा निसीहियाए त्ति ।
छंदेणं ति सुणेउं गुरुवयणं उग्गहं जाए ॥ ५ ॥

अणुजाणह मे मिउग्गहमणुजाणामि त्ति भासिए गुरुणा ।
उग्गहखेत्तं पविसइ पमज्ज संडासए निसिए[6] ॥ ६ ॥

---

१ उट्ठेयं-खं. ॥ २ उत्थाय परिसंस्थितकूर्परस्थितपट्टकौ नतकायः। युक्तिपिहितपश्चार्धः प्रवचनकुत्सा यथा न भवति ॥ ३ ॥ वामाङ्गुलिमुखवस्त्रिकाकरयुगलतलस्थयुक्तरजोहरणः। अपनीय यथोक्तदोषं गुरुसंमुखं भणति प्रकटमिदम् ॥ ४ ॥ ३ ०संमुहं-मु० ॥ ४ 'इच्छामि खमासमणो' इत्यादि यावत् 'निसीहियाए' इति। 'छंदेणं' इति श्रुत्वा गुरुवचनमवग्रहं याचेत ॥ ५ ॥ 'अणुजाणह मे मिउग्गह', 'अणुजाणामि' इति भाषिते गुरुणा। अवग्रहक्षेत्रं प्रविशति प्रमृज्य सन्दंशकौ निषीदेत् ॥ ६ ॥ ५ इचाइं-सं. ॥ ६ निसीए-मु. ॥

॥ ६७१ ॥

वामदसं[1] रयहरणं पमज्ज भूमीए संठवेऊण[2] ।
सीसफुसणेण होही कज्जं ति तओ पढममेव ॥ ७ ॥
वामकरगहिअपोत्तीएगदेसेण वामकन्नाओ ।
आरभिऊण[3] णिडालं[4] पमज्ज जा दाहिणो कण्णो ॥ ८ ॥
अव्वोच्छिन्नं[5] वामयजाणुं नासिऊण तत्थ मुहपोत्तिं ।
रयहरणमज्झदेसम्मि ठावए पुज्जपायजुगं ॥ ९ ॥
सुपसारियबाहुजुओ ऊरुजुयलंतरं अफुसमाणो ।
जमलट्ठिअग्गपाणी[6] 'अ'कारमुच्चारयं फुसइ ॥ १० ॥
अब्भंतरपरिअट्टियकरयलमुवणीय[7] सीसफुसणंतं ।
तो करजुयलं निज्जा 'हो'कारोच्चरणसमकालं[8] ॥ ११ ॥

१ वामदशं रजोहरणं प्रमृज्य भूमौ संस्थाप्य। शीर्षस्पर्शनेन भविष्यति कार्यमिति ततः प्रथममेव ॥ ७॥ वामकरगृहीतमुखवस्त्रैकदेशेन वामकर्णात्। आरभ्य ललाटं प्रमृज्य यावद् दक्षिणं कर्णम् ॥ ८ ॥ अव्यवच्छिन्नं वामकजानु न्यस्य तत्र मुखवस्त्रिकाम्। रजोहरणमध्यदेशे स्थापयेत् पूज्यपादयुगम् ॥ ९॥ सुप्रसारितबाहुयुग ऊरुयुगलान्तरम् अस्पृशन्। यमलस्थिताग्रपाणिः 'अ'कारमुच्चारयन् स्पृशति ॥ १०॥ अभ्यन्तरपरिवर्तितकरतलमुपनीय शीर्षस्पर्शनान्तम्। ततः करयुगल नयत् 'हो'कारोच्चारणसमकालम् ॥ ११ ॥ २ ०ऊणं-खं. ॥ ३ आरंभि०-मु. ॥ ४ णिडालं-मु. ॥ ५ अव्वु-मु ॥ ६ जमलट्ठअग्ग०-सं. ॥ ७ परियट्टिय०-सं. ॥ ८ होकारो०-खं. सं. । ०होकारोच्चारसमकालं-मु. ॥

पुण[1] हेट्ठा[2]मुहकरयल[3] काकारसमं छिविज्ज रयहरणं ।
'यं'सद्देणं समयं पुणो वि सीसं तह[4] चेअ ॥ १२ ॥
'का'कारसमुच्चारणसमयं रयहरणमालुहेऊण ।
'य' त्ति अ सद्देण समं पुणो वि सीसं तह चेअ[5] ॥ १३ ॥
संफासं ति भणंतो सीसेणं पणमिऊण रयहरणे ।
उन्नामियमुद्धंजलि अव्वाबाहं तओ पुच्छे ॥ १४ ॥
खमणिज्जो भे किलामो अप्पकिलंताण[6] बहुसुभेण भे ।
दिण पक्खो वरिसो वा वइक्कंतो इय[7] तओ तुसिणी ॥ १५ ॥
गुरुणा तह त्ति भणिए जत्ता जवणा य पुच्छियव्वा य ।
परिसंठिएण ईणमो[8] सराण जोएण कायव्वं ॥ १६ ॥

१ पुनरधोमुखकरतलः 'का'कारसमं स्पृशेद् रजोहरणम्। 'यं'शब्देन समकं पुनरपि शीर्षं तथैव ॥ १२ ॥ 'का'कारसमुच्चारणसमं रजोहरणम् आस्पृश्य। 'य'इति च शब्देन समं पुनरपि शीर्षं तथैव ॥ १३ ॥ 'संफासं' इति भणन् शीर्षेण प्रणम्य रजोहरणे। उन्नमितमूर्धाञ्जलिः अव्याबाधं ततः पृच्छेत् ॥ १४ ॥ खमणिज्जो भे किलामो अप्पकिलंताण बहुसुभेण भे। दिण पक्खो वरिसो वा वइक्कंतो इति ततः तूष्णीकः ॥ १५ ॥ गुरुणा 'तह त्ति' भणिते यात्रा यापना च प्रष्टव्या। परिसंस्थितेन इदं स्वराणां योगेन कर्तव्यम् ॥ १६ ॥ २ हेट्ठोमुह०-सं. ॥ ३ ०यलं-काकारसमं ठविज्ज-मु. ॥ ४ तहच्चेय-सं. ॥ ५ च्चेय-शां. ॥ ६ ०ताणं बहुसुभेणं भे-मु. ॥ ७ इ तओ-सं. ॥ ८ इमो-सं. ॥

॥ ६७३ ॥

तत्थ य परिभासेमो मंदमइविणेअगाहणट्ठाए ।
नीउच्चमज्झिमाओ सरजुत्तीओ ठवेयव्वा ॥ १७ ॥
नीओ तत्थणुदत्तो रयहरणे उच्चओ उदत्तो उ ।
सीसे निदंसणीओ तदंतरालम्मि सरिओ य ॥ १८ ॥
अणुदत्तो अ 'ज'कारो 'त्ता' सरिओ होइ 'भे' उदत्तसरो ।
पुणरवि 'जंवणि'सद्दा अणुदत्ताई मुणेयव्वा ॥ १९ ॥
'ज्जं' अणुदत्तो अ पुणो 'च' स्सरिओ 'भे' उदत्तसरणामो ।
एवं रयहरणाइसु तिसु ठाणेसुं सरा णेया ॥ २० ॥
पढमं आवत्ततिगं वण्णदुगेणं तु रइयमणुकमसो ।
बीयावत्ताण तिगं तिहि तिहिं वण्णेहि निप्फन्नं ॥ २१ ॥

---

१ तत्र च परिभाषामहे मन्दमतिविनेयग्राहणार्थम्। नीचोच्चमध्यमाः स्वरयुक्तयः स्थापयितव्याः ॥ १७॥ नीचस्तत्रानुदात्तो रजोहरणे, उच्चक उदात्तस्तु। शीर्षे निदर्शनीयस्तदन्तराले स्वरितश्च ॥ १८॥ अनुदात्तश्च 'ज'कारः 'ता' स्वरितो भवति भे उदात्तस्वरः। पुनरपि 'ज-व-णि' शब्दा अनुदात्तादयो ज्ञातव्याः ॥ १९॥ 'ज्जं' अनुदात्तश्च पुनः 'च' स्वरितो 'भे' उदात्त-स्वरनामा। एवं रजोहरणादिषु त्रिषु स्थानेषु स्वरा ज्ञेयाः ॥ २०। प्रथममावर्तत्रिकं वर्णद्विकेन तु रचितमनुक्रमशः। द्वितीयावर्तानां त्रिकं त्रिभिस्त्रिभिर्वर्णैर्निष्पन्नम् ॥ २१॥ २ परिभासेसा–धर्मसंग्रहवृत्तौ पृ० १७९॥ ३ जवणी–खं. सं. धर्मसंग्रहवृत्तौ च पृ० १७९॥ ४ जं–शां. सं.॥ ५ उदत्तपरिणामो–सं.। अयमपि पाठो यद्यपि समीचीनस्तथापि धर्मसंग्रहवृत्तावपि 'उदात्त-सरणामो' इति पाठदर्शनात् स एव मूले आदृतोऽस्माभिः॥

रयहरणम्मि 'ज'कारं 'त्ता'कारं करजुएण मज्झम्मि ।
'भे'कारं सीसम्मि अ काउं गुरुणो वयं सुणसु ॥ २२ ॥
तुब्भं पि वट्टइ त्ति य गुरुणा भणियम्मि सेसआवत्ता ।
दुण्णि वि काउं तुसिणी जा गुरुणा भणियमेवं ति ॥ २३ ॥
अह सीसो रयहरणे कयंजली भणइ सविणयं सिरसा ।
खामेमि खमासमणो ! देवसिआईवइक्कमणं ॥ २४ ॥
अहमवि खामेमि तुमे गुरुणाऽणुण्णाए खामणे सीसो ।
निक्खमइ उग्गहाओ आवसियाए भणेऊण ॥ २५ ॥
ओणयदेहो अवराहखामणं सव्वमुच्चरेऊण ।
निंदियगरहियवोसट्टसव्वदोसो पडिक्कंतो ॥ २६ ॥

---

१ रजोहरणे 'ज'कारं 'त्ता'कारं करयुगेन मध्ये। 'भे'कारं शीर्षे च कृत्वा गुरोर्वचः शृणु ॥ २२ ॥ 'तुब्भं पि वट्टइ' इति च गुरुणा भणिते शेषौ आवर्तौ। द्वावपि कृत्वा तूष्णीकः यावद् गुरुणा भणितम् 'एवं' इति ॥ २३ ॥ अथ शिष्यो रजोहरणे कृताञ्जलिर्भणति सविनयं शिरसा। खामेमि खमासमणो! दैवसिकादिव्यतिक्रमणम् ॥ २४ ॥ 'अहमवि खामेमि तुमे' गुरुणाऽनुज्ञाते क्षामणे शिष्यः। निष्क्रामति अवग्रहात् 'आवसियाए' भणित्वा ॥ २५ ॥ अवनतदेहः अपराधक्षामणं सर्वमुच्चार्य। निन्दित-गर्हित-व्युत्सृष्टसर्वदोषः प्रतिक्रान्तः ॥ २६ ॥ २ वइ-सं. ॥ ३ ०आइ-मु. खं. ॥ ४ ०सट्ट०-मु. ॥

॥ ६७५ ॥

खामित्ता विणएणं तिगुत्तो तेण पुणरवि तहेअ ।
उग्गहजायण-पविसण दुओणयं दोपवेसं च ॥ २७ ॥
पढमे छच्चावत्ता बीयपवेसम्मि हुंति छच्चेव ।
ते अ 'अहो' इच्चाई असंकरेणं पउत्तव्वा ॥ २८ ॥
पढमपवेसे सिरनामणं[2] दुहा बीअए अ तह[3] चेअ ।
तेणेअ चउसिरं तं भणियमिणं एगनिक्खमणं ॥ २९ ॥

एवमहाजाएगं 'तिगुत्त'[4]सहिअं च हुंति चत्तारि ।
सेसेसुं खित्तेसुं पणवीसावस्सया हुंति ॥ ३० ॥

'तेत्तीसन्नयराए'[5] इत्युक्तमिति त्रयस्त्रिंशदाशातना[6] विविच्यन्ते—

गुरोः पुरतो गमनं शिष्यस्य निष्कारणं विनयभङ्गहेतुत्वादाशातना, मार्गदर्शनादिकारणे तु न दोषः । गुरोः पार्श्वाभ्यामपि

१ क्षमयित्वा विनयेन त्रिगुप्तः तेन पुनरपि तथैव । अवग्रहयाचन-प्रवेशने द्व्यवनतं द्विप्रवेशं च ॥ २७ ॥ प्रथमे षड् चावर्ता द्वितीयप्रवेशे भवन्ति षड् चैव । ते च 'अहो' इत्यादयः असङ्करेण प्रयोक्तव्याः ॥ २८ ॥ प्रथमप्रवेशे शिरोनामनं द्विधा द्वितीये च तथैव । तेनैव चतुःशिरः तद् भणितमिदम् एकनिष्क्रमणम् ॥ २९ ॥ एवं यथाजातैकं त्रिगुप्तसहितं च भवन्ति चत्वारि । शेषेषु क्षेत्रेषु पञ्चविंशतिरावश्यका भवन्ति ॥ ३० ॥ २ सिरिनामणं-सं. ॥ ३ तहा चेअ-खं. । तह चेव-मु. शां. धर्मसंग्रहवृत्तौ पृ० १७९ ॥ ४ तिगुत्ति-सं विना । दृश्यतां पृ० ६५४ पं० ५ ॥ ५ तित्ती०-मु. ॥ ६ त्रयस्त्रिंशदाशातनास्वरूपं प्रवचनसारोद्धारे तद्वृत्तौ [ पृ० ३१-३४ ] च विस्तरेण वर्णितम् । धर्मसंग्रहवृत्तौ [ पृ० १७६-१७७ ] आवश्यकसूत्रस्य प्रतिक्रमणाध्ययनस्य हारिभद्र्यां वृत्तौ [ पृ० ७२५-७२७ ] आवश्यकचूर्णौ दशाश्रुतस्कन्धादौ चापि विस्तरेण वर्णितं दृश्यते ॥

गमनम्, पृष्ठतोऽप्यासन्नगमनम्, निःश्वास-क्षुत-श्लेष्मपातादिदोषप्रसङ्गात्। ततश्च यावता भूभागेन गच्छत आशातना न भवति तावता गन्तव्यम्। १। २। ३।

एवं पुरतः पार्श्वतः पृष्ठतश्च स्थानम्। ४। ५। ६।

तथा पुरतः पार्श्वतः पृष्ठतो वा निषदनम्। ७। ८। ९।

आचार्येण सहोच्चारभूमिं गतस्याचार्यात् प्रथममेवाचमनम्। १०।

गुरोरालपनीयस्य कस्यचिच्छिष्येण प्रथममालपनम्[2]। ११।

शिष्यस्याचार्येण सह बहिर्गतस्य पुनर्निवृत्तस्याचार्यात् प्रथममेव गमनागमनालोचनम्। १२।

भिक्षामानीय शिष्येण गुरोः पूर्वं शैक्षस्य कस्यचित् पुरत आलोच्य पश्चाद् गुरोरालोचनम्। १३।

भिक्षामानीय प्रथमं शैक्षस्य कस्यचिदुपदर्श्य गुरोर्दर्शनम्। १४।

भिक्षामानीय गुरुमनापृच्छ्य शैक्षाणां यथारुचि प्रभूतभैक्ष[3]दानम्। १५।

भिक्षामानीय शैक्षं[4] कञ्चन निमन्त्र्य पश्चाद् गुरोरुपनिमन्त्रणम्। १६।

---

१ ०रालाप०-सं. मु. धर्मसंग्रहवृत्तौ च पृ० १७७। प्रवचनसारोद्धारवृत्तौ [पृ० ३३] ०रालप० इति पाठः॥
२ ०मालापनम्-सं. धर्मसंग्रहवृत्तौ च। दृश्यतामुपरितनं टिप्पणम्॥ ३ भैक्ष्यदानं-मु.॥ ४ शैक्ष-खं.॥ शैक्षकं कंचन-सं.।

शिष्येण भिक्षामानीयाचार्याय यत् किञ्चिद् दत्वा स्निग्ध-मधुर-मनोज्ञाहार-शाकादीनां वर्ण-गन्ध-रस-स्पर्शवतां च[1] द्रव्याणां स्वयमुपभोगः । १७ ।

रात्रौ 'आर्याः! कः स्वपिति जागर्ति वा?' इति गुरोः पृच्छतोऽपि जाग्रताऽपि शिष्येणाप्रतिश्रवणम् । १८ ।

शेषकालेऽपि गुरौ व्याहरति यत्र तत्र स्थितेन शयितेन वा शिष्येण प्रतिवचनदानम् । १९ ।

आहूतेनासनं शयनं वा त्यक्त्वा संनिहितीभूय 'मस्तकेन वन्दे' इति वदता गुरुवचनं श्रोतव्यम्, तदकुर्वत आशातना । २० ।

गुरुणा आहूतस्य शिष्यस्य 'किम्' इति वचनम्, भणितव्यं च 'मस्तकेन वन्दे' इति । २१ ।

गुरुं प्रति शिष्यस्य त्वंकारः । २२ ।

गुरुणा ग्लानादिवैयावृत्त्यादिहेतोः 'इदं कुरु' इत्यादिष्टः 'त्वमेव किं न कुरुषे' इति 'त्वमलसः' इत्युक्ते 'त्वमप्यलसः' इति च[2] शिष्यस्य तज्जातवचनम् । २३ ।

गुरोः पुरतो बहोः कर्कशस्योच्चैःस्वरस्य च शिष्येण वदनम् । २४ ।

गुरौ कथां कथयति 'एवमेतत्' इत्यन्तराले शिष्यस्य वचनम् । २५ ।

गुरौ धर्मकथां कथयति 'न स्मरसि त्वमेतमर्थम्, नायमर्थः संभवति' इति शिष्यस्य वचनम् । २६ ।

---

१ ०स्पर्शरसवतां–खं. सं. धर्मसंग्रहवृत्तौ च पृ० १७७ । प्रवचनसारोद्धारवृत्तौ [पृ० ३३] 'रस-स्पर्शवताम्' इति पाठः ॥
२ च–नास्ति मु. ॥



षट्सु आवश्यकेषु वन्दनकस्य व्याख्या

गुरौ धर्मं कथयति सौमनस्यरहितस्य गुरूक्तमननुमोदमानस्य 'साधूक्तं भवद्भिः' इत्यप्रशंसतः शिष्यस्योपहतमनस्त्वम् । २७ ।

गुरौ धर्मं कथयति 'इयं भिक्षावेला, सूत्रपौरुषीवेला, भोजनवेला,' इत्यादिना शिष्येण पर्षद्भेदनम् । २८ ।

गुरौ धर्मकथां कथयति 'अहं कथयिष्यामि' इति शिष्येण कथाच्छेदनम् । २९ ।

तथा आचार्येण धर्मकथायां कृतायामनुत्थितायामेव पर्षदि स्वस्य पाटवादिज्ञापनाय शिष्येण सविशेषं धर्मकथनम् ।३०।

गुरोः पुरत उच्चासने समासने वा शिष्यस्योपवेशनम् । ३१ ।

गुरोः शय्यासंस्तारकादिकस्य पादेन घट्टनम्, अननुज्ञाप्य हस्तेन वा स्पर्शनम्, घट्टयित्वा स्पृष्ट्वा वाऽक्षामणम्; यदाह—

"संघट्टइत्ता कायेणं, तहा उवहिणामवि ।
खमेह अवराहं मे, वइज्ज न पुण त्ति अ ॥ १ ॥" [दशवै० ९।२।१८] । ३२ ।

गुरोः शय्या-संस्तारकादौ स्थानं निषदनं[2] शयनं चेति । ३३ ।

१ "'संघट्टिय' स्पृष्ट्वा 'कायेन' देहेन कथंचित् तथाविधप्रदेशोपविष्टमाचार्यं तथा 'उपधिना' कल्पादिना कथंचित् संघट्टय मिथ्यादुष्कृतपुरःसरमभिवन्द्य 'क्षमस्व' सहस्व 'अपराधं' दोषं मे मन्दभाग्यस्यैव 'वदेद्' ब्रूयात्, 'न पुनरिति च' नाहमेनं भूयः करिष्यामीति सूत्रार्थः" इति दशवैकालिकसूत्रस्य हरिभद्रसूरिरचितायां वृत्तौ पृ० २५० ॥ २ निषीदनं-मु. ॥

एतदर्थसंवादिन्यो गाथाः—

पुरओ १ पक्खा २ सन्ने ३ गमणं ३ ठाणं ३ निसीअणं ३ ति नव ।
सेहे पुव्वं आयमइ १० आलवइ ११ तह य आलोए १२ ॥ १ ॥

असणाइअमालोअइ १३ पडिदंसइ १४ देई[2] १५ उवनिमंतेइ १६ ।
सेहस्स तहाऽऽहारइ लुद्धो निद्धाइ[3] गुरुपुरओ १७ ॥ २ ॥

राओ गुरुस्स वयओ तुसिणी सुणिरो वि १८ सेसकाले वि १९ ।
तत्थगओ वा पडिसुणइ २० बेइ किं ति व २१ तुमं ति गुरुं २२ ॥ ३ ॥

तज्जाएणं पडिहणइ २३ बेइ बहु २४ तह कहंतरे वयइ ।
एवमिमं ति २५ न सरसि २६ नो सुमणे २७ भिंदई परिसं २८ ॥ ४ ॥

---

१ पुरतः पक्षत आसन्ने गमनं ३ स्थानं ३ निषदनम् ३ इति नव। शैक्षः पूर्वमाचामति १०, आलपति ११ तथा च आलोचयति १२ ॥ १ ॥ अशनादिकमालोचयति १३ प्रतिदर्शयति १४ ददाति १५ उपनिमन्त्रयति। शैक्षस्य १६ तथा आहारयति लुब्धः स्निग्धादि गुरुपुरतः १७ ॥ २ ॥ रात्रौ गुरोर्वदतः तूष्णीकः शृण्वन्नपि १८ शेषकालेऽपि १९। तत्रगतो वा प्रतिशृणोति २० ब्रवीति 'किम्' इति वा २१ 'त्वम्' इति गुरुम् २२ ॥ ३ ॥ तज्जातेन प्रतिहन्ति २३ ब्रवीति बहु २४ तथा कथान्तरे वदति। 'एवमिदम्' इति २५ न स्मरसि २६ न सुमनाः २७ भिनत्ति पर्षदम् २८ ॥ ४ ॥ २ देइ–स. धर्मसंग्रहवृत्तौ च पृ० १७७ ॥ ३ निद्धाइं–शां. ॥

छिंदइ[1] कहं २९ तहाणुट्ठियाइ परिसाइ कहइ सविसेसं ३० ।
गुरुपुरओ वि निसीयइ ठाइ समुच्चासणे सेहो ३१ ॥ ५ ॥
संघट्टइ पाएणं सेज्जासंथारयं गुरुस्स तहा ३२ ।
तत्थेव ठाइ निसिअइ सुअइ[2] व सेहो ३३ त्ति तेत्तीसं ॥ ६ ॥

इह[3] यद्यपि यतिरेव वन्दनककर्तोक्तो न श्रावकः, तथापि यतेः कर्तुर्भणनात् श्रावकोऽपि कर्त्ता विज्ञेयः, प्रायेण यतिक्रियानुसारेणैव श्रावकक्रियाप्रवृत्तेः, श्रूयते च कृष्णवासुदेवेनाऽष्टादशानां यतिसहस्राणां द्वादशावर्तवन्दनमदायि, इत्याशातना अपि यत्यनुसारेण यथासंभवं श्रावकस्य वाच्याः ।

एवं वन्दनकं दत्त्वाऽवग्रहमध्यस्थित एव विनेयोऽतिचारालोचनं कर्तुकामः किञ्चिदवनतकायो गुरु प्रतीदमाह—'इच्छाकारेण सदिसह देवसियं आलोएमि' इति । इच्छाकारेण निजेच्छया, संदिशत आज्ञां दत्त[4], दैवसिकं दिवसभवम् 'अतिचारम्' इति गम्यम्; एवं रात्रिक-पाक्षिकादिकमपि द्रष्टव्यम्, आलोचयामि मर्यादया सामस्त्येन वा प्रकाशयामि । इह च दैवसिकादीनामयं कालनियमो यथा—दैवसिकं मध्याह्नादारभ्य निशीथं यावद् भवति, रात्रिकं निशीथादारभ्य मध्याह्नं यावद् भवति, पाक्षिक-चातुर्मासिक-सांवत्सरिकाणि पक्षाद्यन्ते भवन्ति ।

---

१ छिनत्ति कथाम् २९ तथाऽनुत्थितायां पर्षदि कथयति सविशेषम् ३० । गुरुपुरतोऽपि निषीदति तिष्ठति समुच्चासने शैक्षः ३१ ॥ ५ ॥ संघट्टयति पादेन शय्यासंस्तारकं गुरोस्तथा ३२ । तत्रैव तिष्ठति निषीदति स्वपिति वा शैक्षः ३३ इति-त्रयस्त्रिंशत् ॥ ६ ॥
२ सुयइ-शां. सं. । सुअइ अवसेहो-मु. ॥ ३ इत आरभ्य तुला धर्मसंग्रहवृत्तौ पृ० १७९-१८२ ॥ ४ ददत-मु. धर्मसंग्रहवृत्तौ च ॥

॥ ६८१ ॥

षट्सु आवश्यकेषु अतिचारालोचनम्

अत्रान्तरे 'आलोअह' इति गुरुवचनमाकर्ण्य एतदेव शिष्यः समर्थयन्नाह—'इच्छं आलोएमि,' इच्छाम्यभ्युपगच्छामि गुरुवचः, आलोचयामि पूर्वमभ्युपगतमर्थं क्रियया प्रकाशयामीति।

इत्थं प्रस्तावनामभिधायालोचनामेव साक्षात्कारेणाह—

'जो मे देवसिओ अइयारो कओ काइओ वाइओ माणसिओ उस्सुत्तो उंम्मग्गो[1] अकप्पो अकरणिज्जो दुज्झाओ दुव्विचिंतिओ अणायारो अणिच्छियव्वो असावगपाउग्गो[2] नाणे दंसणे चरित्ताचरित्ते सुए सामाइए तिण्हं गुत्तीणं चउण्हं कसायाणं पंचण्हमणुव्वयाणं तिण्हं गुणव्वयाणं चउण्हं सिक्खावयाणं बारसविहस्स सावगधम्मस्स जं खडियं जं विराहियं[3] तस्स मिच्छा मि दुक्कडं'।

व्याख्या—यो[4] मया दिवसे भवो दैवसिकोऽतिचारोऽतिक्रमः कृतो निर्वर्तितः, स पुनरतिचार उपाधिभेदेनानेकधा भवति, अत एवाह—'काइओ' कायः प्रयोजनं प्रयोजकोऽस्यातिचारस्येति कायिकः, एवं 'वाइओ' वाक् प्रयोजनमस्य वाचिकः, एवं मनः प्रयोजनमस्येति मानसिकः, 'उस्सुत्तो[5]' सूत्रादुत्क्रान्त उत्सूत्रः, सूत्रमतिक्रम्य कृत इत्यर्थः। 'उंम्मग्गो,[6]' मार्गः क्षायोपशमिको भावः, तमतिक्रान्त उन्मार्गः, क्षायोपशमिकभावत्यागेनौदयिकभावसंक्रमकृत[7] इत्यर्थः। 'अकप्पो,' कल्पो न्यायो विधिराचारश्चरणकरणव्यापार इति यावत्, न कल्पोऽकल्पोऽतद्रूप इत्यर्थः। करणीयः सामान्येन कर्त्तव्यः, न करणीयोऽकरणीयः। हेतुहेतुमद्भावश्चात्र यत एवोत्सूत्रोऽत एवोन्मार्ग इत्यादि। उक्तस्तावत् कायिको वाचिकश्च।

१ उमग्गो–खं. सं.॥ २ °पाओगो–शां. खं. सं.॥ ३ विराहीयं–सं.॥ ४ तुला–आवश्यकसूत्रस्य प्रतिक्रमणाध्ययनस्य हारिभद्री वृत्तिः पृ० ५७१–५७२॥ ५ उसुत्तो–खं.॥ ६ उमग्गो–मु.॥ ७ संक्रमः कृत–मु.॥

अधुना मानसिकमाह—'दुज्झाओ,' दुष्टो ध्यातो दुर्ध्यात एकाग्रचित्ततयाऽऽर्तरौद्रलक्षणः। 'दुव्विचिंतिओ,'[1] दुष्टो विचिन्तितो दुर्विचिन्तितः, अशुभ एव चलचित्ततया।

"जं थिरमज्झवसाण तं झाणं जं चलं तयं चित्तं।[2]" [ ध्यानशतके[3] गा० २ ]

इति वचनात्। यत एवेत्थंभूतस्तत एव 'अणायारो,' आचरणीयः श्रावकाणामाचारः, न आचारोऽनाचारः। यत एवानाचरणीयोऽत एव 'अणिच्छियव्वो,' अनेष्टव्यः, मनागपि मनसापि न एष्टव्यः, आस्तां तावत् कर्तव्यः। यत एवेत्थंभूतोऽत एव 'असावगपाउग्गो,'[4] अश्रावकप्रायोग्यः[5]–अभ्युपेतसम्यक्त्वः प्रतिपन्नाणुव्रतश्च प्रतिदिवसं यतिभ्यः सकाशात् साधूनामगारिणां च सामाचारीं शृणोतीति श्रावकः, तस्य प्रायोग्य[6] उचितः श्रावकप्रायोग्यः[7], न तथा, श्रावकानुचित इत्यर्थः।

अयं चातिचारः क्व विषये भवतीत्याह–'णाणे दंसणे चरित्ताचरित्ते' इति। ज्ञानविषये, दर्शनविषये, स्थूलसावद्ययोगनिवृत्तिभावाच्चारित्रं च सूक्ष्मसावद्ययोगनिवृत्त्यभावादचारित्रं च चारित्राचारित्रम्, तस्मिन्, देशविरतिविषये इत्यर्थः।

अधुना भेदेन व्याचष्टे–'सुए' श्रुतविषये, श्रुतग्रहणं मत्यादिज्ञानोपलक्षणम्, तत्र विपरीतप्ररूपणा अकालस्वाध्यायश्चातिचारः। 'सामाइए' सामायिकविषये, सामायिकग्रहणात् सम्यक्त्वसामायिक-देशविरतिसामायिकयोर्ग्रहणम्। तत्र

---

१ दुवि०-खं.॥ २ 'तं हुज्ज भावणा वा अणुपेहा वा अहव चिंता॥' इति उत्तरार्धम्। ३ यत् स्थिरमध्यवसानं तद् ध्यानं यच्चलं तकं चित्तम्। तद् भवेद् भावना वा अनुप्रेक्षा वा अथवा चिन्ता॥ ४ ०पाओग्गो-शां. सं.। दृश्यतां पृ० ६८२ टि० २॥ ५ न श्रावक०-शां.॥ ६ प्रयोग्य-खं. सं.॥ ७ ०प्रयोग्यः-खं.॥

सम्यक्त्वसामायिकातिचारः शङ्कादिः। देशविरतिसामायिकातिचारं तु भेदेनाह—'तिण्हं गुत्तीणं' तिसृणां गुप्तीनां 'यत् खण्डितम्' इत्यादिना सर्वत्र योगः। मनोवाक्कायगोपनात्मिकास्तिस्रो गुप्तयो व्याख्याताः, तासां चाश्रद्धान-विपरीत-प्ररूपणाभ्यां खण्डना विराधना च। चतुर्णां क्रोध-मान-माया-लोभलक्षणानां कषायाणां प्रतिषिद्धानां करणेनाऽश्रद्धान-विपरीतप्ररूपणाभ्यां च। पञ्चानामणुव्रतानां त्रयाणां गुणव्रतानां चतुर्णां शिक्षाव्रतानामुक्तस्वरूपाणाम्, अणुव्रतादिमीलनेन द्वादशविधस्य श्रावकधर्मस्य यत् खण्डितं देशतो भग्नम्, यद् विराधितं सुतरां भग्नम्, न पुनरेकान्ततोऽभावमापादितम्, 'तस्स मिच्छा मि दुक्कडं,' तस्य दैवसिकाद्यतिचारस्य ज्ञानादिगोचरस्य, तथा गुप्तीनां कषायाणां द्वादशविधश्रावकधर्मस्य च यत् खण्डनं विराधनं चातिचाररूपं तस्य मिथ्येति प्रतिक्रामामि, दुष्कृतमेतत्, अकर्तव्यमिदं ममेत्यर्थः।



अत्रान्तरे विनेयः पुनरप्यर्धावनतकायः प्रवर्धमानसंवेगो मायामदविप्रमुक्त आत्मनः सर्वातिचारविशुद्ध्यर्थं सूत्रमिदं पठति—'सव्वस्स वि देवसियं दुच्चिंतियं[3] दुब्भासियं दुच्चिट्ठियं इच्छाकारेण संदिसह।' सर्वाण्यपि लुप्तषष्ठीकानि पदानि।

ततोऽयमर्थः—सर्वस्यापि दैवसिकस्याणुव्रतादिविषये प्रतिषिद्धाचरणादिना जातस्यातिचारस्येति गम्यते; पुनः कीदृशस्य? दुश्चिन्तितस्य, दुष्टमार्तरौद्रध्यानतया चिन्तितं यत्र स तथा, तस्य, दुश्चिन्तितोद्भवस्येत्यर्थः, अनेन मानसमतीचारमाह। दुष्टं सावद्यवाग्रूपं भाषितं यत्र स तथा, तस्य, दुर्भाषितोत्पन्नस्येत्यर्थः, अनेन वाचिकं सूचयति। दुष्टं प्रतिषिद्धं धावन-वल्गनादिकाय-क्रियारूपं चेष्टितं यत्र स तथा, तस्य, दुश्चेष्टितोद्भवस्येत्यर्थः, अनेन कायिकमाह। अस्यातिचारस्य किमित्याह—इच्छाकारेण संदिसहेति, आत्मीयेच्छया मम प्रतिक्रमणाज्ञां प्रयच्छत, इत्युक्त्वा तूष्णीको गुरुमुखं प्रेक्षमाण आस्ते।

---

१ ०क्कमामि–मु.॥ २, ३, ४, ५ खं. मध्ये सर्वत्र 'य' स्थाने 'अ' इति पाठः॥ ६, ७ यत्र तत् तथा–मु.॥

ततो गुरुराह—'पडिक्कमह' प्रतिक्रामत। ततः शिष्यः प्राह—'इच्छं' इच्छाम्येतद् भगवद्वचः, 'तस्स' तस्य दैवसिकातिचारस्य 'मिच्छा मि दुक्कडं' आत्मीयं दुष्कृतं मिथ्येति जुगुप्स इत्यर्थः।

तथा, द्वितीयच्छ[1](व)न्दनकेऽवग्रहान्तः[2]स्थित एव विनेयोऽर्धावनतकायः स्वापराधक्षमणां[3] चिकीर्षुर्गुरुं प्रतीदमाह—'इच्छाकारेण संदिसह' इति, इच्छाकारेण स्वकीयाभिलाषेण न पुनर्बलाभियोगादिना, संदिशत आज्ञां प्रयच्छत यूयम्। आज्ञादानस्यैव विषयमुपदर्शयन्निदमाह—

'अब्भुट्ठिओ[4] म्हि अब्भंतर[5]देवसिअं[6] खामेमि' अभ्युत्थितोऽस्मि प्रारब्धोऽस्मि अहम्, अनेनाभिलापमात्रस्य व्यपोहेन क्षमणाक्रियायाः प्रारम्भमाह—'अब्भंतर[7]देवसिअं[8]' इति दिवसाभ्यन्तरसंभवम् अतिचारम्[9]' इति गम्यते, क्षमयामि मर्षयामि इत्येका वाचना।

अन्ये त्वेवं पठन्ति—'इच्छामि खमासमणो अब्भुट्ठिओ[10] म्हि अब्भंतर[11]देवसिअं[12] खामेउं' इति, इच्छामि अभिलषामि क्षमयितुम् इति योगः, हे क्षमाश्रमण[13]!, न केवलमिच्छामि, किन्तु 'अब्भुट्ठिओ[14] म्हि' इत्यादि पूर्ववदेव।

---

१ द्वितीयच्छन्द०–इत्येव सर्वासु हस्तलिखितप्रतिषु मु. मध्ये च पाठः। सं. मध्ये 'द्वितीयेच्छन्दनके' इति पाठः। धर्मसंग्रहवृत्तौ [पृ० १८१] 'द्वितीयच्छन्दनके' इति पाठ.। २ ०दनकावग्रह०–मु. शां. खं.॥ ३ ०क्षामणां–सं. खं. मु.। ४ ०ट्ठिओ अम्हि–मु०। ०ट्ठिअम्हि–खं.॥ ५ अब्भितर०–मु.॥ ६ ०सियं–खं. सं.॥ ७ अब्भिं०–मु.॥ ८ ०सियं–सं.॥ ९ अती०–मु.॥ १० ०ट्ठिओ अम्हि–मु.। ०ट्ठियम्हि०–खं.॥ ११ अब्भि–मु.॥ १२ ०सियं–शां.–सं.॥ १३ ०श्रवण–खं.॥ १४ ०ट्ठिओ अम्हि–मु.। ०ट्ठिअम्हि–खं.॥

एवं स्वाभिप्रायं प्रकाश्य तूष्णीमास्ते यावद् गुरुराह—'खामेह' इति क्षमयस्वेत्यर्थः। ततः स गुरुवचनं बहु मन्यमान आह—'इच्छं खामेमि' इति, 'इच्छं[1]' इच्छामि भगवदाज्ञाम्, 'खामेमि' क्षमयामि च स्वापराधम्। अनेन क्षमणक्रियायाः प्रारम्भमाह। ततो विधिवत् पञ्चभिरङ्गैः स्पृष्टधरणीतलो मुखवस्त्रिकया स्थगितवदनदेश इदमाह—

'जं किंचि अपत्तिअं परपत्तिअं भत्ते पाणे विणए वेयावच्चे आलावे संलावे उच्चासणे समासणे अंतरभासाए उवरिभासाए जं किंचि मज्झ विणयपरिहीणं सुहुमं[2] वा बायरं वा तुब्भे जाणह अहं न याणामि तस्स मिच्छा मि दुक्कडं।'

व्याख्या—'जं किंचि' यत् किञ्चित् सामान्यतो निरवशेषं वा, 'अपत्तियं' आर्षत्वादप्रीतिकमप्रीतिमात्रम्, 'परपत्तिअं' प्रकृष्टमप्रीतिकं परप्रत्ययं वा परहेतुकम्, उपलक्षणत्वादस्वात्मप्रत्ययं चेति[3] द्रष्टव्यम्, युष्मद्विषये मम जातं युष्माभिर्वा मम जनितमिति वाक्यशेषः, तस्स मिच्छा मि इत्युत्तरेण संबन्धः तथा, 'भत्ते' भक्ते भोजनविषये, 'पाणे' पानविषये, 'विणए' विनयेऽभ्युत्थानादिरूपे, 'वेआवच्चे' वैयापृत्ये[4] वैयावृत्त्ये वा औषधपथ्यादिनाऽवष्टम्भरूपे, 'आलावे' आलापे सकृज्जल्परूपे, 'संलावे' संलापे मिथःकथारूपे, 'उच्चासणे' गुरोरासनादुच्चैरासने, 'समासणे' गुर्वासनेन तुल्ये आसने, 'अंतरभासाए' अन्तर[5]-भाषायां गुरोर्भाषमाणस्य विचाल[6]भाषणरूपायाम्, 'उवरिभासाए, उपरि भाषायां गुरोर्भाषणानन्तरमेव विशेषभाषणरूपायाम्[7]; एषु भक्तादिषु 'जं किंचि' यत् किञ्चित् समस्तं सामान्यतो वा, 'मज्झ' मम, 'विणयपरिहीणं' विनयपरिहीणं[8] शिक्षा-

षट्सु आवश्यकेषु क्षमणम्

१ इच्छं-नास्ति शां.॥ २ सुहमं-खं.॥ ३ (वेति?)॥ ४ ०पृत्त्ये-सं.॥ ५ अन्तर्भाषायां-मु.॥ ६ 'वचलुं भाषण-वचमां बोलवुं' इति गुजरातीभाषायाम्॥ ७ विशेषरूपायाम्-शां.॥ ८ ०परिहीनं-मु.॥

वियुक्तं 'संजातम्' इति शेषः। विनयपरिहीणस्यैव द्वैविध्यमाह—'सुहुमं वा बायरं वा' सूक्ष्ममल्पप्रायश्चित्तविशोध्यम्, बादरं बृहत्प्रायश्चित्तविशोध्यम्, वाशब्दौ द्वयोरपि मिथ्यादुष्कृतविषयत्वतुल्यतोद्भावनार्थौ, 'तुब्भे जाणहे'ति यूयं जानीथ सकलभाववेदकत्वात्, 'अहं न याणामि' अहं पुनर्न जानामि, मूढत्वात्। तथा 'यूयं' न जानीथ प्रच्छन्नकृतत्वादिना, अहं जानामि स्वयं कृतत्वात्, तथा यूयं न जानीथ परेण कृतत्वादिना, अहं न जानामि विस्मरणादिना, तथा यूयमपि जानीथ अहमपि जानामि द्वयोः प्रत्यक्षत्वात्' एतदपि द्रष्टव्यम्। 'तस्स' तस्य षष्ठीसप्तम्योरभेदात् तस्मिन्नप्रीतिकविषये विनयपरिहीणविषये च 'मिच्छा मि दुक्कडं' मिथ्या मे दुष्कृतमिति[2] स्वदुश्चरितानुतापसूचकं स्वदोषप्रतिपत्तिसूचकं वा प्रतिक्रमणमिति पारिभाषिकं वाक्यं प्रयच्छामीति शेषः, अथवा तस्येति विभक्तिपरिणामात् तदप्रीतिकं विनयपरिहीणं[3] च मिथ्या, मोक्षसाधनविपर्ययभूतं वर्तते मे मम; तथा दुष्कृतं पापमिति स्वदोषप्रतिपत्तिरूपमपराधक्षमणमिति। वन्दनपूर्वके चालोचनक्षमणे भवत इति कृत्वा वन्दनकानन्तरं ते व्याख्याते, अन्यथा प्रतिक्रमणे तयोरवसरः, वन्दनकस्य च फलं कर्मनिर्जरा, यदाहुः—

"वंदणएणं[4] भंते[5]! जीवे किं अज्जिणइ? गोअमा! अट्ठ कम्मपयडीओ निविडबंधणबद्धाओ सिढिलबंधणबद्धाओ

---

१ ०परिहीन०–मु.॥ २ ०नुपात्तसू०–मु०॥ ३ परिहीनं–मु.॥ ४ वंदणेणं–खं.॥ ५ वन्दनकेन भदन्त! जीवः किमर्जयति? गोतम! अष्ट कर्मप्रकृतीर्निविडबन्धनबद्धाः शिथिलबन्धनबद्धाः करोति, चिरकालस्थितिकाः अल्पकालस्थितिकाः करोति, तीव्रानुभावा मन्दानुभावाः करोति, बहुप्रदेशाग्रा अल्पप्रदेशाग्राः करोति, अनादिकं च अनवदग्रं संसारकान्तारं न पर्यटति।

॥ ६८७ ॥

करेइ, चिरकालट्ठिइआओ अप्पकालट्ठिइआओ करेइ, तिव्वाणुभावाओ मंदाणुभावाओ करेइ, बहुप्पएसग्गाओ[1] अप्पपएसग्गाओ[2] करेइ, अणाइअं च णं अणवदग्गं संसारकंतारं नो परिअट्टइ।" [ ]

तथा—"वंदणएणं[3] भंते! जीवे किं अज्जिणइ[4]?। गोअमा! वंदणएणं नीयागोत्तं कम्मं खवेइ, उच्चागोत्तं निबंधइ, सोहग्ग च णं अप्पडिहयं आणाफल निव्वत्तेइ।" [ उत्तराध्ययने ३०।१० ]

तथा—"विणओवयार[5] माणस्स भंजणा पूअणा गुरुजणस्स।

तित्थयराण य आणा सुअधम्माराहणाऽकिरिया ॥ १ ॥" [ आवश्यकनिर्युक्तौ १२२९ ]

षट्सु आवश्यकेषु अतिचारालोचनम्

अथ प्रतिक्रमणम्—प्रतीत्युपसर्गः[6] प्रतीपे प्रातिकूल्ये वा; "क्रमू पादविक्षेपे," [ धा० पा० ३८५ ], अस्य प्रतिपूर्वस्य भावानडन्तस्य प्रतीपं क्रमणं प्रतिक्रमणम्। अयमर्थः—शुभयोगेभ्योऽशुभयोगान्तरं क्रान्तस्य शुभेष्वेव क्रमणात् प्रतीपं क्रमणम्, यदाह—

---

१, २ ०सगाओ–शां.॥ ३ वंदणेणं–खं.॥ ४ वन्दनकेन भदन्त! जीवः किमर्जयति? गौतम! वन्दनकेन नीचैर्गोत्रं कर्म क्षपयति, उच्चैर्गोत्रं निबध्नाति, सौभाग्यं च अप्रतिहतमाज्ञाफलं निर्वर्तयति। ५ "विनयोपचारः कृतो भवति ⋯⋯ मानस्य ⋯⋯ भञ्जना ⋯⋯ पूजना गुरुजनस्य ⋯⋯ तीर्थकराणां चाज्ञाऽनुपालिता भवति ⋯⋯ श्रुतधर्माराधना कृता भवति ⋯⋯ पारम्पर्येण अक्रिया भवति, यतोऽक्रियः सिद्धः"–आवश्यकसूत्रस्य हारिभद्री वृत्तिः पृ० ५४५॥ ६ तुला–आवश्यकसूत्रस्य प्रतिक्रमणाध्ययनस्य हारिभद्रीवृत्तिः पृ० ५५१, आवश्यकचूर्णिः पृ० ५२। प्रवचनसारोद्धारवृत्तिः पृ० ३९। धर्मसंग्रहवृत्तिः पृ० २०८॥

"स्वस्थानाद् यत् [1]परस्थानं प्रमादस्य वशाद् गतः ।
तत्रैव क्रमणं भूयः प्रतिक्रमणमुच्यते ॥ १ ॥" [ ]

प्रतिकूलं वा गमनं प्रतिक्रमणम्, यदाह—

"[2]क्षायोपशमिकाद् भावादौदयिकवशं गतः ।
तत्रापि च स एवार्थः प्रतिकूलगमात् स्मृतः ॥ १ ॥" [ ]

[3]प्रति प्रति क्रमणं वा प्रतिक्रमणम्; उक्तं च,—

"[4]प्रति प्रति प्रवर्तनं वा शुभेषु योगेषु मोक्षफलदेषु ।
निःशल्यस्य यतेर्यत् तद् वा ज्ञेयं प्रतिक्रमणम् ॥ १ ॥" [ ]

तच्चातीता-ऽनागत-वर्तमानकालत्रयविषयम्। नन्वतीतविषयमेव प्रतिक्रमणम्, यत उक्तम्—"अईयं पँडिक्कमामि, पडुप्पन्नं संवरेमि, अणागयं पच्चक्खामि" [ ] इति, तत् कथं त्रिकालविषयता ? उच्यते—अत्र प्रतिक्रमणशब्दोऽशुभयोगनिवृत्तिमात्रार्थः—

१ परं स्थानं-सं. आवश्यकचूर्णौ प्रतिक्रमणाध्ययने [पृ० ५२] प्रवचनसारोद्धारवृत्तौ [पृ० ३९] च॥ २ "क्षायोपशमिकाद्वापि भावादौदयिकं गतः। तत्रापि हि स······॥" इति आवश्यकचूर्णौ [पृ० ५२] पाठः॥ ३ प्रति–नास्ति खं.॥ ४ "उक्तं च—पति पति पवत्तणं वा सुभेसु जोगेसु मोक्खफलदेसु। निस्सल्लस्स जतिस्सा जं तेणं तं पडिक्कमणं॥" इति. आवश्यकचूर्णौ

षद्सु आवश्यकेषु प्रतिक्रमण-स्वरूपम्

"[1]मिच्छत्तपडिक्कमणं तहेव अस्संजमे पडिक्कमणं ।
कसायाण पडिक्कमणं जोगाण य अप्पसत्थाण ॥ १ ॥" [ आवश्यकनिर्युक्तौ १२६४ ]

ततश्च निन्दाद्वारेणाशुभयोगनिवृत्तिरूपमतीतविषयं प्रतिक्रमणम्, प्रत्युत्पन्नविषयमपि संवरद्वारेण, अनागतमपि प्रत्याख्यानद्वारेणेति न कश्चिद् दोषः ।

तच्च दैवसिकादि पञ्चधा–दिवसस्यान्ते दैवसिकम्, रात्रेरन्ते रात्रिकम्, पक्षस्यान्ते पाक्षिकम्, चतुर्णां मासानामन्ते चातुर्मासिकम्, संवत्सरस्यान्ते सांवत्सरिकम् । पुनर्द्वेधा–ध्रुवम् अध्रुवं च । ध्रुवं भरतैरावतेषु प्रथमचरमतीर्थकरतीर्थेषु, अपराधो भवतु वा मा वा, उभयकालं प्रतिक्रमणम् । अध्रुवं मध्यमतीर्थकरतीर्थेषु विदेहेषु च कारणजाते प्रतिक्रमणम् । यदाह—

"[2]सपडिक्कमणो धम्मो पुरिमस्स य पच्छिमस्स य जिणस्स ।
मज्झिमयाण जिणाणं कारणजाए पडिक्कमणं ॥ १ ॥" [ आवश्यकनिर्युक्तौ १२५८ ]

---

१ मिथ्यात्वप्रतिक्रमणं तथैवासंयमे प्रतिक्रमणम् । कषायाणां प्रतिक्रमणं योगानां चाप्रशस्तानाम् ॥ २ सप्रतिक्रमणो धर्मः पुरिमस्य च पश्चिमस्य च जिनस्य । मध्यमकानां जिनानां कारणजाते प्रतिक्रमणम् ॥

---

प्रतिक्रमणाध्ययने पृ० ५२॥ ५ तद् विज्ञेयं-मु०॥ ६ अइयं-मु. शां. खं.। अतीतं प्रतिक्रामामि, प्रत्युत्पन्नं संवृणोमि, अनागतं प्रत्याख्यामि। ७ आवश्यकसूत्रस्य हारिभद्र्यां वृत्तौ [ पृ० ५५१ ] प्रवचनसारोद्धारवृत्तौ [ पृ० ३९ ] चेदृश एव पाठ उद्धृतः। योगशास्त्रटीकायामपि [ पृ० ४८२ ] पूर्वमुद्धृतमिदम्, इदं वचनं पाक्षिकसूत्रेऽपि वर्तते, किन्तु तत्र 'अईयं निंदामि' इति पाठः।

प्रतिक्रमणविधिश्चैताभ्यो गाथाभ्योऽवसेयः,—

“पंचविहायारविसुद्धिहेउमिह[1] साहू[2] सावगो[3] वा वि।
पडिकमणं सह गुरुणा गुरुविरहे कुणइ ईक्को वि ॥ १ ॥

---

१ पञ्चविधाचारविशुद्धिहेतोरिह साधुः श्रावको वापि। प्रतिक्रमणं सह गुरुणा गुरुविरहे करोति एकोऽपि ॥ १ ॥

२ इयमेका गाथा प्रवचनसारोद्धारवृत्तौ [ पृ० ३९ ] उद्धृता। धर्मसंग्रहवृत्तौ [ पृ० २३८–२३९ ] इमास्त्रयस्त्रिंशदपि गाथा उद्धृताः। “चिइवंदण उस्सग्गो पोत्तियपडिलेह वंदणालोए। सुत्तं वंदण खामण वंदणय चरित्तउस्सग्गो ॥ १७५ ॥ दंसणनाणुस्सग्गो सुयदेवयखेत्तदेवयाणं च। पुत्तियवंदण थुइतिय सक्कथय थोत्त देवसियं ॥ १७६ ॥ इति प्रवचनसारोद्धारे दैवसिकप्रतिक्रमणविधिर्दर्शितः। अस्य व्याख्या—“दैवसिकप्रतिक्रमणविधिः—चिइवंदणेत्यादि। त्रस-स्थावरजन्तुरहिते प्रेक्षितप्रमार्जिते स्थण्डिले ईर्यापथिकीं प्रतिक्रम्य प्रथमं चैत्यवन्दनं विधेयम्। तदनु आचार्यादीनां क्षमाश्रमणानि दत्त्वा भूमिनिहितशिराः सकलदैवसिकातिचाराणां मिथ्यादुष्कृतं दत्त्वा सामायिकपूर्वकम् ‘इच्छामि ठाइउं काउस्सग्गं’ इत्यादिसूत्रं भणित्वा दैवसिकातिचारचिन्तनार्थं कायोत्सर्गं करोति ··· ततः पारयित्वा ‘लोगस्सुज्जोयगरे’ इत्यादि भणित्वा उपविश्य ‘पोत्तियपडिलेह’ त्ति पोतिकाया मुखपोतिकायाः प्रतिलेखः प्रतिलेखनम् ······तदनु ‘वंदण’ त्ति वन्दनकं दातव्यम्। ‘आलोए’ त्ति तत आलोचनं कार्यम्, कायोत्सर्गचिन्तितातिचारांश्च गुरोः कथयति। तदनूपविश्य ‘सुत्तं’ ति सामायिकादिसूत्रं भणति साधुः स्वकीयं श्रावकस्तु स्वकीयम्, यावद् ‘वंदामि जिणे चउवीसं’ इति। ‘वंदण’ त्ति तदनु वन्दनकं ददाति। ‘खामण’ त्ति तदनु क्षामणकं कुरुते गुर्वादीनाम्, तत्र चायं विधिः—गुरुमादिं कृत्वा ज्येष्ठानुक्रमेण सर्वान् क्षामयति, आचीर्णं तु—यदा पञ्चकादिर्गणो भवति तदा त्रितयं क्षमयति, अथ पञ्चकमध्ये तदा ज्येष्ठमेवैकमिति, एवं प्राभातिकप्रतिक्रमणादिष्वपि। तदनु ‘वंदणय’ त्ति वन्दनकं ददाति, चः समुच्चये, इदं च वन्दनकम् ‘अल्लियावणवंदणयं’ इत्युच्यते, आचार्यादीनामाश्रयणायेत्यर्थः। ‘चरित्तउस्सग्गो’ त्ति तदनु चारित्र-

॥ ६९१ ॥

वंदित्तु चेइआइं दाउं चउराइए खमासमणे।
भूनिहिअसिरो सयलाइआरमिच्छोक्कडं देइ ॥ २ ॥
सामाइअपुव्वमिच्छामि ठाइउं काउस्सग्गमिच्चाइ।
सुत्तं भणिअ पलंबिअभुयकुप्परधरियपहिरणओ[3] ॥ ३ ॥

१ वन्दित्वा चैत्यानि दत्त्वा चतुर आदौ क्षमाश्रमणान्। भूनिहितशिराः सकलातिचारमिथ्यादुष्कृतं ददाति ॥ २ ॥
सामायिकपूर्वम् 'इच्छामि ठाइउं काउस्सग्गं' इत्यादि। सूत्रं भणित्वा प्रलम्बितभुजकूर्परधृतपरिधानकः ॥ ३ ॥
२ ठाइयं-खं.॥ ३ ०च्चाइं-मु.॥ ३ ०परिहरणओ-सं.॥

विशुद्ध्यर्थं कायोत्सर्गः कार्यः, तत्रोद्द्योतकरद्वयं चिन्तनीम्। दंसणेत्यादि, ततो दर्शनशुद्धिनिमित्तमुत्सर्गः, तत्रैकोद्द्योतकरचिन्तनम्। तदनु ज्ञानशुद्धिनिमित्तमुत्सर्गः, तत्रैकोद्द्योतकरचिन्तनम्। सुयदेवय-खेत्तदेवयाणं च त्ति श्रुतसमृद्धिनिमित्तं श्रुतदेवतायाः कायोत्सर्गमेकनमस्कारचिन्तनं च कृत्वा तदीयां स्तुतिं ददाति अन्येन दीयमानां शृणोति वा। ततः सर्वविघ्ननिर्दलननिमित्तं क्षेत्रदेवतायाः कायोत्सर्गः कार्यः, एकनमस्कारचिन्तनं कृत्वा तदीयां स्तुतिं ददाति परेण दीयमानां वा शृणोति, चः समुच्चये, तदनु नमस्कारमभिधाय उपविश्य 'पुत्तिय' त्ति मुखपोतिकायाः प्रत्युपेक्षणम्, तदनु 'वंदण' त्ति मङ्गलादिनिमित्तं वन्दनकं देयम्। तदनु 'इच्छामो अणुसट्ठिं' इति भणित्वा उपविश्य गुरुभिरेकस्यां स्तुतौ भणितायां 'थुइतिय' त्ति प्रवर्धमानं स्तुतित्रयं प्रवर्धमानस्वरेण भणनीयम्। तदनु 'सक्कथयं' ति शक्रस्तवो भणनीयः। 'थोत्त' ति तदनु स्तोत्रं भणनीयम्। तदनु दिवसातिचारविशुद्धये कायोत्सर्गः करणीयः, लोगस्योद्द्योतकरचतुष्टयं च चिन्तनीयम्। इदं च गाथायामभणितमपि विज्ञेयम्। 'देवसियं' ति इदं सन्ध्यायां दैवसिकं प्रतिक्रमणं विज्ञेयम्।" इति प्रवचनसारोद्धारवृत्तौ पृ० १०६॥ ३ साहु-खं. सं. प्रवचनसारोद्धारवृत्तौ [पृ० ३९] धर्मसंग्रहवृत्तौ [पृ० २१८] च॥ ४ एक्को-खं. सं.॥

॥ ६९३ ॥

[1]घोडगमाईदोसेहिं विरहिअं तो करेइ उस्सग्गं ।
नाहिअहो जाणुड्ढं चउरंगुल[2]ठइअकडिपट्टो ॥ ४ ॥

तत्थ य धरेइ हिअए जहक्कमं दिणकए [3]अईआरे ।
पारित्तु नमोक्कारेण पढइ चउवीस[4]त्थयदंडं ॥ ५ ॥

संडासगे पमज्जिय उवविसिय अलग्ग[5]विअयबाहुजुओ ।
[6]मुहणंतगं च कायं च पेहए च पंचवीसइहा ॥ ६ ॥

[7]उट्ठिय ठिओ सविणयं विहिणा गुरुणो करेइ [8]कीकम्मं ।
बत्तीसदोसरहिअं पणवीसावस्सगविसुद्धं ॥ ७ ॥

---

१ घोटकादिदोषैर्विरहितं ततः करोति उत्सर्गम्। नाभ्यधो जानूर्ध्वं चतुरङ्गुलं स्थापितकटीपट्टः ॥ ४ ॥ तत्र च धारयति हृदये यथाक्रमं दिनकृतानतीचारान्। पारयित्वा नमस्कारेण पठति चतुर्विंशतिस्तवदण्डकम् ॥ ५ ॥ सन्दंशकौ प्रमृज्य उपविश्य अलगितबाहुयुगः। मुखवस्त्रिकां च कायं च प्रेक्षते पञ्चविंशतिधा ॥ ६ ॥ उत्थाय स्थितः सविनयं विधिना गुरोः करोति कृतिकर्म। द्वात्रिंशद्दोषरहितं पञ्चविंशत्यावश्यकविशुद्धम् ॥ ७ ॥

२ ठविय०-मु ॥ ३ अइआरे-खं.। ४ ०थइदंडं-खं.। थुइदंडं-सं. ॥ ५ ०ग्गवाविअय० खं.। ६ महुणंतगं-शां. खं. ॥ ७ उट्ठियट्ठिओ-मु.॥ ८ किइकम्मं-सं. मु. ॥

॥ ६९३ ॥

[1]अह सम्ममवणअंगो करजुअविहिधरिअपुत्ति-रयहरणो ।
परिचिंतिअ अइआरे जहक्कमं गुरुपुरो वियडे ॥ ८ ॥
अह उवविसित्तु सुत्तं सामाइयमाइयं पढिय पयओ ।
'[2]अब्भुट्ठिओ म्हि' इच्चाइ पढइ [3]दुह उट्ठिओ विहिणा ॥ ९ ॥
दाऊण वंदणं तो पणगाइसु जइसु खामए तिण्णि ।
[4]कीकम्मं [5]करि आयरिअमाइगाहातिगं पढइ [6]सड्ढो ॥ १० ॥
इय सामाइयउस्सग्गसुत्तमुच्चरिय काउस्सग्गठिओ ।
[7]चिंतइ उज्जोयदुगं चरित्तअइयारसुद्धिकए ॥ ११ ॥

---

१ अथ सम्यगवनताङ्गः करयुगविधिधृतमुखपोतिकारजोहरणः । परिचिन्त्य अतिचारान् गुरोः पुरतः प्रकटयेत् ॥ ८ ॥ अथ उपविश्य सूत्रं सामायिकादिकं पठित्वा प्रयतः । 'अब्भुट्ठिओ म्हि' इत्यादि पठति द्विधा उत्थितो विधिना ॥ ९ ॥ दत्त्वा वन्दनं ततः पञ्चकादिषु यतिषु क्षमयेत् त्रीन् । कृतिकर्म कृत्वा 'आयरिय' आदि गाथात्रिकं पठति श्राद्धः ॥ १० ॥ इति सामायिकउत्सर्गसूत्रमुच्चार्य कायोत्सर्गस्थितः । चिन्तयति उद्द्योतद्विकं चारित्रातिचारशुद्धिकृते ॥ ११ ॥

२ अब्भुट्ठियओ म्हि-मु. ॥ अब्भुट्ठियम्हि-शां. खं. ॥ ३ तह-खं. ॥ ४ किइकम्मं-मु. ॥ ५ करे-मु. खं. ॥ ६ सड्ढो-नास्ति मु. ॥ ७ चिंतइ य उज्जो०-सं. ॥

विहिणा पारिय सम्मत्तसुद्धिहेउं च पढइ उज्जोअं ।[1]
तह सव्वलोयअरहंतचेइयाराहणोसग्गं ॥ १२ ॥
काउं उज्जोयगरं चिंतिय पारेइ सुद्धसम्मत्तो ।
पुक्खरवरदीवड्ढं कड्ढइ सुअसोहणनिमित्तं ॥ १३ ॥
पुण पणवीसोस्सासं उस्सग्गं कुणइ पारए विहिणा ।[2]
तो सयलकुसलकिरियाफलाण सिद्धाण पढइ थयं ॥ १४ ॥
अह सुअसमिद्धिहेउं सुअदेवीए करेइ उस्सग्गं ।
चिंतेइ नमोकारं सुणइ व देइ व्व तीइ थुइं ॥ १५ ॥
एवं खेत्तसुराए[3] उस्सग्गं कुणइ सुणइ देइ थुइं ।
पढिऊण पंचमंगलमुवविसइ पमज्ज संडासे ॥ १६ ॥

---

१ विधिना पारयित्वा सम्यक्त्वशुद्धिहेतोश्च पठति उद्द्योतम् । तथा सर्वलोकार्हच्चैत्याराधनोत्सर्गम् ॥ १२ ॥ कृत्वा उद्द्योतकरं चिन्तयित्वा पारयति शुद्धसम्यक्त्वः । 'पुक्खरवरदीवड्ढं' कर्षति [=कथयति] श्रुतशोधननिमित्तम् ॥१३॥ पुनः पञ्चविंशत्युच्छ्वासम् उत्सर्गं करोति पारयति विधिना । ततः सकलकुशलक्रियाफलानां सिद्धानां पठति स्तवम् ॥ १४ ॥ अथ श्रुतसमृद्धिहेतोः श्रुतदेव्याः करोति उत्सर्गम् । चिन्तयति नमस्कारं शृणोति वा ददाति वा तस्याः स्तुतिम् ॥ १५ ॥ एवं क्षेत्रसुर्या उत्सर्गं करोति शृणोति ददाति स्तुतिम् । पठित्वा पञ्चमङ्गलमुपविशति प्रमृज्य सन्दंशकौ ॥ १६ ॥

२ पणवीसोसासं-शां. सं. ॥ ३ सुरीए-मु. धर्मसंग्रहवृत्तौ च पृ० ३० ॥

पुंव्वविहिणेव पेहिय पुत्तिं दाऊण वंदणं गुरुणो ।
इच्छामो अणुसट्ठिं ति भणिय [2]जाणूहिं तो ठाइ ॥ १७ ॥
गुरुथुइगहणे थुइ तिन्नि वद्धमाणक्खरस्सरो पढइ ।
[3]सक्कत्थव थवं पढिय कुणइ पच्छित्तउस्सग्गं ॥ १८ ॥
[4]ऍवं ता देवसिअं राइयमवि एवमेव नवरि तहिं ।
पढमं दाउं मिच्छा मि दुक्कडं पढइ [5]सक्कथयं ॥ १९ ॥

---

१ पूर्वविधिनैव प्रेक्ष्य मुखपोतिकां दत्त्वा वन्दनं गुरोः। 'इच्छामो अणुसट्ठिं' इति भणित्वा जानुभिः ततः तिष्ठति ॥ १७॥ गुरुस्तुतिग्रहणे स्तुतीः तिस्रो वर्धमानाक्षरस्वरः पठति। शक्रस्तवं स्तवं पठित्वा करोति प्रायश्चित्तोत्सर्गम् ॥ १८ ॥ एवं तावद् दैवसिकं रात्रिकमपि एवमेव नवरं तत्र। प्रथमं तावद् दत्त्वा 'मिच्छा मि दुक्कडं' पठति शक्रस्तवम् ॥ १९ ॥

२ जाणूहि–खं. सं. ॥ ३ सक्कत्थयं–खं. ॥ ४ दृश्यताम् आवश्यकचूर्णौ कायोत्सर्गाध्ययने प्राभातिक–पाक्षिक–चातुर्मासिक–सांवत्सरिकप्रतिक्रमणविधिः पृ० २६३–२६६। आवश्यकहारिभद्र्यां पृ० ७९०–७९४॥ ५ सक्कत्थयं–सं. मु. ॥

"मिच्छादुक्कड पणिवायदंडयं काउसग्गातियकरणं। पुत्तिय वंदण आलोय सुत्त वंदणय खामणयं ॥ १७७॥ वंदणयं गाहातियपाढो छम्मासियस्स उस्सग्गो। पुत्तिय वंदण नियमो थुइतिय चिइवंदणा राओ ॥ १७८॥ नवरं पढमो चरणे दंसणसुद्धीय बीय उस्सग्गो। सुअनाणस्स तईओ नवरं चिंतेइ तत्थ इमं ॥ १७९॥ तइए निसाइआरं चिंतइ चरिमम्मि किं तवं काहं। छम्मास्सा एगदिणाइ हाणि जा पोरिसि नमो वा ॥ १८०॥" इति प्रवचनसारोद्धारे रात्रिकप्रतिक्रमणविधिर्दर्शितः। अस्य व्याख्या–"अथ प्राभातिकप्रतिक्रमणमभिधीयते। तत्राह–मिच्छादुक्कड पणिवायेत्यादि, तत्र भूमितलनिवेशितशिरःकमलः सकलनिशातिचाराणां

उंट्ठिय करेइ विहिणा उस्सग्गं चिंतए अ उज्जोअं ।
बीयं दंसणसुद्धीए चिंतए तत्थ इममेव ॥ २० ॥

१ उत्थाय करोति विधिना उत्सर्गं चिन्तयेच्च उद्द्योतम् । द्वितीयं दर्शनशुद्धेः चिन्तयेत् तत्र इममेव ॥ २० ॥

मिथ्यादुष्कृतं दत्त्वा प्रणिपातदण्डकं शक्रस्तवमभिधाय उत्थाय सामायिकादिसूत्रं भणित्वा चारित्रशुद्धिनिमित्तं कायोत्सर्गं करोति एकोद्द्योतकरचिन्तनं कृत्वा पारयित्वा च दर्शनशुद्धिनिमित्तं 'लोगस्सुज्जोयगरं' भणित्वा पुनः कायोत्सर्गं करोति, तत्रापि एकमुद्द्योतकरं चिन्तयति, पारयित्वा ज्ञानशुद्धिनिमित्तं पुक्खरवरिच्चि भणित्वा पुनः कायोत्सर्गं विधत्ते, तत्र च निशातिचारांश्चिन्तयति इति कायोत्सर्गत्रितयकरणम्, पारयित्वा सिद्धादिस्तुतिं पठित्वा उपविश्य 'पुत्तिय' त्ति मुखपोतिकां प्रत्युपेक्ष्य वन्दनकमालोचनं च कृत्वा उपविश्य नमस्कारपूर्वं सामायिकादि सूत्रं 'वंदामि जिणे चउव्वीसं' इति पर्यन्तं भणित्वा वन्दनकं ददाति, तदनु क्षामणं कुरुते ॥ १७७ ॥ वंदणयमित्यादि, पुनर्वन्दनम् । 'आयरियउवज्झाए' इत्यादिगाथात्रिकस्य पाठः । तदनु पूर्ववत् सामायिकादिसूत्रं भणित्वा षाण्मासिकतपसश्चिन्तनाय कायोत्सर्गः । तत्र च–येन संयमयोगानां हानिः कापि न जायते । तत् तपः प्रतिपद्येऽहमिति भावितमानसः ॥ १ ॥ श्रीमहावीरतीर्थेऽस्मिन्नुपवासतपः किल । षण्मासान् यावदाद्दिष्टमुत्कृष्टं गणधारिभिः ॥ २ ॥ ततो जीव ! शक्तोऽसि त्वं संयमयोगानाबाधया षाण्मासिकं तपः कर्तुम् ? इति विचिन्त्य न शक्नोमीति परिभावयति । एकदिनहीनान् षण्मासान् शक्नोषि कर्तुम् ? एकोनत्रिंशद् दिनानि पञ्च मासांश्चेत्यर्थः । न शक्नोमीति पूर्ववत् । पुनर्द्व्यादिदिनहीनान् यावदेकोनत्रिंशद्दिनहीनान् षण्मासानिति । एवं पञ्च मासान् चतुरस्त्रीन् द्वौ च एकादिदिनहीनांश्च चिन्तयेत्, एकं च मासमेकादिदिनहीनं यावत् त्रयोदशदिनहीनम् ततश्चतुस्त्रिंशद् द्वात्रिंशादिकं द्विकद्विकहान्या चिन्तयेत् यावत् चतुर्थम्, तदनु आचाम्ल–निर्विकृतिक–पूर्वार्द्ध–एकाशनादि नमस्कारसहितान्तं यावत् कर्तुं शक्नोति तद् मनसि कृत्वा कायोत्सर्गं पारयति । चतुर्विंशतिस्तवं च भणित्वा उपविश्य पुत्तिय त्ति मुखपोतिकां प्रत्युपेक्षते । वंदण त्ति ततो वन्दनकं दत्ते । नियम त्ति ततो नियमः–प्रत्याख्यानम् । थुइतिय त्ति ततः स्तुतित्रितयं प्रवर्धमानाक्षरं गृहगोधिकादिसत्त्वोत्थापनपरिहारायाल्पस्वरेण भणति । चिइवंदण त्ति ततश्चैत्य-

तइए निसाइआरं जहक्कमं चिंतिऊण पारेइ ।
सिद्धत्थय पढित्ता पमज्ज संडासमुवविसइ ॥ २१ ॥
पुव्वं व पुत्तिपेहणवंदणमालोयसुत्तपढणं च ।
वंदणखामणवंदणगाहातिगपढणमुस्सग्गो ॥ २२ ॥
तत्थ य चिंतइ संजमजोगाण न होइ जेण मे हाणी ।
तं पडिवज्जामि तवं छम्मासं ता न काउमलं ॥ २३ ॥
एगाइइगूणतीसूणयं पि न सहो न पंचमासमवि ।
एवं चउ-ति-दुमासं न समत्थो एगमासं पि ॥ २४ ॥

१ तृतीये निशातिचारं यथाक्रमं चिन्तयित्वा पारयति। सिद्धस्तवं पठित्वा प्रमृज्य सन्दंशकमुपविशति ॥ २१ ॥ पूर्वमिव मुखवस्त्रिकाप्रेक्षण-वन्दने आलोचनासूत्रपठनं च। वन्दन-क्षमण-वन्दन-गाथात्रिकपठनमुत्सर्गः ॥ २२ ॥ तत्र च चिन्तयति संयमयोगानां न भवति येन मे हानिः। तं प्रतिपद्ये तपः षण्मासं तावद् न कर्तुमलम् ॥ २३ ॥ एकाद्येकोनत्रिंशदूनकमपि न सहो न पञ्चमासमपि। एवं चतुः-त्रि-द्विमासं न समर्थ एकमासमपि ॥ २४ ॥

२ निसाअइ०–मु. ॥ ३ इगुण०–सं. ॥

वन्दनं विधत्ते राओ त्ति रात्रिप्रतिक्रमणे ॥ १७८ ॥ नवरमित्यादि, नवरं केवलं प्रथम उत्सर्गः चरणेति चारित्रशुद्धिनिमित्तम्, दर्शनशुद्धिनिमित्तं च द्वितीयः उत्सर्गः, एकैकोद्योतकरचिन्तनम्। श्रुतज्ञानस्य शुद्धिकृते तृतीयः। नवरं केवलं तत्रेदं वक्ष्यमाणं चिन्तयति ॥ १७९ ॥ तदेवाह—तइए निसेत्यादि, तृतीये उत्सर्गे निशातिचारं चिन्तयति। चरिमे कायोत्सर्गे किं तपः करिष्यामीति? षण्मासान् एकदिनादिहान्या यावत् पौरुषीं नमो वेति नमस्कारसहितं वा यावच्चिन्तयेदिति … … इति प्राभातिकप्रतिक्रमणविधिः” इति प्रवचनसारोद्धारवृत्तौ पृ० १०७–१०९ ॥

जा तं पि तेरसूणं चउतीसइ[2]माइओ दुहाणीए ।
[3]जाव चउत्थं तो जा आयंबि[4]लाइ पोरिसि नमो वा ॥ २५ ॥

जं सक्कं तं हियए धरेत्तु पारेत्तु पेहए पोत्तिं ।
दाउ वंदणमसढो तं चिय पच्चक्खए विहिणा ॥ २६ ॥

इच्छामो अणुसट्ठिं ति भणिय उवविसिअ पढइ तिण्णि थुई[5] ।
मिउसद्देणं सक्कत्थयाइ तो चेइए वंदे ॥ २७ ॥

अह पक्खियं चउद्दसिदिणम्मि पुव्वं व तत्थ देवसिअं ।
सुत्तंतं पडिक्[6]मिउं तो सम्ममिमं कमं कुणइ ॥ २८ ॥

---

१ यावत् तदपि त्रयोदशोनं चतुस्त्रिंशदादितो द्विहान्या। यावत् चतुर्थं तत आचाम्लादि यावत् पौरुषी नमस्कारसहितं वा ॥ २५ ॥
यत् शक्यं तद् हृदये धृत्वा पारयित्वा प्रेक्षते मुखपोतिकाम्। दत्त्वा वन्दनमशठः तदेव प्रत्याख्याति विधिना ॥ २६ ॥
'इच्छामो अणुसट्ठिं' इति भणित्वा उपविश्य पठति तिस्रः स्तुतीः। मृदुशब्देन शक्रस्तवादि ततश्चैत्यान् वन्दते ॥ २७ ॥
अथ पाक्षिकं चतुर्दशीदिने पूर्वमिव तत्र दैवसिकम्। सूत्रान्तं प्रतिक्रम्य ततः सम्यगिमं क्रमं करोति ॥ २८ ॥
२ ०माइअं-मु. धर्मसंग्रहवृत्तौ च पृ० २१९ ॥ ३ जा चउ०-खं. ॥ ४ ०लाइं-सं. ॥ ५ थुइं-सं. ॥ ६ पडिकमिउं-खं. विना ॥

॥ ६९९ ॥

मुहपोत्ती वंदणयं संबुद्धाखामणं तहालोए।
वंदण पत्तेयक्खामणं च वंदणयमह सुत्तं ॥ २९ ॥

१ मुखवस्त्रिका वन्दनकं संबुद्धक्षमणं तथाऽऽलोचः। वन्दनं प्रत्येकक्षमणं च वन्दनकमथ सूत्रम् ॥ २९ ॥
२ मुहपोत्ति-मु० ॥ ३ तदालोए-मु. ॥

"मुहपोत्ती वंदणयं संबुद्धाखामणं तहालोए। वंदणपत्तेयं खामणाणि वंदणयसुत्तं च ॥ १८१ ॥ सुत्तं अब्भुट्ठाणं उस्सग्गो पुत्ति वंदणं तह य। पज्जंते खामणयं एस विही पक्खिपडिक्कमणे ॥ १८२ ॥ चत्तारि दो दुवालस वीसं चत्ता य हुंति उज्जोया। देसिय राइय पक्खिय चाउम्मासे वरिसे या ॥ १८३ ॥" इति प्रवचनसारोद्धारे पाक्षिकप्रतिक्रमणविधिः। अस्य व्याख्या—"इदानीं पाक्षिकप्रतिक्रमणविधिमाह—मुहपत्ती वंदणयेत्यादि। तत्र चतुर्दशीपर्वणि दैवासिकं प्रतिक्रमणं 'तिविहेण पडिक्कंतो वंदामि जिणे चउव्वीसं' इत्येतदन्तं विधाय 'देवसियं आलोइय पडिकंतं, इच्छाकारेण संदिसह भगवन्! पक्खियमुहपत्ती पडिलेहुं'। 'गुरुणा 'पडिलेह' त्ति भणिते क्षमाश्रमणं दत्त्वा मुखपोत्तिकां प्रत्युपेक्षते। तदनु वन्दनकं ददाति, ततः सम्बुद्धानां गीतार्थानां पञ्चानां क्षामणकं विधत्ते, तथेति समुच्चये, तत आलोचनं कुर्वन्ति, तत्र च गुरुश्चतुर्थं दत्ते, चातुर्मासिकसंवत्सरयोश्च षष्ठाष्टमे, ततः पुनर्वन्दनकम्, ततः प्रत्येकं यतीनां क्षामणानि कुर्वन्ति, ततः पुनर्वन्दनकम्, ततः पाक्षिकसूत्रं त्रिशतं गुरोरादेशादूर्ध्वं स्थितो भणत्येकः, शेषाश्चोर्ध्वं स्थिता एव विकथादिरहिताः शृण्वन्ति, यदि च बालवृद्धादयो वा तावतीं वेलामूर्ध्वं स्थिता न शक्नुवन्ति स्थातुं तदा क्षमाश्रमणं दत्त्वा गुरूननुज्ञाप्य उपविश्य निद्रादिरहिताः प्रवर्धमानशुभभावाः शृण्वन्ति ॥ १८१ ॥ सूत्रसमाप्तौ पुनरुपविश्य सुत्तं ति प्रतिक्रमणसूत्रं भणन्ति। ततोऽभ्युत्थानं कृत्वा सामायिकादिसूत्रं च भणित्वा द्वादशोद्द्योतकरचिन्तनमुत्सर्गं करोति पारयित्वा च 'पोत्ति' त्ति मुखपोतिकाप्रत्युपेक्षणम्, ततो वन्दनकम्, तथा चेति समुच्चये, पज्जंते त्ति वन्दनकपर्यन्ते क्षामणकपञ्चकं कुर्वन्तीति पाक्षिकप्रतिक्रमणविधिः। चातुर्मासिके वार्षिकेऽपि च प्रतिक्रमणेऽयमेव विधिः, केवलमत्र सप्त सम्बुद्धक्षामणानि क्रियन्ते, महति च चातुर्मासिके कायोत्सर्गे विंशतिरुद्द्योतकराश्चिन्त्यन्ते, वार्षिके च चत्वारिंशदेको नमस्कारश्चेति। तदनु

प्रतिक्रमण-विधिः

सुत्तं अब्भुट्ठाणं उस्सग्गो पुत्ति वंदणं तह य।
पज्जंतियखामणयं[2] तह चउरो छोभवंदणया[3] ॥ ३० ॥
पुव्वविहिणेव सव्वं देवसियं वंदणाइ तो कुणइ।
सेज्जसुराउस्सग्गे[4] भेओ संतिथयपढणे[5] अ ॥ ३१ ॥
एवं चिय चउमासे वरिसे अ जहक्कमं विही णेओ।
पक्ख-चउमास-वरिसेसु नवरि नामम्मि नाणत्तं ॥ ३२ ॥
तह उस्सग्गोज्जोआ बारस बीसा समंगलग[6] चत्ता।
संबुद्धखामणं ति-पण-सत्त साहूण जहसंखं ॥ ३३ ॥" [ ]

१ सूत्रम् अभ्युत्थानम् उत्सर्गः पोतिका वन्दनकं तथा च। पर्यन्तिकक्षमणकं तथा चत्वारि स्तोभवन्दनानि ॥ ३० ॥ पूर्वविधिनैव सर्वं दैवसिकं वन्दनादि ततः करोति। शय्यासुर्युत्सर्गे भेदः शान्तिस्तवपठने च ॥ ३१ ॥ एवमेव चतुर्मासे वर्षे च यथाक्रमं विधिर्ज्ञेयः। पक्ष-चतुर्मास-वर्षेषु नवरं नाम्नि नानात्वम् ॥ ३२ ॥ तथा उत्सर्गोद्द्योता द्वादश विंशतिः समङ्गलकाः चत्वारिंशत्। सम्बुद्धक्षमणं त्रि-पञ्च-सप्तानां साधूनां यथासङ्ख्यम् ॥३३॥

२ खामणं-मु.॥ ३ थोभ०-मु.॥ ४ सुरीउ०-मु.॥ ५ ०त्थय०-सं.॥ ६समंगलिग०-मु.॥

पूर्वप्रतिक्रान्तदैवसिकाच्छेषं प्रतिक्रमणं कुर्वन्ति। पाक्षिकादिषु त्रिषु श्रुतदेवताकायोत्सर्गस्थाने भुवनदेवताकायोत्सर्गः क्रियते।.... ..........चत्वारो द्वादश विंशतिश्चत्वारिंशत्, चः समुच्चये, भवन्ति उद्द्योताः लोकस्योद्द्योतकराः दैवसिके रात्रिके पाक्षिके चातुर्मासिके वार्षिके च प्रतिक्रमणे यथासंख्येन चिन्त्यन्ते 'चंदेसु निम्मलयरा' इत्येतदन्ता इति ॥ १८३ ॥" इति प्रवचनसारोद्धारवृत्तौ पृ० १०९-१११ ॥

प्रतिक्रमणसूत्रविवरणं तु ग्रन्थविस्तरभयाद् नोक्तम् ।

अथ कायोत्सर्गः। कायस्य शरीरस्य स्थान-मौन-ध्यानक्रियाव्यतिरेकेणान्यत्रोच्छ्वसितादिभ्यः क्रियान्तराध्यासमधिकृत्य य उत्सर्गस्त्यागो 'नमो अरहंताणं' इति वचनात् प्राक् स कायोत्सर्गः। स च द्विविधः, चेष्टायामभिभवे च। चेष्टायां गमनागमनादावीर्यापथिकादिप्रतिक्रमणभावी, अभिभवे उपसर्गजयार्थम्, यदाहुः—

"सो उस्सग्गो दुविहो चेट्ठाए अभिभवे अ नायव्वो ।
भिक्खायरिया पढमो उवसग्गभिउंजणे बीओ ॥ १ ॥" [आवश्यकनिर्युक्तौ गा० १४६६]



१ तुला-प्रवचनसारोद्धारवृत्तिः पृ० १५७॥ धर्मसंग्रहवृत्तिः पृ० २२०॥ २ "स कायोत्सर्गो द्विविधः ........ चेष्टायामभिभवे च ज्ञातव्यः, तत्र 'भिक्खायरियादि पढमो', भिक्षाचर्यादौ विषये प्रथमः कायोत्सर्गः, तथाहि—चेष्टाविषय एवासौ भवति 'उवसग्गऽभिउंजणे बिइओ', उपसर्गा दिव्यादयः, तैरभियोजनमुपसर्गाभियोजनम्, तस्मिन् उपसर्गाभियोजने द्वितीयः, अभिभवकायोत्सर्ग इत्यर्थः। दिव्याद्यभिभूत एव महामुनिस्तदैवायं करोतीति हृदयम्। अथवा उपसर्गाणामभियोजनं 'सोढव्या मयोपसर्गाः, तद्भयं न कार्यम्' इत्येवंभूतम्, तस्मिन् द्वितीय इत्यर्थः ..... ..... संवत्सरमुत्कृष्टं कालप्रमाणम्, तथा च बाहुबलिना संवत्सरं कायोत्सर्गः कृत इति। अतोमुहुत्तं च अभिभवकायोत्सर्गे अन्त्यं जघन्यं कालपरिमाणम्। चेष्टाकायोत्सर्गस्य तु कालपरिमाणमनेकभेदभिन्नम्" इति आवश्यकसूत्रस्य कायोत्सर्गाध्ययने हारिभद्र्यां वृत्तौ पृ० ७७१-७७२। "सो पुण काउस्सग्गो दुविधो—चेट्ठाकाउसग्गो य अभिभवकाउस्सग्गो य। अभिभवो णाम अभिभूतो वा परेणं परं वा अभिभूय कुणति। परेणाभिभूतो यथा हूणादीहिं अभिभूतो सव्वं सरीरादि वोसिरामि त्ति काउस्सग्गं करेति। परं वा अभिभूय काउस्सग्गं करेति जथा तित्थगरो देवमणुयादिणो अणुलोमपडिलोमकारिणो भयादी पंच अभिभूय काउस्सग्गं कातुं प्रतिज्ञां पूरेति। चेट्ठाउस्सग्गो चेट्ठातो निष्फण्णो जथा गमणा-

तत्र चेष्टाकायोत्सर्गोऽष्ट-पञ्चविंशति-सप्तविंशति-त्रिशती-पञ्चशती-अष्टोत्तरसहस्रोच्छ्वासान् यावद् भवति, अभिभवकायोत्सर्गस्तु मुहूर्तादारभ्य संवत्सरं यावद् बाहुबलेरिव भवति ।

स च कायोत्सर्ग उच्छ्रित-निषण्ण-शयितभेदेन त्रेधा। एकैकश्चतुर्धा—उच्छ्रितोच्छ्रितो द्रव्यत उच्छ्रित ऊर्ध्वस्थानं भावत उच्छ्रितो धर्मध्यान-शुक्लध्याने इति प्रथमः। तथा द्रव्यत उच्छ्रित ऊर्ध्वस्थानं भावतोऽनुच्छ्रितः कृष्णादिलेश्यापरिणाम इति द्वितीयः। द्रव्यतो नोच्छ्रितो नोर्ध्वस्थानं भावत उच्छ्रितो धर्मध्यान-शुक्लध्याने इति तृतीयः। न द्रव्यतो नापि भावत उच्छ्रित इति चतुर्थः। एवं निषण्ण-शयितयोरपि चतुर्भङ्गी वाच्या ।

दोषरहितश्च कायोत्सर्गः कार्यः। दोषाश्चैकविंशतिः[2]—

आकुञ्चितैकपादस्य घोटकस्येव स्थानं घोटकदोषः । १ ।

---

१ "उसिउस्सिओ अ तह उस्सिओ अ उस्सियनिसन्नओ चेव। निसन्नुस्सिओ निसन्नो निसन्नगनिसन्नओ चेव॥ १४७३॥
निवणुस्सिओ निवन्नो निवन्ननिवन्नगो अ नायव्वो। एएसिं तु पयाणं पत्तेय परूवणं वुच्छं॥ १४७४॥
उस्सिअनिसन्नग निवन्नगे य इक्किक्कगम्मि उ पयम्मि। दव्वेण य भावेण य चउक्कभयणा उ कायव्वा॥ १४७५॥" इति आवश्यकनिर्युक्तौ॥ २ तुला–प्रवचनसारोद्धारवृत्तिः पृ० १५५–१६१। धर्मसंग्रहवृत्तिः पृ० १४५। आवश्यकचूर्णौ कायोत्सर्गाध्ययने पृ० २६८–२६९। आवश्यकसूत्रस्य हारिभद्रयां वृत्तौ अपि [पृ० ७९८] प्राकृतगाथाभिरेते दोषा वर्णिताः।

---

गमणादिषु काउस्सग्गो कीरति, अहवा जदि उवसग्गो अन्नो भवति छिंदिति वा तो चलति जो एसो चेट्ठाकाउस्सग्गो। एस अणेगविधो पुरतो वण्णिहिज्जति। ··· ··अभिभवकाउस्सग्गस्स इमं कालपमाणं—जहण्णेणं अंतोमुहुत्तं, उक्कोसेणं संवत्सरं जथा बाहुबलिस्स।" —आवश्यकचूर्णिः पृ० २४८–२४९॥

॥ ७०३ ॥

कायोत्सर्गस्वरूपम्

खरवातप्रकम्पिताया लताया इव कम्पनं लतादोषः । २ ।

स्तम्भमवष्टभ्य स्थानं स्तम्भदोषः । ३ ।

कुड्यमवष्टभ्य स्थानं कुड्यदोषः । ४ ।

माले शिरोऽवष्टभ्य स्थानं मालदोषः । ५ ।

हस्तौ गुह्यदेशे स्थापयित्वा शबर्या इव स्थानं शबरीदोषः । ६ ।

शिरोऽवनम्य कुलवध्वा इव स्थानं वधूदोषः । ७ ।

निगडितस्येव विवृतपादस्य मिलितपादस्य वा स्थानं निगडदोषः । ८ ।

नाभेरुपर्याजानु चोलपट्टकं निबध्य स्थानं लम्बोत्तरदोषः । ९ ।

दंशादिवारणार्थमज्ञानाद् वा स्तने चोलपट्टकं निबध्य स्थानं स्तनदोषः, 'धात्रीवद् बालार्थं स्तनावुन्नमय्य[1] स्थानं वा' इत्येके । १० ।

पार्ष्णी मीलयित्वाऽग्रचरणौ विस्तार्य, अङ्गुष्ठौ वा मीलयित्वा पार्ष्णी विस्तार्य स्थानं शकटोद्धिकादोषः[2] । ११ ।

व्रतिनीवत् पटेन शरीरमाच्छाद्य स्थानं संयतीदोषः[3] । १२ ।

खलीनमिव रजोहरणं पुरस्कृत्य स्थानं खलीनदोषः, अन्ये खलीनार्तहयवदूर्ध्वाधःकम्पनं खलीनदोषमाहुः । १३ ।

वायसस्येवेतस्ततो नयनगोलकभ्रमणं दिग्वेक्षणं[4] वा वायसदोषः । १४ ।

---

१ ०नमय(य्य?)-शां.॥ २ ०टोर्द्धिका-खं. संपू.॥ ३ संयतादोषः-खं. सं.॥ ४ दिगपेक्षणं-संपू. मु. विना शां. खं. सं.। दिग्निरीक्षणं-प्रवचनसारोद्धारवृत्तौ पृ० १५९॥

॥ ७०५ ॥ षट्पदिकाभयेन कपित्थवच्चोलपट्टं संवृत्य मुष्टौ गृहीत्वा स्थानं कंपित्थदोषः, 'एवमेव मुष्टिं बद्ध्वा स्थानम्' इत्यन्ये । १५ ।

भूताविष्टस्येव शीर्षं कम्पयतः स्थानं शीर्षोत्कम्पितदोषः[2] । १६ ।

मूकस्येवाव्यक्तशब्दं कुर्वतः स्थानं मूकदोषः । १७ ।

आलापकगणनार्थमङ्गुलीश्चालयतः स्थानमङ्गुलिदोषः । १८ ।

व्यापारान्तरनिरूपणार्थं भ्रूसंज्ञामेवमेव वा भ्रूनृत्तं कुर्वतः स्थानं भ्रूदोषः । १९ ।

निष्पद्यमानवारुण्या इव बुडबुडारावेण स्थानं वारुणीदोषः, 'वारुणीमत्तस्येव घूर्णमानस्य स्थानं वारुणीदोषः' इत्यन्ये । २० ।

अनुप्रेक्षमाणस्येवौष्ठपुटे चलयतः स्थानमनुप्रेक्षादोषः । २१ । यदाहुः—

"घोडग[3] लया य खंभे कुड्डे माले य सबरि वहु णिअले ।
लंबोत्तर थण उद्धी संजइ खलिणे य वायस कविट्ठे ॥ १ ॥
सीसोकंपिअ मूइ अंगुली भमुहा य वारुणी पेहा ।" [ आवश्यकनिर्युक्तौ गा० १५६०-१५६१½ ] इति ।

१ कपित्थो दोषः-सं. ॥ २ ०तादोषः-शां. खं. संपू. ॥ ३ घोटकः लता च स्तम्भः कुड्यं मालश्च शबरी वधूः निगडः । लम्बोत्तरः स्तनः ऊद्धिः संयती खलीनं वायसः कपित्थः ॥ शीर्षोत्कम्पितः मूकः अङ्गुली भ्रूः वारुणी प्रेक्षा । ॥ ७०६ ॥

एके त्वन्यानपि कायोत्सर्गदोषानाहुः, यथा—

"निष्ठीवनं वपुःस्पर्शः [1]प्रपञ्चबहुला स्थितिः ।
सूत्रोदितवि[2]धेर्न्यूनं [3]वयोऽपेक्षाविवर्जनम् ॥ १ ॥
कालापेक्षाव्यतिक्रान्तिर्व्याक्षेपा[4]सक्तचित्तता ।
लोभाकुलितचित्तत्वं पापकार्योद्यमः परः ॥ २ ॥
कृत्याकृत्यविमूढत्वं [5]पट्टकाद्युपरि स्थितिः ।" [ ] इति ।



कायोत्सर्गस्यापि फलं निर्जरैव । यदाहुः—

"काउस्सग्गे जह संठिअस्स भज्जंति अंगमंगाइं[6] ।
इय [7]भंजंति सुविहिया अट्ठविहं कम्मसंघायं ॥ १ ॥" [आवश्यकनिर्युक्तौ गा० १५६५]

---

१ प्रपञ्चा ब०-सं.॥ २ ०विधेर्न्यूनो-प्रवचनसारोद्धारवृत्तौ पृ० १६०॥ ३ जवोऽपेक्षा०-शां.॥ ४ सक्तिचि०-सं.॥ ५ पट्टिका०-सं. विना॥ ६ अंगुवंगाइं। इय भिंदंति-मु.। "कायोत्सर्गे सुस्थितस्य भज्यन्ते अङ्गोपाङ्गानि 'इय' एवं चित्तनिरोधेन 'भिन्दन्ति' विदारयन्ति मुनिवराः साधवः अष्टविधम् अष्टप्रकारं कर्मसंघातं ज्ञानावरणीयादिलक्षणमिति गाथार्थः—" आवश्यकहारिभद्री पृ० ८०१॥ ७ भज्जंति-पा.॥

कायोत्सर्गसूत्रार्थः प्राग् व्याख्यात एव ।

अथ प्रत्याख्यानम्–प्रति प्रवृत्तिप्रतिकूलतया आ मर्यादया ख्यानं प्रकथनं प्रत्याख्यानम्। तच्च द्वेधा–मूलगुणरूपमुत्तरगुणरूपं च। मूलगुणा यतीनां महाव्रतानि, श्रावकाणामणुव्रतानि। उत्तरगुणास्तु यतीनां पिण्डविशुद्ध्यादयः, श्रावकाणां तु गुणव्रत-शिक्षाव्रतानि। मूलगुणानां तु प्रत्याख्यानत्वं हिंसादिनिवृत्तिरूपत्वात्, उत्तरगुणानां तु पिण्डविशुद्ध्यादीनां दिग्व्रतादीनां च प्रतिपक्षनिवृत्तिरूपत्वात्। तत्र स्वयं कृतप्रत्याख्यानः काले विनयपूर्वकं सम्यगुपयुक्तो गुरुवचनमनूच्चारयन्[2] स्वय जानन् ज्ञस्यैव गुरोः पार्श्वे प्रत्याख्यानं करोति। ज्ञत्वे च[3] चतुर्भङ्गी–द्वयोर्ज्ञत्वे प्रथमो भङ्गः शुद्धः १। गुरोर्ज्ञत्वे शिष्यस्याज्ञत्वे द्वितीयः। तत्र तत्कालं[4] शिष्यं संक्षेपतः प्रबोध्य यदा गुरुः प्रत्याख्यानं कारयति तदाऽयमपि शुद्धः, अन्यथा त्वशुद्धः २। गुरोरज्ञत्वे शिष्यस्य ज्ञत्वे तृतीयः। अयमपि तथाविधगुरोरभावे गुरुबहुमानाद् गुरोः पितृ-पितृव्य-मातुल-ज्येष्ठभ्रात्रादिकं साक्षिणं कुर्वतस्तृतीयः शुद्धः, अन्यथा त्वशुद्धः ३। द्वयोरज्ञत्वे अशुद्ध एव ४।

उत्तरगुणप्रत्याख्यानं प्रतिदिनोपयोगि द्विविधम्–संकेतप्रत्याख्यानमद्धाप्रत्याख्यानं च। तत्र संकेतप्रत्याख्यानं श्रावकः पौरुष्यादिप्रत्याख्यानं कृत्वा क्षेत्रादौ गतो गृहे वा तिष्ठन् 'भोजनप्राप्तेः प्राक् प्रत्याख्यानरहितो मा भूवम्'

१ तुला–प्रवचनसारोद्धारवृत्तिः पृ० ११४। धर्मसंग्रहवृत्तिः पृ० १८२॥ आवश्यकहारिभद्री पृ० ८०३॥ २ ०मनूच्चरन्–खं. मु. प्रवचनसारोद्धारवृत्तौ [पृ० ११४] धर्मसंग्रहवृत्तौ [पृ० १८३] च॥ ३ च–नास्ति मु०॥ ४ तत्कालशिष्यं–सं.॥ ५ तुला–पञ्चाशके ५। २–७॥ ६ द्वयोरज्ञत्वे चतुर्थः, असावशुद्ध एव–मु.॥ ७ दृश्यतां प्रवचनसारोद्धारवृत्तिः पृ० १२०। धर्मसंग्रहवृत्तिः पृ० १८३।

इत्यङ्गुष्ठादिसंकेतं करोति—'यावदङ्गुष्ठं मुष्टिं ग्रन्थिं वा न मुञ्चामि, गृहं वा न प्रविशामि, स्वेदबिन्दवो वा[2] यावद् न शुष्यन्ति, एतावन्तो वोच्छ्वासा यावद् न भवन्ति, जला[3]दिमञ्चिकायां यावदेते बिन्दवो न शुष्यन्ति, दीपो वा यावद् न निर्वाति तावद् न भुञ्जे' इति, यदाहुः—

"[4]अंगुट्ठमुट्ठिगंठीघरसेऊसासथिवुगजोइक्खे ।
एअं संकेय भणियं धीरेहिं अणंतनाणीहिं ॥ १ ॥" [ आवश्यकनिर्युक्तौ गा० १५७८ ]

प्रत्याख्यान-स्वरूपम्

---

१ ०दिकं संकेतं-मु. शां. ॥ २ वा नास्ति-खं. सं. संपू. ॥ धर्मसंग्रहवृत्तौ [पृ० १८३] च ॥ ३ जलार्द्रम०-मु. ॥ ४ "अङ्गुष्ठश्च मुष्टिश्चेत्यादिद्वन्द्वः अङ्गुष्ठ-मुष्टि-ग्रन्थि गृह-स्वेदोच्छ्वास-स्तिबुक-ज्योतिष्कान् तान् चिह्नं कृत्वा यत् क्रियते प्रत्याख्यानं तद् भणितमुक्तम् सकेतमेतत्, कैः धीरैः अनन्तज्ञानिभिरिति गाथासमासार्थः ॥ अवयवत्थो पुण केतं नाम चिंधं, सह केतेन सकेतं सचिह्नमित्यर्थः"—आवश्यकहारिभद्री पृ० ८४५ ॥ साकेयं णाम केयमिति गृहव्याख्या, गृहवासिनां प्रत्याख्यानमित्युक्तं भवति। द्वितीयोऽर्थः केयं णाम चिण्हं पच्चक्खाणे जाव एयं ताव ण जेमेमि त्ति। तत्थ गाथा-अंगुट्ठ०।" इति आवश्यकचूर्णौ [ प्रत्याख्यानाध्ययनस्य ] पृ० ३१०। "साकेतमिदानीमाह-केयमित्यादि। "कित निवासे" [ पा. धा. ९९३ ] इत्यस्य धातोः कित्यते उष्यते अस्मिन्निति घञि केतो गृहमुच्यते, सह तेन वर्तन्ते इति सहस्य सभावे सकेता गृहस्थाः, तेषामिदम् 'तस्येदम्' [ पा० ४।३।१२० ] इत्यणि साकेतं प्रत्याख्यानं प्रायेण गृहस्थानामेवेदं भवतीति। अथवा केतं चिह्नमुच्यते, सह केतेन चिह्नेन वर्तत इति सकेतम्, सकेतमेव प्रज्ञादित्वात् स्वार्थेऽणि साकेतमाहुर्मुनयः। ......अंगुट्ठी इत्यादि। अङ्गुष्ठश्च ग्रन्थिश्च मुष्टिश्च गृहं च स्वेदश्च उच्छ्वासश्च स्तिबुकश्च जोइक्खश्चेति समाहारो द्वन्द्वः, 'जोइक्ख' शब्दश्च देश्यो दीपे वर्तते, तद्विषया क्रिया सर्वत्र यथोचिता योजनीया, प्रत्याख्यानविचाले कृत्यमिदम्" इति प्रवचनसारोद्धार[ गा. १९९ ]वृत्तौ पृ० १२०–१२१ ॥

अद्धा कालस्तद्विषयं प्रत्याख्यानमद्धाप्रत्याख्यानम् । तच्च नमस्कारसहितम्, पौरुषी, दिनपूर्वार्धः, एकाशनम्, एकस्थानकम्, आचामाम्लम्, उपवासः, चरमम्, अभिग्रहः, विकृतिनिषेधश्चेति दशविधम्। यदाहुः—

"नवकार पोरिसीए पुरिमड्ढेकासणेगठाणे य।
आयंबिलऽभत्तट्ठे चरमे अ अभिग्गहे विगई ॥ १ ॥" [ आवश्यकनिर्युक्तौ गा० १६११ ]

नन्वेकाशनादिप्रत्याख्यानं कथमद्धाप्रत्याख्यानम्, न हि तत्र कालनियमोऽस्ति ? सत्यम्, अद्धाप्रत्याख्यानपूर्वाण्येकाशनादीनि प्रायेण क्रियन्त इत्यद्धाप्रत्याख्यानत्वेनोच्यन्ते ।

प्रत्याख्यानं चापवादरूपाकारसहितं कर्तव्यम्, अन्यथा तु भङ्गः स्यात्, स च दोषाय; यदाह—

"वयभंगे गुरुदोसो थेवस्स वि पालणा गुणकरी उ।
गुरुलाघवं च णेयं धम्मम्मि अओ अ आगारा ॥ १ ॥" [ पञ्चाशके ५।१२, पञ्चवस्तुके ५१२ ]

---

१ ०सणेयठा०–शां. खं.। "नमस्कार इत्युपलक्षणात् नमस्कारसहिते पौरुष्यां पुरिमार्द्धे एकाशने एकस्थाने च आचाम्ले अभक्तार्थे चरमे च अभिग्रहे विकृतौ। किम् ? यथासङ्ख्यमेते आकाराः"—इति आवश्यकसूत्रस्य हारिभद्र्यां वृत्तौ पृ० ८५२। "तच्च पच्चक्खाणं दसविधं—णमोक्कार पोरिसी······ ·" इति आवश्यकचूर्णौ पृ० ३१५॥ २ तुला–पञ्चाशकवृत्तिः पृ० ८८। प्रवचनसारोद्धारवृत्तिः पृ० १२३॥ ३ यदाहुः–मु.॥ तुला–धर्मसंग्रहवृत्ति पृ० १८४॥ ४ व्रतभङ्गे गुरुदोषः स्तोकस्यापि पालना गुणकरी तु। गुरुलाघवं च ज्ञेयं धर्मेऽतश्चाकाराः॥ ५ ओ–मु.॥

ते च नमस्कारसहितादिषु यावन्तो भवन्ति तावन्त उपदर्श्यन्ते। तत्र नमस्कारसहिते मुहूर्तमात्रकाले नमस्कारोच्चारणावसाने प्रत्याख्याने द्वावाकारौ भवतः। आक्रियते विधीयते प्रत्याख्यानभङ्गपरिहारार्थमित्याकारः प्रत्याख्यानापवादः।

ननु कालस्यानुक्तत्वात् संकेतप्रत्याख्यानमेवेदम्। नैवम्, सहितशब्देन मुहूर्तस्य विशेषणात्। अथ मुहूर्तशब्दो न श्रूयते, तत् कथं तस्य विशेष्यत्वम्?। उच्यते—अद्धाप्रत्याख्यानमध्येऽस्य पाठात्, पौरुषीप्रत्याख्यानस्यै[2] च वक्ष्यमाणत्वादवश्यं तदर्वाग् मुहूर्त एवावशिष्यते। अथ मुहूर्त्तद्वयादिकमपि कुतो न लभ्यते?। उच्यते—अल्पाकारत्वादस्य। पौरुष्यां हि षडाकाराः, तदस्मिन्[3] प्रत्याख्याने आकारद्वयवति स्वल्प एव कालोऽवशिष्यते। स च नमस्कारेण सहितः, पूर्णेऽपि काले नमस्कारपाठमन्तरेण प्रत्याख्यानस्यापूर्यमाणत्वात्; सत्यपि नमस्कारपाठे मुहूर्त्ताभ्यन्तरे प्रत्याख्यानभङ्गात्। तत् सिद्धमेतत्—मुहूर्त्तमानकालं नमस्कारसहितं प्रत्याख्यानमिति।

प्रत्याख्यान-स्वरूपम्

अथ प्रथम एव मुहूर्त्त इति कुतो लभ्यते? सूत्रप्रामाण्यात्, पौरुषीवत्। सूत्रं चेदम्—

उग्गए सूरे नमोक्कारसहिअं[4] पच्चक्खाइ चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं वोसिरइ।

---

१ तुला-पञ्चमपञ्चाशकवृत्तिः पृ० ९०-९५। प्रवचनसारोद्धारवृत्तिः पृ० १२४, धर्मसंग्रहवृत्तिः पृ० १८५॥ २ ०स्य च वक्ष०-सं. खं.। ०स्य वक्ष्य-मु.॥ ३ ततस्तस्मिन्-खं.॥ ४ नमुक्का०-शां.॥

व्याख्या—उद्गते[1] सूरे सूर्योद्गमादारभ्येत्यर्थः, नमस्कारेण परमेष्ठिस्तवेन सहितं युक्तं नमस्कारसहितं प्रत्याख्याति, 'सर्वे धातवः करोत्यर्थेन व्याप्ताः' इति न्यायाद् नमस्कारसहितं[2] प्रत्याख्यानं करोति। इदं गुरोरनुवादभङ्ग्या वचनम् शिष्यस्तु 'प्रत्याख्यामि' इत्येतदाह। एवं 'व्युत्सृजति' इत्यत्रापि वाच्यम्। कथम्? चतुर्विधमिति, न पुनरेकविधादिकम्। आहारमभ्यवहार्यम्, 'व्युत्सृजति' इत्युत्तरेण योगः। इदं चतुर्विधाहारस्यैव भवतीति संप्रदायः, रात्रिभोजनव्रततीरणप्रायत्वादस्य। अशनमित्याद्याहारचातुर्विध्यकीर्तनम्। अशनादय आहाराः पूर्वं व्याख्याताः।

अत्र नियमभङ्गभयादाकारावाह—अन्नत्थणाभोगेणं सहसागारेणं, अत्र पञ्चम्यर्थे तृतीया, अन्यत्रानाभोगात् सहसाकाराच्च; एतौ वर्जयित्वेत्यर्थः। तत्रानाभोगोऽत्यन्तविस्मृतिः। सहसाकारोऽतिप्रवृत्तयोगानिवर्तनम्[3]। व्युत्सृजति परिहरति।

अथ पौरुषीप्रत्याख्यानम्—

पोरिसिं पच्चक्खाइ उग्गए सूरे चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं पच्छन्नेणं कालेणं दिसामोहेणं साहुवयणेणं सव्वसमाहिवत्तियागारेणं वोसिरइ॥

---

१ इत आरभ्य तुला-पञ्चाशकवृत्तिः पृ० ९१-९५। पञ्चवस्तुकवृत्तिः पृ० ८३-८४। प्रवचनसारोद्धारवृत्तिः पृ० १२४-१२१। धर्मसंग्रहवृत्तिः पृ० १८४-१८९॥ २ नमस्कारेण सहितं-मु.॥ ३ "अतिप्रवृत्तियोगादनिवर्तनम्"-आवश्यकहारिभद्री पृ० ८५०। "अतिप्रवृत्तयोगानिवर्तनम्"-पञ्चवस्तुकवृत्तिः पृ० ८३; पञ्चाशकवृत्तिः पृ० ९१। "अतिप्रवृत्तियोगानिवर्तनम्"-प्रवचनसारोद्धारवृत्तिः पृ० १२५॥

प्रत्याख्यान-स्वरूपम्

पुरुषः प्रमाणमस्याः पौरुषी छाया, तद्युक्तः कालोऽपि पौरुषी प्रहर इत्यर्थः, तां प्रत्याख्याति पौरुषीप्रत्याख्यानं करोतीत्यर्थः। कथम्? चतुर्विधमशन-खाद्य-स्वाद्य-पानलक्षणं[1] 'व्युत्सृजति' इत्युत्तरेण योगः। अत्र च[2] षडाकाराः। प्रथमौ द्वौ पूर्ववत्। अन्यत्र प्रच्छन्नकालात्, दिग्मोहात्, साधुवचनात्, सर्वसमाधिप्रत्ययाकाराच्च। प्रच्छन्नता च कालस्य यदा मेघेन रजसा गिरिणा वान्तरितत्वात्[3] सूरो न दृश्यते, तत्र पौरुषीं पूर्णां ज्ञात्वा भुञ्जानस्यापूर्णायामपि तस्यां न भङ्गः; ज्ञात्वा त्वर्धभुक्तेनापि तथैव स्थातव्यं यावत् पौरुषी पूर्णा भवति, पूर्णायां ततः परं भोक्तव्यम्, न पूर्णेति ज्ञाते तु भुञ्जानस्य भङ्ग एव। दिग्मोहस्तु यदा पूर्वामपि पश्चिमेति जानाति तदाऽपूर्णायामपि पौरुष्यां मोहाद् भुञ्जानस्य न भङ्गः, मोहविगमे तु पूर्ववदर्धभुक्तेनापि स्थातव्यम्; निरपेक्षतया भुञ्जानस्य भङ्ग एवेति। साधुवचनं 'उद्घाटा पौरुषी' इत्यादिकं विभ्रमकारणम्, तत् श्रुत्वा भुञ्जानस्य न भङ्गः, भुञ्जानेन तु ज्ञाते अन्येन वा कथिते पूर्ववत् तथैव स्थातव्यम्। तथा कृतपौरुषीप्रत्याख्यानस्य समुत्पन्नतीव्रशूलादिदुःखतया संजातयोरार्त-रौद्रध्यानयोः सर्वथा निरासः सर्वसमाधिस्तस्य प्रत्ययः कारणं स एवाकारः प्रत्याख्यानापवादः सर्वसमाधिप्रत्ययाकारः, समाधिनिमित्तमौषधपथ्यादिप्रवृत्तावपूर्णायामपि पौरुष्यां[4] न भङ्ग इत्यर्थः। वैद्यादिर्वा कृतपौरुषीप्रत्याख्यानोऽन्यस्यातुरस्य समाधिनिमित्तं यदाऽपूर्णायामपि पौरुष्यां भुङ्क्ते तदा न भङ्गः, अर्धभुक्ते त्वातुरस्य समाधौ मरणे वोत्पन्ने ज्ञाते[5] सति तथैव भोजनस्य त्यागः॥

सार्धपौरुषीप्रत्याख्यानं पौरुषीप्रत्याख्यान एवान्तर्भूतम्॥

---

१ ०मशनपानखाद्यस्वाद्यलक्षणं-मु.॥ २ च-नास्ति मु.॥ ३ चान्तरित०-शां. खं.। चत्तारित०-सं.॥ ४ पौरुष्यां भुङ्क्ते तदा न भङ्ग-मु.॥ ५ ज्ञाते-नास्ति सं.॥

अथ पूर्वार्धप्रत्याख्यानम्— अन्नत्थणाभोगेणं सहसागारेणं

सूरे उग्गए पुरिमड्ढं पच्चक्खाइ चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं पच्छन्नेणं कालेणं दिसामोहेणं साहुवयणेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ।

पूर्वं च तदर्धं च पूर्वार्धं दिनस्याद्यं प्रहरद्वयम्, पूर्वार्धं प्रत्याख्याति पूर्वार्धप्रत्याख्यानं करोति। षडाकाराः पूर्ववत्। 'महत्तरागारेणं' इति, महत्तरं प्रत्याख्यानानुपालनलभ्यनिर्जरापेक्षया बृहत्तरनिर्जरालाभहेतुभूतं पुरुषान्तरासाध्यं ग्लान-चैत्य-संघादिप्रयोजनम्, तदेवाकारः प्रत्याख्यानापवादो महत्तराकारः, तस्मात् 'अन्यत्र' इति योगः। यच्चात्रैव महत्तराकारस्याभिधानं न नमस्कारसहितादौ तत्र कालस्याल्पत्वं महत्त्वं च कारणमाचक्षते।

अथैकाशनप्रत्याख्यानम्। तत्राष्टावाकाराः, यत् सूत्रम्—

ऐकासणगं[1] पच्चक्खाइ चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं सागारिआगारेणं आउंटणपसारणेणं गुरुअब्भुट्ठाणेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ।

एकं सकृदशनं भोजनम्, एकं वाऽऽसनं पुताचलनतो यत्र तदेकाशनमेकासनं च, प्राकृते द्वयोरपि 'एगासणं' इति रूपम्, तत् प्रत्याख्याति, एकाशनप्रत्याख्यानं करोतीत्यर्थः। अत्राद्यावन्त्यौ च द्वावाकारौ पूर्ववत्। सागारिआगारेणं, सह अगारेण वर्तते इति सागारः, स एव सागारिको गृहस्थः, स एवाकारः प्रत्याख्यानापवादः सागारिकाकारः, तस्मादन्यत्र। गृहस्थसमक्षं हि साधूनां भोक्तुं न कल्पते, प्रवचनोपघातसंभवात्, अत एवोक्तम्—

---

१ एक्का०–सं. मु.॥

" छक्कायदयावंतो वि संजओ दुल्लहं कुणइ बोहिं।
आहारे नीहारे दुगुंछिए[2] पिंडगहणे य ॥ १ ॥" [ओघनिर्युक्तौ गा० ४४१]

ततश्च भुञ्जानस्य यदा सागारिकः समायाति, स यदि चलस्तदा क्षणं प्रतीक्षते, अथ स्थिरस्तदा स्वाध्यायादिव्याघातो मा भूदिति ततः स्थानादन्यत्रोपविश्य भुञ्जानस्यापि न भङ्गः। गृहस्थस्य तु येन दृष्टं भोजनं न जीर्यति तदादिः[3] सागारिकः।

प्रत्याख्यानस्वरूपम्

आउंटणपसारणेणं, आउंटणं आकुञ्चनं जङ्घादेः संकोचनम्, प्रसारणं च तस्यैवाकुञ्चितस्य ऋजूकरणम्, आकुञ्चने प्रसारणे चासहिष्णुतया क्रियमाणे किञ्चिदासनं चलति, ततोऽन्यत्र प्रत्याख्यानम्।

गुरुअब्भुट्ठाणेणं, गुरोरभ्युत्थानार्हस्याचार्यस्य प्राघुणकस्य[4] वाऽभ्युत्थानं तं[5] प्रतीत्यासनत्यजनं गुर्वभ्युत्थानम्, ततोऽन्यत्र। अभ्युत्थानं चावश्यकर्त्तव्यत्वाद् भुञ्जानेनापि कर्तव्यमिति न तत्र प्रत्याख्यानभङ्गः।

पारिट्ठावणिआगारेणं, परिष्ठापनं सर्वथा त्यजनं प्रयोजनमस्य पारिष्ठापनिकमन्नम्, तदेवाकारः पारिष्ठापनिकाकारः, ततोऽन्यत्र। तत्र हि त्यज्यमाने बहुदोषसंभवात्, आश्रीयमाणे चागमिकन्यायेन गुणसंभवाच्च[6], गुर्वाज्ञया पुनर्भुञ्जानस्य न भङ्गः। वोसिरइ इति अनेकासनमशनाद्याहारं च परिहरति।

---

१ षट्कायदयावानपि संयतो दुर्लभां करोति बोधिम्। आहारे नीहारे जुगुप्सिते पिण्डग्रहणे च ॥ २ दुगुंछियपिंड०-मु॰ ॥ ३ तदादिसागारिकः-सं. शां.। स सागारिकः-मु. ॥ ४ प्राघुकस्य-सं.। प्राघुर्णकस्य-मु. ॥ ५ तं-नास्ति मु. खं. ॥ ६ ०च्च तस्य गुर्वा०-शां. संपू. ॥

अथैकस्थानकम्। तत्र सप्ताकाराः। अत्र सूत्रम्—

'एकट्ठाणं पच्चक्खाइ' इत्याद्येकाशनवत् आकुञ्चनप्रसारणाकारवर्जम्।

एकमद्वितीयं स्थानमङ्गविन्यासरूपं यत्र तदेकस्थानं प्रत्याख्यानम्। यद् यथा भोजनकालेऽङ्गोपाङ्गं स्थापितं तास्मिंस्तथास्थित एव भोक्तव्यम्। मुखस्य पाणेश्चाशक्यपरिहारत्वाच्चलनं न प्रतिषिद्धम्। आकुञ्चनप्रसारणाकारवर्जनं चैकाशनतो भेदज्ञापनार्थम्, अन्यथैकाशनमेव स्यात्।

अथाचामाम्लम्। तत्राष्टावाकाराः। अत्र सूत्रम्—

आयंबिलं पच्चक्खाइ अन्नत्थणाभोगेणं सहसागारेणं लेवालेवेणं उक्खित्तविवेगेणं गिहत्थसंसट्ठेणं पारिट्ठावणिआगारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ।

आचामोऽवस्रावणम्[1], अम्लं चतुर्थो रसः, ते[2] एव प्रायेण व्यञ्जने यत्र भोजने ओदन-कुल्माष-सक्तुप्रभृतिके तदाचामाम्लं समयभाषयोच्यते, तत् प्रत्याख्याति—आचामाम्लप्रत्याख्यानं करोतीत्यर्थः। आद्यावन्त्याश्च त्रय आकाराः पूर्ववत्।

१ ०वश्रावणम्–सं. खं.॥ २ एते च प्रायेण–मु.॥ तुला–"इयाणिं आयंबिलं, ताव न जाणामो किं आयंबिलं किं अणायंबिलं च भवति? आयंबिलमिति तस्स गोण्णं नाम, अह समयक्कतं? आयामेणं आंबिलेण य आहारो कीरति तम्हा आयंबिलं ति गोण्णं नाम, तं तिविहं–ओदणं कुम्मासा सत्तुगा" इति आवश्यकचूर्णौ प्रत्याख्यानाध्ययने पृ० ३१७। "गोन्नं नामं तिविहं ओअण कुम्मास सत्तुआ चेव। इक्किक्कं पि य तिविहं जहन्नयं मज्झिमुक्कोसं॥ [आवश्यकनिर्युक्तौ १६०३], आयामाम्लमिति गोण्णं नाम, आयामः–अवशायनम्, आम्लं–चतुर्थरसम्, ताभ्यां निर्वृत्तं आयामाम्लम्, इदं चोपाधिभेदात् त्रिविधं भवति–ओदनः

लेवालेवेणं, लेपो भोजनभाजनस्य विकृत्या तीमनादिना वाऽऽचामाम्लप्रत्याख्यातुरकल्पनीयेन लिप्तता, अलेपो[1] विकृत्यादिना लिप्तपूर्वस्य भोजनभाजनस्यैव हस्तादिना संलेखनतोऽलिप्तता, लेपश्चालेपश्च लेपालेपम्, तस्मादन्यत्र, भाजने विकृत्याद्यवयवसद्भावेऽपि न भङ्ग इत्यर्थः ।

उक्खित्तविवेगेणं, शुष्कौदनादिभक्ते पतितपूर्वस्याचामाम्लप्रत्याख्यानवतामयोग्यस्याद्रवविकृत्यादिद्रव्यस्योत्क्षिप्तस्योद्धृतस्य विवेको निःशेषतया त्याग उत्क्षिप्तविवेक उत्क्षिप्तत्याग इत्यर्थः, तस्मादन्यत्र, भोक्तव्यद्रव्यस्याभोक्तव्यद्रव्यस्पर्शेनापि न भङ्ग इति भावः । यत्तूत्क्षेप्तुं न शक्यं तस्य भोजने भङ्गः ।

प्रत्याख्यान-स्वरूपम्

गिहत्थसंसट्ठेणं, गृहस्थस्य भक्तदायकस्य संबन्धि करोटिकादिभाजनं विकृत्यादिद्रव्येणोपलिप्तं गृहस्थसंसृष्टम्, ततोऽन्यत्र । विकृत्यादिसंसृष्टभाजनेन हि दीयमानभक्तमकल्प्यद्रव्यावयवमिश्रं भवति, न च तद् भुञ्जानस्यापि भङ्गः, यद्यकल्प्यद्रव्यरसो बहु न ज्ञायते । वोसिरइ इति अनाचामाम्लं[2] व्युत्सृजति ।

अथाभक्तार्थप्रत्याख्यानम् । तत्र पञ्चाकाराः, यत् सूत्रम्–

---

१ अलेपो–नास्ति सं. खं. ॥ धर्मसंग्रहवृत्तौ [पृ० १८८] वर्तते ॥ २ अनाचामाम्लं चतुर्विधाहारं च व्युत्सृजति–मु. धर्मसंग्रहवृत्तौ च पृ० १८८॥

---

कुल्माषाः सक्तवश्चेति, ओदनमधिकृत्य कुल्माषान् सक्तूंश्चेति"–इति आवश्यकसूत्रस्य हारिभद्रयां वृत्तौ पृ० ८५४–८५५॥ "आयाममवश्रावणम्, अम्लं च सौवीरकम्, ते एव प्रायेण व्यञ्जने यत्र भोजने ओदन-कुल्माष-सक्तुप्रभृतिके तदायामाम्लं समयभाषयोच्यते । तद्व्रतं प्रत्याख्यानमपि तदेवेति" इति पञ्चाशकवृत्तौ पृ० ९३॥

सूरे उग्गए अभत्तट्ठं[1] पच्चक्खाइ चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ।

सूर उद्गते सूर्योद्गमादारभ्य, अनेन च भोजनानन्तरं प्रत्याख्यानस्य निषेध इत्याह। भक्तेन भोजनेनार्थः प्रयोजनं भक्तार्थः, न भक्तार्थोऽभक्तार्थः, अथवा न विद्यते भक्तार्थो[2] यस्मिन् प्रत्याख्यानविशेषे सोऽभक्तार्थ उपवास इत्यर्थः। आकाराः पूर्ववत्। नवरं पारिष्ठापनिकाकारे विशेषः। यदि त्रिविधाहारस्य प्रत्याख्याति तदा पारिष्ठापनिकं कल्पते, यदि तु[3] चतुर्विधाहारस्य प्रत्याख्याति पानकं च नास्ति तदा न कल्पते, पानके तूद्धरिते कल्पते। वोसिरइ इति भक्तार्थमशनादि च[4] व्युत्सृजति।

अथ पानकम्। तत्र पौरुषी-पूर्वार्धैकाशनैकस्थाना-ऽऽचामाम्ला-ऽभक्तार्थप्रत्याख्यानेषूत्सर्गतश्चतुर्विधाहारस्य प्रत्याख्यानं न्याय्यम्। यदि तु त्रिविधाहारस्य प्रत्याख्यानं करोति तदा पानकमाश्रित्य षडाकारा भवन्ति, यत् सूत्रम्—

पाणस्स लेवाडेण वा अलेवाडेण वा अच्छेण वा बहलेण[5] वा ससित्थेण वा असित्थेण वा वोसिरइ।

इह 'अन्यत्र' इत्यस्यानुवृत्तेस्तृतीयायाः पञ्चम्यर्थत्वात् लेवाडेण वेति कृतलेपाद् वा पिच्छिलत्वेन[6] भाजनादीनामुपलेपकारकात् खर्जूरादिपानकादन्यत्र, तद् वर्जयित्वेत्यर्थः। त्रिविधाहारं 'व्युत्सृजति' इति योगः। वाशब्दोऽलेपकृतपानका-

१ अब्भतट्ठं-मु.॥ २ भक्तार्थो अस्मिन्-सं. संपू.। "भक्तार्थो यस्मिन्" इति प्रवचनसारोद्धारवृत्तौ पृ० १२९, धर्मसंग्रहवृत्तौ च पृ० १८९॥ ३ तु-नास्ति शां.॥ ४ च-नास्ति खं.॥ "अशनादि वस्तु व्युत्सृजति" इति प्रवचनसारोद्धारवृत्तौ पृ० १२९॥ ५ बहुलेण-मु.॥ ६ पिच्छल०-खं. संपू. विना। पिच्छिल०-धर्मसंग्रहवृत्तौ पृ० १८९॥

पेक्षयाऽवर्जनीयत्वाविशेषद्योतनार्थः, अलेपकारिणेव लेपकारिणाप्युपवासादेर्न भङ्ग इति भावः। एवमलेपकृताद् वाऽपिच्छिलात्[1], अच्छाद् वा निर्मलादुष्णोदकादेः, [2]बहुलाद् वा गडुलात् तिल-तन्दुलधावनादेः, ससिक्थाद् वा भक्तपुलाकोपेतादव[3]स्रावणादेः, असिक्थाद् वा सिक्थवर्जितात् पानकाहारात्।

अथ चरमम्। चरमोऽन्तिमो भागः। स च दिवसस्य भवस्य चेति द्विधा। तद्विषयं प्रत्याख्यानमपि चरमम्। इह च भवचरमं यावज्जीवम्। तत्र द्विविधेऽपि चत्वार आकारा भवन्ति, यत्सूत्रम्—

दिवसचरिमं[4] भवचरिमं वा पच्चक्खाइ चउव्विहं पि आहारं असणं पाणं खाइमं साइमं अन्नत्थणाभोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ।

प्रत्याख्यान-स्वरूपम्

ननु दिवसच[5]रमप्रत्याख्यानं निष्फलम्, एकाशनादिप्रत्याख्यानेनैव गतार्थत्वात्। नैवम्, एकाशनादिकं ह्यष्टाद्याकारमेतच्च चतुराकारम्, अत आकाराणां संक्षेपकरणात् सफलमेव। अत एवैकाशनादिकं दैवसिकमेव भवति, रात्रिभोजनस्य [6]त्रिविधं त्रिविधेन यावज्जीवं प्रत्याख्यातत्वात्। गृहस्थापेक्षया पुनरिदमादित्योद्गमान्तम्, दिवसस्याहोरात्रपर्यायतयापि दर्शनात्। तत्र येषां रात्रिभोजननियमोऽस्ति तेषामपीदं सार्थकम्, अनुवादकत्वेन स्मारकत्वात्। भवचरमं तु द्व्याकारमपि भवति। यदा जानाति महत्तर-सर्वसमाधिप्रत्ययरूपाभ्यामाकाराभ्यां न प्रयोजनम् तदाऽनाभोग-सहसाकाराकारौ भवतः, अङ्गुल्यादेरनाभोगेन सहसाकारेण वा मुखे प्रक्षेपसंभवात्। अत एवेदमनाकारमप्युच्यते, आकारद्वयस्यापरिहार्यत्वात्॥

१ ०पिच्छलात्–मु.। प्रवचनसारोद्धारवृत्तौ च पृ० १३०॥ २ बहलात्–पञ्चाशकवृत्तौ, प्रवचनसारोद्धारवृत्तौ पृ० १३०॥ ३ ०वश्राव०–सं.॥ ४ ०चरिमं वा भव०–खं.॥ ५ ०चरिम०–मु. संपू. शां.। ०चरिमं–खं.॥ ६ त्रिविधं–नास्ति सं.॥

अथाभिग्रहप्रत्याख्यानम्। तच्च दण्डप्रमार्जनादिनियमरूपम्। तत्र चत्वार आकारा भवन्ति, यथा—

अन्नत्थणाभोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तिआगारेणं वोसिरइ।

यदा[1] त्वप्रावरणाभिग्रहं गृह्णाति तदा 'चोलपट्टागारेणं' इति पञ्चम आकारो भवति, चोलपट्टकाकारादन्यत्रेत्यर्थः।

अथ विकृतिप्रत्याख्यानम्। तत्र नव अष्टौ वाऽऽकाराः, यत् सूत्रम्—

विगईओ पच्चक्खाइ अन्नत्थणाभोगेणं सहसागारेणं लेवालेवेणं गिहत्थसंसट्ठेणं उक्खित्तविवेगेणं पडुच्चमक्खिएणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ।

मनसो विकृतिहेतुत्वाद् विकृतयः, ताश्च दश, यदाहुः—

छीरं[2] दहि नवणीअं घयं तहा तेल्लमेव गुड मज्जं।
महु मंसं चेव तहा ओगाहिमगं च विगईओ॥ १॥ [ पञ्चवस्तुके ३७१ ]

तत्र पञ्च क्षीराणि, गोमहिष्यजोष्ट्र्येलकासंबन्ध[3]भेदात्। दधि-नवनीत-घृतानि तु चतुर्भेदानि, उष्ट्रीणां तदभावात्। तैलानि चत्वारि, तिला-ऽतसी-लट्टा-सर्षपसंबन्धभेदात्। शेषतैलानि तु न विकृतयः, लेपकृतानि तु भवन्ति। गुड इक्षु-

---

१ यदा चाप्राव०-शां.॥ २ क्षीरं दधि नवनीतं घृतं तथा तैलमेव गुडो मद्यम्। मधु मांसं चैव तथा अवगाहिमकं च विकृतयः॥ ३ ०संबन्धि०-धर्मसंग्रहवृत्तौ पृ० १९०॥ एवमग्रेऽपि॥

रसक्वाथः। स द्विधा—पिण्डो द्रवश्च। मद्यं द्वेधा—काष्ठ-पिष्टोद्भवत्वात्। मधु त्रेधा—माक्षिकम् कौत्तिकं[1] भ्रामरं च। मांसं त्रिविधम्, जल-स्थल-खेचरजन्तूद्भवत्वात्[2]; अथवा मांसं त्रिविधं, चर्म-रुधिर-मांसभेदात्।

अवगाहेन स्नेहबोलनेन निर्वृत्तमवगाहिमं[3] पक्वान्नम् "भावादिमः" [सिद्धहेम० ६।४।२१] इतीमः, यत् तापिकायां घृतादिपूर्णायां चलाचलं खाद्यकादि पच्यते, तस्यामेव तापिकायां तेनैव घृतेन द्वितीयं तृतीयं च खाद्यकादि विकृतिः, ततः परं पक्वान्नानि अयोगवाहिनां[4] निर्विकृतिप्रत्याख्यानेऽपि कल्पन्ते। अथैकेनैव पूपकेन तापिका पूर्यते तदा द्वितीयं पक्वान्नं निर्विकृतिप्रत्याख्यानेऽपि कल्पते, लेपकृतं तु भवति। इत्येषा वृद्धसामाचारी।

प्रत्याख्यान-स्वरूपम्

१ कौत्तिकं–सं.। कौतिकं–खं.। कौन्तिकं–धर्मसंग्रहवृत्तौ पृ० १९०। "कुत्तिकाकृतम्"–प्रवचनसारोद्धारवृत्तौ पृ० १४०॥ २ ०खेचर०–मु.॥ ३ निवृत्तं–सं. खं.॥

४ "णिव्वितीए णव आगारा। अहवा तत्थ विगतिं चेव न जाणामो का य विगति त्ति। नव विगतीतो, तंजहा–खीरं दधिं नवनीतं सप्पिं तेल्लं महुं मज्जं गुलो पुग्गल त्ति ········ पयातो नव विगतीतो। ओगाहिमगं च दसमं, तं जाहे कवल्ली अद्दहिया ताहे एगं ओगाहिमगं चलंतं पच्चति सप्फेणं, तेणेव धाएण बितियं ततियं ति। सेसाणि अजोगवाहिणिवीताणं कप्पंति यदि णज्जंति। अह एगं चेव जाहे तवगं सव्वं पूरेति ततो बितियं च कप्पति लेवाडाणि य"—आवश्यकचूर्णौ प्रत्याख्यानाध्ययने पृ० ३१९। "तत्थ दस विगतीओ–खीरं दधि णवणीयं घयं तेल्लं गुडो मधुं मज्जं मंसं ओगाहिमगं च ········। ओगाहिमगं दसमं तावियाए अद्दहियाए एगं ओगाहिमगं चलचलेंतं पच्चति सफेणं बितीयततियं। सेसाणि अजोगवाहीण कप्पति जतिं णज्जति। अह एगेण चेव पूअएण सव्वोचेव तावगो भरितो तो बितीयं चेव कप्पतिं, णिव्विगतियपच्चक्खाणाइतस्स लेवाडं होति, एसा आयरियपरंपरागता सामायारी" इति आवश्यकसूत्रस्य हारिभद्रयां वृत्तौ पृ० ८५४। "साम्प्रतं विकृतिस्वरूपमाह–खीरं

एतासु च दशसु विकृतिषु मद्य-मांस-मधु-नवनीतलक्षणाश्चतस्रो विकृतयोऽभक्ष्याः। शेषास्तु षड् भक्ष्याः। तत्र भक्ष्यासु विकृतिष्वेकादिविकृतिप्रत्याख्यानं षड्विकृतिप्रत्याख्यानं च निर्विकृतिकसंज्ञं विकृतिप्रत्याख्यानेन संगृहीतम्। आकाराः पूर्ववत्।

दहि णवणीयं घयं तहा तिल्लमेव गुड मज्जं। महु मंसं चेव तहा ओगाहिमगं च दसमी तु ॥ ३७५॥ ..............आइल्ल तिण्णि चलचल ओगाहिमगाई विगइओ ॥ ३७६॥ सेसाण हुंति विगई अजोगवाहीण ते उ कप्पंति। परिभुंजंति ण पायं जं निच्छयओ न नज्जंति ॥ ३७७॥ एगेण चेव तवओ पूरिज्जइ पूअएण जो ताओ। बीओ वि स पुण कप्पइ निव्विगइ अ लेवडो नवरं ॥ ३७८॥ [ पञ्चवस्तुके ३७५–३७८ ] क्षीरं दधि नवनीतं घृतं तथा तैलमेव गुडो मद्यं मधु मांसमेव च तथा उद्ग्राहिमकं च दशमीति एषा विकृतिसंख्येति गाथापदानि। ..........तथा आद्यत्रयचलचलोद्ग्राहिमकानि च प्रक्षणभृततवकपक्वानि त्रीण्येव घारिका-वटकादीनि विकृतिरिति गाथार्थः। शेषाणि चतुर्थघानादारभ्य न भवन्ति विकृतयः, अयोगवाहिनां साधूनामविशेषतो निर्विकृतिकपरिभोक्तॄणां तानि कल्पन्ते। न तत्र कश्चिद् दोषः। परिभुज्यन्ते न तथापि अनेन कारणेन यद् निश्चयतो न ज्ञायन्ते 'कथमेतानि व्यवस्थितानि' इति गाथार्थः। एकेन एव तवकः पूर्यते पूपकेन यत् ततः पूपकाद् द्वितीयोपि निर्विकृतिकस्य कल्पते, असौ लेवाटको नवरमिति गाथार्थः।" इति पञ्चवस्तुकटीकायाम् अभयदेवसूरिविरचितायाम् पृ० ६२-६३॥ "अवगाहिमकं पुनर्घृतेन वा तैलेन वा भृतायां तापिकायां चलचलेति शब्दं कुर्वाणं सुकुमारिकादि यदा पच्यते तदैको घाणः पुनस्तेनैव घृततैलेन द्वितीयः, पुनस्तेनैव तृतीयो विकृतिर्भवति। यदि पुनस्तेनैव घृतेन तैलेन वा चतुर्थो घाणः पच्यते तदासौ विकृतिर्न भवति, अयोगवाहिनां निर्विकृतिकप्रत्याख्यानेऽपि कल्पते। अथ तापिका एकेनैव पूपकेन खज्जकेन वा सकलापि भृता तदा तत्रैव द्वितीयः पूपकादिः क्षिप्तो न विकृतिर्भवति, निर्विकृतिकानामपि कल्पत एव सः, परं यदि सम्यग् ज्ञायते 'अयं चतुर्थः, अयं द्वितीयो घाणः, प्रथमक्षिप्तघृतादिना पक्वः' इति। यदा पुनर्द्वितीयादिघाणेषु तापिकायामपरं घृतादि प्रक्षिप्तम्, 'चतुर्थादिर्वा अयं घाणः' इति सम्यग् न ज्ञातं तदा न कल्पत एवेति" इति प्रवचनसारोद्धारवृत्तौ पृ० १४०। धर्मसंग्रहवृत्तौ पृ० १८९-१९०॥ यद्यपि जैनधर्मप्रसारकसभया Asiatic Society of Bengal इत्यतश्च प्रकाशितायां योगशास्त्र-स्वोपज्ञवृत्तौ देवचन्द-लालभाईप्रकाशितायां प्रवचनसारोद्धारवृत्तौ च 'योगवाहिनाम्' इति पाठो मुद्रितस्तथापि प्राचीनेषु हस्तलिखितादर्शेषु सर्वत्र 'अयोगवाहिनाम्' इत्येव पाठ उपलभ्यते. अतो 'योगवाहिनाम्' इति अशुद्ध एव पाठ इति ध्येयम्॥

॥ ७२१ ॥

नवरं 'गिहत्थसंसट्ठेणं' इति गृहस्थेन स्वप्रयोजनाय दुग्धेन संसृष्ट ओदनो दुग्धं च तमतिक्रम्योत्कर्षतश्चत्वार्यङ्गुलानि यावदुपरि वर्तते तदा तद् दुग्धमविकृतिः, पञ्चमाङ्गुलारम्भे तु[1] विकृतिरेव। अनेन न्यायेनान्यासामपि विकृतीनां गृहस्थसंसृष्टत्वमागमादवसेयम्। उक्खित्तविवेगेणं इति, उत्क्षिप्तविवेक आचामाम्लवदुद्धर्तुं[3] शक्यासु विकृतिषु द्रष्टव्यः, द्रवविकृतिषु तु[4] नास्ति। पडुच्चमक्खिएणं इति, प्रतीत्य सर्वथा रूक्षं[5] मण्डकादिकमपेक्ष्य म्रक्षितं स्नेहितमीषत्सौकुमार्योत्पादनात् म्रक्षणकृतविशिष्टस्वादुतायाश्चाभावाद् म्रक्षितमिव यद् वर्तते तत् प्रतीत्यम्रक्षितं म्रक्षिताभासमित्यर्थः।

इह चायं विधिः—यद्यङ्गुल्या तैलादि गृहीत्वा मण्डकादि म्रक्षितं तदा कल्पते निर्विकृतिकस्य, धारया तु न कल्पते। व्युत्सृजति विकृतिं त्यजतीत्यर्थः। इह च यासु विकृतिषूत्क्षिप्तविवेकः संभवति तासु नवाकाराः, अन्यासु तु द्रवरूपास्वष्टौ।



एतदर्थसंवादिन्यो गाथाः—

दो चेव नमोकारे, आगारा छच्च पोरिसीए उ।
सत्तेव य पुरिमड्ढे, एँकासणगम्मि अट्ठेव ॥ १ ॥
सत्तेगट्ठाणस्स उ, अट्ठेव य अंबिलम्मि आगारा।
पंचेव अभत्तट्ठे, छप्पाणे चरिम चत्तारि ॥ २ ॥

१ तु–नास्ति मु० ॥ २ ०स्थासं० मु० ॥ ३ आचाम्ल०–शां. खं. संपू. ॥ ४ तु–नास्ति मु. खं. ॥ ५ रूक्ष–मु. शां. ॥ ६ ०नाय म्रक्ष०–मु० ॥ ७ एकास०–शां. ॥ ८ पंचेव अभ०–मु. शां. खं.। पंचेव यभ०–खं ॥

पंच[1] चउरोऽभिग्गहे, निव्वीए अट्ठ नव य आगारा।

अप्पाउरणे पंच उ, हवंति सेसेसु चत्तारि ॥ ३ ॥ [ आवश्यकनिर्युक्तौ गा० १६१२–१६१४ ]

ननु निर्विकृतिक[2] एवाकाराभिधानाद् विकृतिपरिमाणप्रत्याख्याने कुत आकारा अवगम्यन्ते?। उच्यते—निर्विकृतिक[3]ग्रहणे विकृतिपरिमाणस्यापि[4] संग्रहो भवति, त एव[5] चाकारा भवन्ति, यथा एकासनस्य पौरुष्याः पूर्वार्धस्यैव च सूत्रेऽभिधानेऽपि द्व्यासनकस्य सार्धपौरुष्या अपार्धस्य च प्रत्याख्यानमदुष्टम्, अप्रमादवृद्धेः संभवात्। आकारा अप्येकासनादिसंबन्धिन एवान्येष्वपि न्याय्याः, आसनादिशब्दसाम्यात्, चतुर्विधाहारपाठेऽपि द्विविधत्रिविधाहारप्रत्याख्यानवत्[6]। ननु द्व्यासनादीनि अभिग्रहप्रत्याख्यानानि, ततस्तेषु चत्वार एवाकाराः प्राप्नुवन्ति। न, एकासनादिभिस्तुल्ययोगक्षेमत्वात्।

अन्ये तु मन्यन्ते—एवं हि प्रत्याख्याने संख्या विशीर्येत। तत एकासनादीन्येव प्रत्याख्यानानि, तदशक्तस्तु यावत् सहिष्णुस्तावत् पौरुष्यादिकं प्रत्याख्याति, तदुपरि ग्रन्थिसहितादिकमिति।

प्रत्याख्यानं च स्पर्शनादिगुणोपेतं सुप्रत्याख्यानं भवति, यदाहुः—

"फासिअं[7] पालियं चेव सोहिअं तीरियं तहा।

किट्टियमाराहियं चेव एरिसयम्मी[8] पयइअव्वं[9] ॥ १ ॥" [ आवश्यकनिर्युक्तौ गा० १६०७ ]

---

१ चउरो अभिग्गहे–सं. विना ॥ २ ०कृतक–शां. खं. संमू. संपू. ॥ ३ ०कृतिग्रहणे–सं. ॥ ४ विकृतप०–खं. ॥ ५ एवाकारा–खं. ॥ ६ द्विविधाहार०–खं. ॥ ७ स्पृष्टं पालितं चैव शोभितं तीरितं तथा। कीर्तितमाराधितं चैव ईदृशे प्रयतितव्यम् ॥ ८ ०यम्मि–मु. ॥ ९ पइयव्वं–शां. संपू. ॥

॥ ७२३ ॥

तत्र स्पृष्टं प्रत्याख्यानकाले विधिना प्राप्तम् । १ ।
पालितं पुनः पुनरुपयोगप्रतिजागरणेन रक्षितम् । २ ।
शोभितं गुर्वादिप्रदत्तशेषभोजनासेवनेन । ३ ।
तीरितं पूर्णेऽपि कालावधौ किञ्चित्कालावस्थानेन । ४ ।
कीर्तितं भोजनवेलायाममुकं मया [2]प्रत्याख्यातमधुना पूर्णं भोक्ष्य इत्युच्चारणेन । ५ ।
आराधितमेभिः प्रकारैः संपूर्णैर्निष्ठां नीतमिति । ६ ।

प्रत्याख्यानस्य चानन्तर्येण पारम्पर्येण च फलमिदम्—

"[3]पंचक्खाणम्मि कए आसवदाराइं हुंति पिहियाइं ।
आसवदार[4]पिहाणे तण्हावुच्छेअणं होइ ॥ १ ॥
[5]तंण्हावुच्छेएण य अउलोवसमो भवे मणुस्साणं ।
अउलोवसमेण पुणो पच्चक्खाणं हवइ सुद्धं ॥ २ ॥

१ तुला-आवश्यकहारिभद्री पृ० ८५१ ॥ २ "प्रत्याख्यातम्, तत् पूर्णम्, अधुना भोक्ष्ये' इत्युच्चारणेन"-आवश्यकहारिभद्री पृ० ८५१ ॥ ३ प्रत्याख्याने कृते आस्रवद्वाराणि भवन्ति पिहितानि। आस्रवद्वारपिधाने तृष्णाव्यवच्छेदनं भवति ॥ १ ॥
४ ०प्पिहणे-सं. । ०प्पिहाणे-खं. ॥
५ तृष्णाव्यवच्छेदेन च अतुलोपशमो भवेद् मनुष्याणाम्। अतुलोपशमेन च पुनः प्रत्याख्यानं भवति शुद्धम् ॥ २ ॥

तत्तो चरित्तधम्मो कम्मविवेगो अपुव्वकरणं च ।
तत्तो केवलणाणं सासयसोक्खो तओ मोक्खो ॥ ३ ॥ [ आवश्यकनिर्युक्तौ गा०१६०८–१६१० ]

न चावश्यकर्तव्यमावश्यकं चैत्यवन्दनाद्येव श्रावकस्य, न षड्विधमिति वक्तुं युक्तम्,

"[2] समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा ।
अंतो अहो-निसिस्स य तम्हा आवस्सयं नाम ॥ १ ॥" [ अनुयोगद्वारसूत्रे गा० ३ ]

इत्यागमे श्रावकं प्रत्यावश्यकस्योक्तत्वात्। न चात्र चैत्यवन्दनाद्येवावश्यकं वक्तुमुचितम्, 'अंतो अहो-निसिस्स य' इति कालद्वयाभिधानात्, चैत्यवन्दनस्य च त्रैकालिकत्वेनोक्तत्वात्। अनुयोगद्वारेष्वपि "जं नं समणे वा समणी वा सावए वा साविया वा तच्चित्ते तम्मणे तल्लेसे तदट्ठोवउत्ते तदप्पियकरणे तब्भावणाभाविए उभओकालं आवस्सयं करेइ, से त्तं लोउत्तरिअं भावावस्सयं" [ अनुयोगद्वारसूत्रे सू० २८ ] इति वचनात् श्रावकस्याप्यावश्यकमुक्तमेव। ततः कृतषड्विधावश्यककर्मा स्वाध्यायम् अणुव्रतविध्यादेः पञ्चनमस्कारस्य वा परिवर्तनं कुर्यात्; अथवा स्वाध्यायं पञ्चविधं [3] वाचन-प्रश्न-परिवर्तना-ऽनुप्रेक्षा-धर्मकथारूपं कुर्यात्। यस्तु साधूपाश्रयमागन्तुमशक्तो राजादिर्वा महर्द्धिको वा वह्वपायः स स्वगृह एवावश्यकं स्वाध्यायं च करोति। उत्तममित्युत्तमनिर्जराहेतुम्, यदाह—

१ ततश्चारित्रधर्मः कर्मविवेकोऽपूर्वकरणं च। ततः केवलज्ञानं शाश्वतसौख्यस्ततो मोक्षः ॥ ३ ॥
२ श्रमणेन श्रावकेण च अवश्यकर्तव्यं भवति यस्मात्। अन्तोऽहोनिशस्य तस्मादावश्यकं नाम ॥ ४ ॥
३ वाचना०–मु. खं. ॥

॥ ७२५ ॥

"[1]बारसविहम्मि वि तवे, [2]सब्भिंतरबाहिरे कुसलदिट्ठे ।
न वि अत्थि न वि य होही, सज्झायसमं तवोकम्मं ॥ १ ॥" [ पञ्चवस्तुके गा० ५६२ ],

तथा—

"[3]सज्झाएण पसत्थं झाणं जाणइ अ सव्वपरमत्थं ।
सज्झाए वट्टंतो खणे खणे जाइ वेरग्गं ॥ १ ॥" [ उपदेशमालायां गा० ३३८ ] इत्यादि ॥ १२९ ॥

स्वाध्याय-विधानोपदेशः

**न्याय्ये काले ततो देव-गुरुस्मृतिपवित्रितः ।**
**निद्रामल्पामुपासीत प्रायेणाब्रह्मवर्जकः ॥ १३० ॥**

न्याय्यो न्यायादनपेतः कालः, स च रात्रेः प्रथमयामोऽर्धरात्रं वा शरीरसात्म्येन । तत इति स्वाध्यायकरणानन्तरम्, निद्रामल्पामुपासीतेति क्रिया । कथम्भूतः सन् ? देव-गुरुस्मृतिपवित्रितः, देवा अर्हद्भट्टारकाः, गुरवो धर्माचार्याः, तेषां स्मृतिर्मनस्यारोपणम्, तया पवित्रितो निर्मलीभूतात्मा । उपलक्षणं चैतच्चतुःशरणगमन-दुष्कृतगर्हा-सुकृतानुमोदना-पञ्चनमस्कारस्मरणप्रभृतीनाम् । न ह्येतत्स्मरणमन्तरेण [4]पवित्रता भवति ।

---

१ द्वादशविधेऽपि तपसि साभ्यन्तरबाह्ये कुशलदृष्टे । नाप्यस्ति नापि च भविष्यति स्वाध्यायसमं तपःकर्म ॥ २ सब्भंतर०—खं. हे. ॥ ३ स्वाध्यायेन प्रशस्तं ध्यानं जानाति च सर्वपरमार्थम् । स्वाध्याये वर्तमानः क्षणे क्षणे याति वैराग्यम् ॥ ४ पवित्रिता—हे. मु. विना सं. खं. सपू. ॥

तत्र देवस्मृतिः—“ नमो वीयरायाणं सव्वण्णूणं तेलोक्कपूइआणं जहट्ठिअवत्थुवाइणं ” [ पञ्चसूत्रे ] इत्यादि ।

गुरुस्मृतिश्च—धन्यास्ते ग्राम-नगर-जनपदादयो येषु मदीया धर्माचार्या विहरन्ति ।

निद्रामल्पामिति । निद्रामिति विशेष्यम्, अल्पामिति विशेषणम् । विशेषणस्य चात्र विधिः, “ सविशेषणे हि विधि-निषेधौ विशेषणमुपसंक्रामतः ” [ ] इति न्यायात् । निद्रामिति च विशेष्यमिति न तत्र विधिः, दर्शनावरणीय-कर्मोदयेन निद्रायाः स्वतः सिद्धत्वात्, ‘अप्राप्ते हि शास्त्रमर्थवत्’ [ ] ईत्युक्तप्रायम् । अब्रह्म मैथुनम्, तद् वर्जयति अब्रह्मवर्जकः, प्रायेणेति बाहुल्येन, गृहस्थत्वादस्य ॥ १३० ॥

पुनश्च—

निद्राच्छेदे योषिदङ्गसतत्त्वं परिचिन्तयेत् ।
स्थूलभद्रादिसाधूनां तन्निवृत्तिं परामृशन् ॥ १३१ ॥

परिणतायां रात्रौ निद्रायाश्छेदे सति योषिदङ्गानां स्त्रीशरीराणां सतत्त्वं स्वरूपं परितश्चिन्तयेत् । किं कुर्वन् ? स्थूलभद्रादीनां साधूनां तन्निवृत्तिं योषिदङ्गनिवृत्तिं परामृशन् अनुस्मरन् । स्थूलभद्रचरितं संप्रदायगम्यम् । स चायम्—

अस्ति सौधप्रभाजालधूपधूमैर्निरन्तरैः । जितगङ्गा-ऽर्कजा[2]सङ्गं पाटलीपुत्रपत्तनम् ॥ १ ॥

तत्र[3] त्रिखण्डपृथिवीपतिः पतिरिव श्रियः । समुत्खातद्विषत्कन्दो नन्दो नामाभवद् नृपः ॥ २ ॥

---

१ दृश्यतां पृ० ५८० पं० ५ ॥ २ अर्कजा यमुना इत्यर्थः ॥ ३ इत आरभ्य १८९ श्लोकपर्यन्तं सर्वेऽपि श्लोकाः प्रायोऽक्षरशः परिशिष्टपर्वणि वर्तन्ते ८।३-१९३ ॥

विसंकटः श्रियां वासोऽसंकटः शकटो धियाम् । शकटाल इति तस्य बभूवामात्यपुङ्गवः ॥ ३ ॥
तस्याभूज्ज्येष्ठतनयो विनयादिगुणास्पदम् । अस्थूलधीः स्थूलभद्रो भद्राकारनिशाकरः ॥ ४ ॥
भक्तिनिष्ठः कनिष्ठोऽस्य श्रीयकोऽजनि नन्दनः । नन्दराड्हृदयामन्दानन्दगोशीर्षचन्दनः ॥ ५ ॥
बभूव तत्र कोशेति वेश्या रूपश्रियोर्वशी । वशीकृतजगच्चेताश्चेतोभूजीवनौषधिः ॥ ६ ॥
भुञ्जानो विविधान् भोगान् स्थूलभद्रो दिवानिशम् । उवासावसथे तस्या द्वादशाब्दानि तन्मनाः ॥ ७ ॥
श्रीयकस्त्वङ्गरक्षोऽभूद् भूरिविश्रम्भभाजनम् । द्वितीयमिव हृदयं नन्दस्य पृथिवीपतेः ॥ ८ ॥
तत्र चासीद् वररुचिर्नाम द्विजवराग्रणीः । कवीनां वादिनां वैयाकरणानां शिरोमणिः ॥ ९ ॥
स्वयंकृतैर्नवनवैरष्टोत्तरशतेन सः । वृत्तैः प्रवृत्तोऽनुदिनं नृपावलगने सुधीः ॥ १० ॥
मिथ्यादृगिति तं मन्त्री प्रशशंस न जातुचित् । तुष्टोऽप्यस्मै तुष्टिदानं न ददौ नृपतिस्ततः ॥ ११ ॥
ज्ञात्वा वररुचिस्तत्र दानाभापणकारणम् । आराधयितुमारेभे गृहिणीं तस्य मन्त्रिणः ॥ १२ ॥
संतुष्टया तयाऽन्येद्युः कार्यं पृष्टोऽब्रवीदिदम् । राज्ञः पुरस्ताद् मत्काव्यं तव भर्ता प्रशंसतु ॥ १३ ॥
तया तदुपरोधेन तद्विज्ञप्तोऽवदत् पतिः । मिथ्यादृष्टेरमुष्याहं प्रशंसामि कथं वचः ॥ १४ ॥
तयोक्तः साग्रहं मन्त्री तत् तथा प्रत्यपद्यत । अन्ध-स्त्री-बाल-मूर्खाणामाग्रहो बलवान् खलु ॥ १५ ॥

राज्ञः पुरस्तात् पठतः काव्यं वररुचेस्ततः। अहो! सुभाषितमिति वर्णयामास मन्त्रिराट् ॥ १६ ॥
दीनारशतमष्टाग्रं ततोऽस्मै नृपतिर्ददौ। राजमान्यस्य वाचाऽपि जीव्यते ह्यनुकूलया ॥ १७ ॥
दीनाराष्टोत्तरशते दीयमाने दिने दिने। किमेतद् दीयत इति भूपं मन्त्री व्यजिज्ञपत् ॥ १८ ॥
अथोचे नृपतिर्मन्त्रिन् दद्मोऽस्मै त्वत्प्रशंसया। वयं यदि स्वयं दद्मो दद्मः किं न पुरा ततः? ॥ १९ ॥
मन्त्र्यप्यूचे मया देव! प्रशंसा नास्य निर्ममे। काव्यानि परकीयानि प्रशशंस[1] तदा त्वहम्[2] ॥ २० ॥
पुरो नः परकाव्यानि स्वकीकृत्य पठत्ययम्। किमेतत् सत्यभावेनेत्यभाषत नृपस्ततः ॥ २१ ॥
एतत्पठितकाव्यानि पठन्तीर्[3]बालिका अपि। दर्शयिष्यामि वः प्रातरित्यूचे सचिवोऽपि च ॥ २२ ॥
यक्षा यक्षदत्ता भूता भूतदत्ता तथैणिका। वेणा रेणेति सप्तासन् प्राज्ञाः पुत्र्योऽस्य मन्त्रिणः ॥ २३ ॥
गृह्णाति[4] ज्यायसी तासां सकृदुक्तं तथेतराः। द्वित्र्यादिवारक्रमतो गृह्णन्ति स्म यथाक्रमम् ॥ २४ ॥
राज्ञः समीपं सचिवो द्वितीयेऽह्नि निनाय ताः। तिरस्करिण्यन्तरिताः समुपावेशयच्च सः ॥ २५ ॥
अष्टोत्तरशतं श्लोकान् स्वयं निर्माय नैत्यिकान्। ऊचे वररुचिस्ता अप्यनुज्येष्ठमनूचिरे ॥ २६ ॥
ततो वररुचे रुष्टो राजा दानं न्यवारयत्। उपायाः सचिवानां हि निग्रहानुग्रहक्षमाः ॥ २७ ॥
ततो वररुचिर्गत्वा यन्त्रं गङ्गाजले न्यधात्। तन्मध्ये वस्त्रबद्धं च दीनारशतमष्टयुक् ॥ २८ ॥

१ प्रशंसिषं–खं.॥ २ 'तदा त्वहम्' इत्यपि सं. मध्ये पठ्येत॥ ३ पठन्ति बालिका–मु.॥ ४ जग्राह–मु.॥

प्रातर्गङ्गामसौ स्तुत्वा यन्त्रमाक्रामदंह्रिणा । दीनारास्ते च तत्पाणावुत्पत्य न्यपतंस्ततः ॥ २९ ॥
स एवं विदधे नित्यं जनस्तेन विसिष्मिये । तच्च श्रुत्वा जनश्रुत्या राजाऽशंसच्च मन्त्रिणे ॥ ३० ॥
इदं यद्यस्ति सत्यं तत् प्रातर्वीक्षामहे स्वयम् । इत्युक्तो मन्त्रिणा राजा तत्तथा प्रत्यपद्यत ॥ ३१ ॥
दत्त्वा शिक्षां चरः सायं प्रेषितस्तत्र मन्त्रिणा । शरस्तम्बनिलीनोऽस्थात् पक्षीवानुपलक्षितः ॥ ३२ ॥
तदा वररुचिर्गत्वा छन्नं मन्दाकिनीजले । दीनाराष्टोत्तरशतग्रन्थिं न्यस्य ययौ गृहे ॥ ३३ ॥
तज्जीवितमिवादाय दीनारग्रन्थिमेष तु । चरः समर्पयामास प्रच्छन्नं वरमन्त्रिणे ॥ ३४ ॥
अथ गुप्तात्तदीनारग्रन्थिर्मन्त्री निशात्यये । ययौ राज्ञा समं गङ्गामागाद् वररुचिस्तदा ॥ ३५ ॥
द्रष्टुकामं नृपं दृष्ट्वोत्कृष्टमानी सविस्तरम् । स्तोतुं प्रववृते गङ्गां मूढो वररुचिस्ततः ॥ ३६ ॥
स्तुत्यन्तेऽचालयद् यन्त्रं पदा वररुचिः परम् । दीनारग्रन्थिरुत्पत्य नापतत् पाणिकोटरे ॥ ३७ ॥
द्रव्यं सोऽन्वेषयामास पाणिना तज्जले ततः । तस्थावपश्यंस्तूष्णीको धूर्तो धृष्टो हि मौनभाक् ॥ ३८ ॥
इत्यूचे च महामात्यः किं ते दत्ते न जाह्नवी । न्यासीकृतमपि द्रव्यमन्वेषयसि यद् मुहुः ॥ ३९ ॥
उपलक्ष्य गृहाणेदं निजद्रव्यमिति ब्रुवन् । सोऽर्पयामास दीनारग्रन्थिं वररुचेः करे ॥ ४० ॥
दीनारग्रन्थिना तेनोत्सर्पिहृद्ग्रन्थिनेव सः । दशामासादयामास मरणादपि दुस्सहाम् ॥ ४१ ॥

१ ०माक्रम०-मु. ॥ २ एवं च विदधे-चं. ॥ ३ यदा-सं. मु. ॥ ४ पदा-मु. ॥ ५ ०वपश्यं तूष्णीको-[illegible] ॥
६ दुस्सहम्-सं. खं. संपू. ॥

विप्रतारयितुं लोकं सायमत्र क्षिपत्यसौ । द्रव्यं प्रातः पुनर्गृह्णातीत्यूचे सचिवो नृपम् ॥ ४२ ॥
साधु ज्ञातमिदं छद्मेत्यालपन् मन्त्रिपुङ्गवम् । विस्मयस्मेरनयनः स्ववेश्मागाद् महीपतिः ॥ ४३ ॥
अमर्षणो वररुचिः प्रतिकारं विचिन्तयन् । गृहस्वरूपं सचिवस्यापृच्छच्चेटिकादिकम्[1] ॥ ४४ ॥
तस्याथ कथयामास काचित् सचिवचेट्यदः । भूपतिः श्रीयकोद्वाहे भोक्ष्यते मन्त्रिवेश्मनि ॥ ४५ ॥
सज्यते चात्र शस्त्रादि दातुं नन्दाय मन्त्रिणा । शस्त्रप्रियाणां राज्ञां हि शस्त्रमाद्यमुपायनम् ॥ ४६ ॥
समासाद्य च्छलज्ञस्तच्छलं वररुचिस्ततः । चणकादि प्रदायेति डिम्भरूपाण्यपाठयत् ॥ ४७ ॥
न वेत्ति राजा यदसौ शकटालः करिष्यति । व्यापाद्य नन्दं तद्राज्ये श्रीयकं स्थापयिष्यति ॥ ४८ ॥
स्थाने स्थाने च पठतो डिम्भानेवं दिने दिने । जनश्रुत्या तदश्रौपीदिति चाचिन्तयद् नृपः ॥ ४९ ॥
बालका यच्च भाषन्ते भाषन्ते यच्च योषितः । औत्पातिकी च[2] भाषा या सा भवत्यन्यथा न हि ॥ ५० ॥
तत्प्रत्ययार्थं राज्ञाथ प्रेषितो मन्त्रिवेश्मनि । पुरुषः सर्वमागत्य यथादृष्टं व्यजिज्ञपत् ॥ ५१ ॥
ततश्च सेवावसरे मन्त्रिणः समुपेयुषः । प्रणामं कुर्वतो राजा कोपात् तस्थौ पराङ्मुखः ॥ ५२ ॥
तद्भावज्ञोऽथ वेश्मैत्यामात्यः श्रीयकमब्रवीत् । राज्ञोऽस्मि ज्ञापितः केनाप्यभक्तो विद्विषन्निव ॥ ५३ ॥
असावकस्मादस्माकं कुलक्षय उपस्थितः । रक्ष्यते वत्स ! कुरुषे यद्यादेशमिमं मम ॥ ५४ ॥
नमयामि यदा राज्ञे शिरश्छिन्द्यास्त[3]दासिना । अभक्तः स्वामिनो वध्यः पिताऽपीति वदेस्ततः ॥ ५५ ॥

१ ०कादिकाम्–संपू. विना ॥ २ च या भाषा–मु. ॥ ३ ०स्तवासिना–खं. ॥

जरसाऽपि यियासौ मय्येवं याते परासुताम् । त्वं मत्कुलगृहस्तम्भो नन्दिष्यसि चिरं ततः ॥ ५६ ॥
श्रीयकोऽपि रुदन्नेवमवदद् गद्गदस्वरम् । तात ! घोरमिदं कर्म श्वपचोऽपि करोति किम् ? ॥ ५७ ॥
अमात्योऽप्यब्रवीदेवमेवं कुर्वन्न विचारणाम् । मनोरथान् पूरयसि¹ वैरिणामेव केवलम् ॥ ५८ ॥
राजा यम इवोद्दण्डः सकुटुम्बं न हन्ति माम् । यावत् तावन्ममैकस्य क्षयाद् रक्ष कुटुम्बकम् ॥ ५९ ॥
मुखे विषं तालपुटं न्यस्य नंस्यामि भूपतिम् । शिरः परासोर्मे छिन्द्याः पितृहत्या न ते ततः ॥ ६० ॥
पित्रैवं बोधितस्तत् स प्रतिपेदे चकार च । शुभोदर्काय धीमन्तः कुर्वन्त्यापातदारुणम् ॥ ६१ ॥
भवता किमिदं वत्स विदधे कर्म दुष्करम् ? । ससंभ्रममिति प्रोक्तो नृपेण श्रीयकोऽवदत् ॥ ६२ ॥
यदैव स्वामिना ज्ञातो द्रोह्ययं निहतस्तदा । भर्तृचित्तानुसारेण भृत्यानां हि प्रवर्तनम् ॥ ६३ ॥
भृत्यानां युज्यते दोषे स्वयं ज्ञाते विचारणा । स्वामिज्ञाते प्रतीकारो युज्यते न विचारणा ॥ ६४ ॥
कृतौर्ध्वदहिकं नन्दस्ततः श्रीयकमब्रवीत् । सर्वव्यापारसहिता मुद्रेयं गृह्यतामिति ॥ ६५ ॥
अथ विज्ञपयामास प्रणम्य श्रीयको नृपम् । स्थूलभद्राभिधानोऽस्ति पितृतुल्यो ममाग्रजः ॥ ६६ ॥
पितृप्रसादाद् निर्बाधं कोशायास्तु निकेतने । भोगानुपभुञ्जानस्य तस्याब्दा द्वादशागमन् ॥ ६७ ॥
आहूयाथ स्थूलभद्रस्तमर्थं भूभुजोदितः । पर्यालोच्यामुमादेशं करिष्यामीत्यभाषत ॥ ६८ ॥
अद्यैवालोचयेत्युक्तः स्थूलभद्रो महीभुजा । अशोकवनिकां गत्वा विममर्शेति चेतसा ॥ ६९ ॥

१ पूरयसे–मु. ॥

॥ ७३३ ॥ शयनं भोजनं स्नानं यच्चान्यत् सुखसाधनम् । कालेऽपि नानुभूयंन्ते रोरैरिव नियोगिभिः ॥ ७० ॥
नियोगिनां स्वान्यराष्ट्रचिन्ताव्यग्रे च चेतसि । प्रेयसीनां नावकाशः पूर्णकुम्भेऽम्भसामिव[2] ॥ ७१ ॥
त्यक्त्वा सर्वमपि स्वार्थं राज्ञोऽर्थं कुर्वतामपि । उपद्रवन्ति पिशुना उद्बद्धानामिव द्विकाः ॥ ७२ ॥
यथा स्वदेहद्रविणव्ययेनापि प्रयत्यते । राजार्थे तद्वदात्मार्थे यत्यते किं न धीमता ? ॥ ७३ ॥
विमृश्यैवं व्यधात् केशोत्पाटनं पञ्चमुष्टि[3] सः । रत्नकम्बलदशाभी रजोहरणमप्यथ ॥ ७४ ॥
ततश्च स महासत्त्वो गत्वा सदसि पार्थिवम् । आलोचितमिदं धर्मलाभः स्तादित्यवोचत ॥ ७५ ॥
ततः स राजसदनाद् गुहाया इव केसरी । निःससार महासारः संसारकरिरोषणः ॥ ७६ ॥
किमेष कपटं कृत्वा यायाद् वेश्यागृहं पुनः । इत्यप्रत्ययतः क्ष्मापो गवाक्षेण निरैक्षत ॥ ७७ ॥
प्रदेशे शबदुर्गन्धेऽप्यविकूणितनासिकम् । यान्तं दृष्ट्वा स्थूलभद्रं नरेन्द्रोऽधूनयच्छिरः ॥ ७८ ॥
भगवान् बीतरागोऽसावस्मिन् धिग् मे कुचिन्तितम् । इत्यात्मानं निनिन्दोच्चैर्नन्दस्तमभिनन्दयन् ॥ ७९ ॥
स्थूलभद्रोऽपि गत्वा श्रीसंभूतविजयान्तिके[4] । दीक्षां सामायिकोच्चारपूर्विकां प्रत्यपद्यत ॥ ८० ॥
गृहीत्वा श्रीयकं दोष्णि ततो नन्दः सगौरवम् । मुद्राधिकारे निःशेषव्यापारसहिते न्यधात् ॥ ८१ ॥
चकार श्रीयको राज्यचिन्तामवहितः सदा । साक्षादिव शकटालः प्रकृष्टनयपाटवात् ॥ ८२ ॥ ॥ ७३३ ॥

---

१ ०भूयते–खं. ॥ २ पूर्णे कुम्भे–च. हे. ॥ ३ ०मुष्टिना–खं. ॥ ४ ०संभूति०–मु. ॥

स नित्यमपि कोशाया विनीतः सदने ययौ । स्नेहाद् भ्रातुस्तत्प्रियापि कुलीनैर्बहु मन्यते ॥ ८३ ॥
स्थूलभद्रवियोगार्ता श्रीयकं प्रेक्ष्य साऽरुदत् । इष्टे दृष्टे हि दुःखार्ता न दुःखं धर्तुमीशते ॥ ८४ ॥
ततस्तां श्रीयकोऽवोचदार्ये ! किं कुर्महे वयम् । असौ वररुचिः पापोऽघातयज्जनकं हि नः ॥ ८५ ॥
अकाण्डोत्थितवज्राग्निप्रदीपनसहोदरम् । स्थूलभद्रवियोगं च भवत्या अकरोदयम् ॥ ८६ ॥
त्वज्जाम्यामुपकोशायां यावद् रक्तोऽस्त्यसौ खलः । तावत् प्रतिक्रियां काञ्चिद् विचिन्तय मनस्विनि ! ॥ ८७ ॥
तदादिशोपकोशां यत् प्रतार्य कथमप्यसौ । विधीयतां वररुचिर्मद्यपानरुचिस्त्वया ॥ ८८ ॥
प्रेयोवियोजनाद् वैराद् दाक्षिण्याद् देवरस्य च । तत् प्रतिज्ञाय सा सद्योऽप्युपकोशां समादिशत् ॥ ८९ ॥
कोशायाश्च निदेशेनोपकोशा तं तथा व्यधात् । यथा पपौ सुरामेष स्त्रीवशैः क्रियते न किम् ॥ ९० ॥
सुरापाणं[१] वररुचिः स्वैरं भट्टोऽद्य कारितः । उपकोशेति कोशायै शशंसाथ निशात्यये ॥ ९१ ॥
अथ कोशामुखात् सर्वं शुश्राव श्रीयकोऽपि तत् । मेने च पितृवैरस्य विहितं प्रतियातनम् ॥ ९२ ॥
शकटालमहामात्यात्ययात् प्रभृति सोऽप्यभूत् । भट्टो वररुचिर्भूपसेवावसरतत्परः ॥ ९३ ॥
स प्रत्यहं राजकुले सेवाकाले समापतन् । राज्ञा च राजलोकैश्च सगौरवमदृश्यत ॥ ९४ ॥
अन्यदा नन्दराड् मन्त्रिगुणस्मरणविह्वलः । सदसि श्रीयकामात्यं जगादैवं सगद्गदम् ॥ ९५ ॥
भक्तिमान् शक्तिमान् नित्यं शकटालो महामतिः । अभवद् मे महामात्यः शक्रस्येव बृहस्पतिः ॥ ९६ ॥

---
१ सुरापानं-मु. ॥

एवमेव विपन्नोऽसौ दैवादद्य करोमि किम् ? । मन्ये शून्यमिवास्थानमहं तेन विनात्मनः ॥ ९७ ॥
उवाच श्रीयकोऽप्येवं किं देवेह विदध्महे । इदं वररुचिः सर्वं पापं व्यधित मद्यपः ॥ ९८ ॥
सत्यमेष सुरां भट्टः पिबतीति नृपोदिते । श्वोऽमुं दर्शयितास्मीति श्रीयकः प्रत्यवोचत ॥ ९९ ॥
श्रीयकस्तु द्वितीयेऽह्नि सर्वेषामीयुषां सदः । स्वपुंसा शिक्षितेनाग्र्यं पद्ममेकैकमार्पयत् ॥ १०० ॥
तत्कालं मदनफलरसभावनयाऽञ्चितम् । दुरात्मनो वररुचेरर्पयामास पङ्कजम् ॥ १०१ ॥
कुतस्त्यमद्भुतामोदमिदमित्यभिवर्णिनः । घ्रातुं राजादयो निन्युर्नासाग्रे स्वंस्वमम्बुजम्[1] ॥ १०२ ॥
सोऽपि भट्टोऽनयद् घ्रातुं घ्राणाग्रे पङ्कजं निजम् । चन्द्राहाससुरां सद्यो रात्रिपीतां ततोऽवमत् ॥ १०३ ॥
धिगमुं सीधुपं[2] ब्रह्मबन्धुं वन्धवधोचितम् । सर्वैरित्याक्रुश्यमानो निर्ययौ सदसोऽथ सः ॥ १०४ ॥
ब्राह्मणा याचितास्तेन प्रायश्चित्तमचीकथन् । तापितत्रपुणः पानं सुरापाणाघघातकम् ॥ १०५ ॥
मूषया तापितमथ पपौ वररुचिस्त्रपु । प्राणैश्च मुमुचे सद्यस्तत्प्रदाहभयादिव ॥ १०६ ॥
स्थूलभद्रोऽपि संभूतविजयाचार्यसन्निधौ । प्रव्रज्यां पालयामास पारदृश्वा श्रुताम्बुधेः ॥ १०७ ॥
वर्षाकालेऽन्यदाऽऽयाते संभूतविजयं गुरुम् । प्रणम्य मूर्ध्ना मुनय इत्यगृह्णन्[3]नभिग्रहान् ॥ १०८ ॥
अहं सिंहगुहाद्वारे कृतोत्सर्ग उपोषितः । अवस्थास्ये चतुर्मासीमेकः प्रत्यशृणोदिदम् ॥ १० ॥

---

१ स्वं स्व०–संपू. मु. ॥ २ शीधुपं–शां. खं. हे. ॥ ३ ०गृह्णनभि०–शां. खं. ॥

॥ ७३५ ॥

दृग्विषाहिबिलद्वारे चतुर्मासीमुपोषितः । स्थास्यामि कायोत्सर्गेण द्वितीयोऽभ्यग्रहीदिति ॥ ११० ॥
उत्सर्गी कूपमण्डूकासने मासचतुष्टयम् । स्थास्याम्युपोषित इति तृतीयः प्रत्यपद्यत ॥ १११ ॥
योग्यान् मत्वा गुरुः साधून् यावत् तानन्वमन्यत । स्थूलभद्रः पुरोभूय नत्वैवं तावदब्रवीत् ॥ ११२ ॥
कोशाभिधाया वेश्याया गृहे या चित्रशालिका । विचित्रकामशास्त्रोक्तकरणालेख्यशालिनी ॥ ११३ ॥
तत्राकृततपःकर्मविशेषः षड्रसाशनः । स्थास्यामि चतुरो मासानिति मेऽभिग्रहः प्रभो ! ॥ ११४ ॥
ज्ञात्वोपयोगाद् योग्यं तं गुरुस्तत्रान्वमन्यत । साधवश्च ययुः सर्वे स्वं स्वं स्थानं प्रतिश्रुतम् ॥ ११५ ॥
स्थूलभद्रोऽपि संप्राप कोशावेश्यानिवेशनम्[1] । अभ्युत्तस्थौ ततः कोशाऽप्याहिताञ्जलिरग्रतः ॥ ११६ ॥
सुकुमारः प्रकृत्यासौ रम्भास्तम्भ इवोरुणा । व्रतभारेण विधुरोऽत्रागादिति विचिन्त्य सा ॥ ११७ ॥
उवाच स्वागतं स्वामिन् ! समादिश करोमि किम् ? । वपुर्धनं परिजनः सर्वमेतत् तवैव हि ॥ ११८ ॥ युग्मम् ॥
चतुर्मासीं वसत्यै[2] मे चित्रशालेयमर्प्यताम् । इत्यूचे स्थूलभद्रोऽपि सा तूचे[3] गृह्यतामिति ॥ ११९ ॥
तया च तस्यां प्रगुणीकृतायां भगवानपि । कामस्थानेऽविशद् धर्म इव स्वबलवत्तया ॥ १२० ॥
अथ सा षड्रसाहारभोजनानन्तरं मुनेः । विशेषकृतभृङ्गारा क्षोभाय समुपाययौ ॥ १२१ ॥
सोपविष्टा पुरस्तस्योत्कृष्टा काचिदिवाप्सराः । चतुरं रचयामास भाव-हावादिकं[4] मुहुः ॥ १२२ ॥
करणानुभवक्रीडोद्दामानि सुरतानि च । तानि तानि प्राकृतनानि स्मारयामास साऽसकृत् ॥ १२३ ॥

१ निकेतनम्-मु.॥ २ ०र्मासीवसत्यै-सं. खं.॥ ३ साऽनूचे-शां. खं.॥ साप्यूचे-हे.॥ ४ हावभावादिकं-मु.॥

यद् यत् क्षोभाय विदधे तया तत्र महामुनौ । तत् तद् मुधाऽभवद् यद्वद् वज्रे नखविलेखनम् ॥ १२४ ॥
प्रतिवासरमप्येवं तत्क्षोभाय चकार सा । जगाम स तु न क्षोभं मनागपि महामनाः ॥ १२५ ॥
तयोपसर्गकारिण्या प्रत्युतास्य महामुनेः । अदीप्यत ध्यानवह्निर्मेघवह्निरिवाम्भसा ॥ १२६ ॥
त्वयि पूर्वमिवाज्ञानाद् रन्तुकामां धिगीश ! माम् । आत्मानमिति निन्दन्ती साऽपतत् तस्य पादयोः ॥ १२७ ॥
मुनेस्तस्येन्द्रियजयप्रकर्षेण चमत्कृता । प्रपेदे श्रावकत्वं साऽग्रहीच्चैवमभिग्रहम्[1] ॥ १२८ ॥
तुष्टः कदापि कस्मैचिद् ददाति यदि मां नृपः । विना पुमांसमेकं तमन्यत्र नियमो मम ॥ १२९ ॥
गते तु वर्षासमये ते त्रयोऽपि हि साधवः । निर्व्यूढाभिग्रहा एयुर्गुरुपादान्तिकं क्रमात् ॥ १३० ॥
आयान् सिंहगुहासाधुरहो ! दुष्करकारक[2] ! तव स्वागतमित्यूचे किञ्चिदुत्थाय सूरिणा ॥ १३१ ॥
सूरिणा भाषितौ तद्वदायान्तावितरावपि । समे प्रतिज्ञानिर्वाहे समा हि स्वामिसत्क्रिया ॥ १३२ ॥
अथायान्तं स्थूलभद्रमुत्थाय गुरुरब्रवीत् । दुष्करदुष्करकार[3] ! महात्मन् ! स्वागतं तव[4] ॥ १३३ ॥
सासूयाः साधवस्तेऽथाचिन्तयन्नित्यहो ! गुरोः । इदमामन्त्रणं मन्त्रिपुत्रताहेतुकं ननु ॥ १३४ ॥
यद्यसौ षड्रसाहारात्[5] कृतदुष्करदुष्करः । इदं वर्षान्तरे तर्हि प्रतिज्ञास्यामहे वयम् ॥ १३५ ॥
एवं मनसि संस्थाप्य सामर्षास्ते महर्षयः । कुर्वाणाः संयमं मासानष्टावगमयन् क्रमात् ॥ १३६ ॥
उत्तमर्ण इव प्राप्ते काले हृष्टः पुरो गुरोः । साधुः सिंहगुहावासी चकारेति प्रतिश्रवम् ॥ १३७ ॥

---

१ –ग. ङ. थ. । सा गृहीत्वैव०–ब. ॥ २ ०कारकः–सं. खं. संपू. ॥ ३ ०कारं–खं. । ०कारक–हे ॥ ४ ततः–शां ॥ ५ ०हारः कृत०–मु. ॥

॥ ७२७ ॥

कोशावेश्यागृहे नित्यं षड्रसाहारभोजनः। भगवन्! समवस्थास्ये चतुर्मासीमिमामहम् ॥ १३८ ॥
स्थूलभद्रेण मात्सर्यादेतदङ्गीकरोत्ययम्। विचार्येत्युपयोगेन ज्ञात्वा च गुरुरादिशत् ॥ १३९ ॥
वत्स! माभिग्रहं कार्षीरतिदुष्करदुष्करम्। स्थूलभद्रः क्षमः कर्तुमद्रिराज इव स्थिरः ॥ १४० ॥
न हि मे दुष्करोऽप्येष कथं दुष्करदुष्करः?। तदवश्यं करिष्यामीत्युवाच स मुनिर्गुरुम् ॥ १४१ ॥
गुरुरूचेऽमुना भावी भ्रंशः प्राक्तपसोऽपि ते। आरोपितोऽतिभारो हि गात्रभङ्गाय जायते ॥ १४२ ॥
गुरोर्वचोऽवमन्याथ वीरंमन्यो मुनिः स च। उन्मीनकेतनं प्राप कोशायास्तु निकेतनम् ॥ १४३ ॥
स्थूलभद्रस्पर्धयेहायाति मन्ये तपस्व्यसौ। भवे पतन् रक्षणीय इत्युत्थाय ननाम सा ॥ १४४ ॥
वसत्यै याचितां तेन मुनिना चित्रशालिकाम्। कोशा समर्पयामास स मुनिस्तत्र चाविशत् ॥ १४५ ॥
तं भुक्तषड्रसाहारं मध्याह्नेऽथ परीक्षितुम्। कोशापि तत्र लावण्यकोशभूता समाययौ ॥ १४६ ॥
चुक्षोभ स मुनिर्मङ्क्षु पङ्कजाक्षीमुदीक्ष्य ताम्। स्त्री तादृग् भोजनं तादृग् विकाराय न किं भवेत्? ॥ १४७ ॥
स्मरार्त्या याचमानं तं कोशाप्येवमवोचत। वयं हि भगवन्! वेश्या वश्याः स्मो धनदानतः ॥ १४८ ॥
स मुनिर्व्याजहाराथ प्रसीद मृगलोचने!। अस्मासु भवति द्रव्यं किं तैलं वालुकास्विव? ॥ १४९ ॥
नेपालभूपोऽपूर्वस्मै साधवे रत्नकम्बलम्। दत्ते तमानयेत्यूचे सा निर्वेदयितुं मुनिम् ॥ १५० ॥
ततश्चचाल नेपालं प्रेत्यकालेऽपि बालवत्। पङ्किलायामिलायां स निजव्रत इव स्खलन् ॥ १५१ ॥

१ स तु-मु. खं. संपू. ॥ २ वर्षाकालेऽपि-खं. ॥

तत्र गत्वा महीपालाद् रत्नकम्बलमाप्य च । स मुनिर्वलितो वर्त्मन्यासंस्तत्र च दस्यवः ॥ १५२ ॥
आयाति लक्षमित्याख्यद् दस्यूनां शकुनस्ततः । किमायातीत्यपृच्छच्च दस्युराड् द्रुस्थितं नरम् ॥ १५३ ॥
आगच्छन् भिक्षुरेकोऽस्ति न कश्चित् तादृशोऽपरः । इत्यशंसद् द्रुमारूढश्चौरसेनापतेः स तु ॥ १५४ ॥
साधुस्तत्राथ संप्राप्तस्तैर्विधृत्य निरूपितः । कमप्यर्थमपश्यद्भिर्मुमुचे च मलिम्लुचैः ॥ १५५ ॥
एतल्लक्षं प्रयातीति व्याहरच्छकुनः पुनः । मुनिं चौरपतिः प्रोचे सत्यं ब्रूहि किमस्ति ते ? ॥ १५६ ॥
वेश्याकृतेऽस्य वंशस्यान्तः क्षिप्तो रत्नकम्बलः । अस्तीत्युक्ते मुनिश्चौरराजेन मुमुचे च सः ॥ १५७ ॥
स समागत्य कोशायै प्रददौ रत्नकम्बलम् । चिक्षेप सा गृहस्रोतःपङ्के निःशङ्कमेव तम् ॥ १५८ ॥
अजल्पद् मुनिरप्येवं न्यक्षेप्यशुचिकर्दमे । महामूल्यो ह्यसौ रत्नकम्बलः कम्बुकण्ठि ! किम् ? ॥ १५९ ॥
अथ कोशाप्युवाचैवं कम्बलं मूढ ! शोचसि । गुणरत्नमयं श्वभ्रे पतन्त स्वं न शोचसि ॥ १६० ॥
तत् श्रुत्वा जातसंवेगो मुनिस्तामित्यवोचत । बोधितोऽस्मि त्वया साधु संसारात् साधु रक्षितः ॥ १६१ ॥
अघान्यतीचारभवान्युन्मूलयितुमात्मनः । यास्यामि गुरुपादान्ते धर्मलाभस्तवानघे ! ॥ १६२ ॥
कोशापि तमुवाचैव मिथ्या मे दुष्कृतं त्वयि । ब्रह्मव्रतस्थयाप्येवं मया यदसि खेदितः ॥ १६३ ॥
आशातनेयं युष्माकं बोधहेतोर्मया कृता । क्षन्तव्या सा गुरुवचः श्रयध्वं यात सत्वरम् ॥ १६४ ॥
इच्छामीति भणित्वा च गुर्वन्तिकमुपेत्य सः । गृहीत्वालोचनां तीक्ष्णमाचचार पुनस्तपः ॥ १६५ ॥

१ मुमुचेऽथ सः-मु॰ शां॰ ॥

॥ ७३९ ॥

राज्ञा प्रदत्ता कोशापि तुष्टेन रथिनेऽन्यदा । राजायत्तेति शिश्राय विना रागेण सा तु तम् ॥ १६६ ॥
स्थूलभद्रं विना नान्यः पुमान् कोऽपीत्यहर्निशम् । सा तस्य रथिनोऽभ्यर्णे वर्णयामास वर्णिनी ॥ १६७ ॥
रथी गत्वा गृहोद्याने पर्यङ्के[1] च निषद्य सः । तन्मनोरञ्जनायेति स्वविज्ञानमदर्शयत् ॥ १६८ ॥
माकन्दलुम्बीं बाणेन विव्याध तमपीषुणा । पुङ्खेऽन्येन तमप्यन्येनेत्याहस्त शराल्यभूत् ॥ १६९ ॥
वृन्तं छित्त्वा क्षुरप्रेण बाणश्रेणिमुखस्थिताम् । लुम्बीं स्वपाणिनाऽऽकृष्यासीनस्तस्यै स आर्पयत् ॥ १७० ॥
इदानीं मम विज्ञानं पश्येत्यालप्य सापि हि । व्यधत्त सार्षपं राशिं तस्योपरि ननर्त च ॥ १७१ ॥
सूचीं क्षिप्त्वा तत्र राशौ पुष्पपत्रैः पिधाय ताम् । सा ननर्त च नो सूच्या विद्धा राशिश्च न क्षतः ॥ १७२ ॥
ततः स ऊचे तुष्टोऽस्मि दुष्करेणामुना तव । याचस्व यद् ममायत्त ददामि तदहं ध्रुवम् ॥ १७३ ॥
सोवाच किं मयाऽकारि दुष्करं येन रञ्जितः । इदमभ्यधिकं[2] चाभ्यासात्[3] किमभ्यासेन दुष्करम् ? ॥ १७४ ॥
किञ्चाम्रलुम्बीच्छेदोऽयं नृत्यं चेदं न दुष्करम् । अशिक्षितं स्थूलभद्रो यच्चक्रे तत्तु दुष्करम् ॥ १७५ ॥
द्वादशाब्दानि बुभुजे भोगान् यत्र समं मया । तत्रैव चित्रशालायां तस्थौ सोऽखण्डितव्रतः ॥ १७६ ॥
दुग्धं नकुलसंचारादिव स्त्रीणां प्रचारतः । योगिनां दूष्यते चेतः स्थूलभद्रमुनिं विना ॥ १७७ ॥
दिनमेकमपि स्थातुं कोऽलं स्त्रीसंनिधौ तथा ? । चतुर्मासीं यथा तस्थौ स्थूलभद्रोऽक्षतव्रतः ॥ १७८ ॥
आहारः षड्रसश्चित्रशालावासोऽङ्गनान्तिके । अप्येकं व्रतलोपायान्यस्य लौहतनोरपि[4] ॥ १७९ ॥

१ पर्यंकं-खं. हे. ॥ २ इदमप्यधिकं-मु. ॥ ३ वासात्-शां. ॥ ४ लोह०-शां. विना ॥

विलीयन्ते धातुमयाः पार्श्वे वह्नेरिव स्त्रियाः। स तु वज्रमयो मन्ये स्थूलभद्रमहामुनिः ॥ १८० ॥
स्थूलभद्रं महासत्त्वं कृतदुष्करदुष्करम्। व्यावर्ण्य युक्ता मुद्रैव मुखे वर्णयितुं परम् ॥ १८१ ॥
रथिकोऽप्यथ पप्रच्छ य एवं वर्ण्यते त्वया। को नाम स्थूलभद्रोऽयं महासत्त्वशिरोमणिः ? ॥ १८२ ॥
साऽप्यूचे शकटालस्य नन्दभूपालमन्त्रिणः। तनयः स्थूलभद्रोऽयं तवाग्रे वर्णयामि यम् ॥ १८३ ॥
तच्छ्रुत्वा सोऽपि संभ्रान्त इत्युवाच कृताञ्जलिः। एषोऽस्मि किङ्करस्तस्य स्थूलभद्रमहामुनेः ॥ १८४ ॥
संविग्नं साऽथ तं ज्ञात्वा विदधे धर्मदेशनाम्। प्रत्यबुध्यत सद्बुद्धिर्मोहनिद्रामपास्य सः ॥ १८५ ॥
प्रतिबुद्धं च तं बुद्ध्वा साऽऽख्यद् निजमभिग्रहम्। तत् श्रुत्वा विस्मयोत्फुल्ललोचनः सोऽब्रवीदिदम् ॥ १८६ ॥
बोधितोऽहं त्वया भद्रे ! स्थूलभद्रगुणोक्तिभिः। यास्यामि तस्य पन्थानं भवत्यैवाद्य दर्शितम् ॥ १८७ ॥
कल्याणमस्तु ते भद्रे ! पालय स्वमभिग्रहम्। उक्त्वैवं सद्गुरोः पार्श्वे गत्वा दीक्षां स आददे ॥ १८८ ॥
भगवान् स्थूलभद्रोऽपि तीव्रं व्रतमपालयत्। द्वादशाब्दप्रमाणश्च दुष्कालः समभूत्तदा ॥ १८९ ॥
तीरं[2] नीरनिधेर्गत्वा साधुसंघोऽखिलोऽप्यथ। गमयामास दुष्कालं करालं कालरात्रिवत् ॥ १९० ॥
अगुण्यमानं तु तदा साधूनां विस्मृतं श्रुतम्। अनभ्यसनतो नश्यत्यधीतं धीमतामपि ॥ १९१ ॥
संघोऽथ पाटलीपुत्रे समवायं विनिर्ममे। यदङ्गाध्ययनोद्देशाद्यासीद् यस्य तदाददे ॥ १९२ ॥

१ –ड. थ.॥ ०भद्रो–मु.॥ २ इत आरभ्य २४० श्लोकपर्यन्तं सर्वेऽपि श्लोकाः प्रायोऽक्षरशः परिशिष्टपर्वणि वर्तन्ते ९।५६–१११॥

ततश्चैकादशाङ्गानि श्रीसंघोऽमेलयत्तदा । दृष्टिवादनिमित्तं च तस्थौ किञ्चिद् विचिन्तयन् ॥ १९३ ॥
संघोऽस्मरद् भद्रबाहोर्दृष्टिवादभृतस्ततः । तदानयनहेतोश्च प्रजिघाय मुनिद्वयम् ॥ १९४ ॥
गत्वा नत्वा मुनी तौ तमित्यूचाते कृताञ्जली । समादिशति वः संघस्तत्रागमनहेतवे ॥ १९५ ॥
सोऽप्युवाच महाप्राणं[1] ध्यानमारब्धमस्ति यत् । भविष्यति ततो हेतोर्न तत्रागमनं मम ॥ १९६ ॥
तद्वचस्तौ मुनी गत्वा संघस्याशंसतामथ । संघोऽप्यपरमाहूयादिदेशेति मुनिद्वयम् ॥ १९७ ॥
गत्वा वाच्यः स आचार्यो यः श्रीसंघस्य शासनम् । न करोति भवेत् तस्य दण्डः क इति शंस नः ॥ १९८ ॥
संघबाह्यः स कर्त्तव्य इति वक्ति यदा स तु । तर्हि तद्दण्डयोग्योऽसीत्याचार्यो वाच्य उच्चकैः ॥ १९९ ॥
ताभ्यां गत्वा तथैवोक्त आचार्योऽप्येवमूचिवान् । मैवं[2] करोतु भगवान् संघः किन्तु करोत्वदः ॥ २०० ॥
मयि प्रसादं कुर्वाणः श्रीसंघः प्रहिणोत्विह । शिष्यान् मेधाविनस्तेभ्यः सप्त दास्यामि वाचनाः ॥ २०१ ॥
तत्रैकां वाचनां दास्ये भिक्षाचर्यात आगतः । अन्यां च कालवेलायां बहिर्भूम्यागतोऽपराम् ॥ २०२ ॥
अन्यां विकालवेलायां तिस्र आवश्यके पुनः । सेत्स्यत्येवं संघकार्यं मत्कार्यस्याविबाधया ॥ २०३ ॥
ताभ्यामेत्य तथाऽऽख्याते श्रीसंघोऽपि प्रसादभाक् । प्राहिणोत् स्थूलभद्रादिसाधुपञ्चशतीं ततः ॥२०४ ॥
तान् सूरिर्वाचयामास तेऽप्यल्पा वाचना इति । उद्भज्येयुर्निजं स्थानं स्थूलभद्रस्त्ववास्थित ॥ २०५ ॥
नोद्भज्यसे किमित्युक्तः सूरिणा सोऽब्रवीदिदम् । नोद्भज्ये भगवन् ! किन्तु ममाल्पा एव वाचनाः ॥ २०६ ॥

१ ०प्राणध्यान०-मु० ॥ २ नैवं-खं० ॥

सूरिरूचे मम ध्यानं पूर्णप्रायमिदं ततः । तदन्ते वाचनास्तुभ्यं प्रदास्यामि त्वदिच्छया ॥ २०७ ॥

पूर्णे ध्याने ततः सूरिरिच्छया तमवाचयत् । द्विवस्तूनानि पूर्वाणि दश यावत् पपाठ सः ॥ २०८ ॥

विहारक्रमयोगेन पाटलीपुत्रपत्तनम् । श्रीभद्रबाहुरागत्य बाह्योद्यानमशिश्रियत् ॥ २०९ ॥

विहारक्रमयोगेन व्रातेन्योऽत्रान्तरे तु ताः । भगिन्यः स्थूलभद्रस्य वन्दनाय समाययुः ॥ २१० ॥

वन्दित्वा गुरुमूचुस्ताः स्थूलभद्रः क्व नु प्रभो ! । इहापवरकेऽस्तीति तासां सूरिः शशंस च ॥ २११ ॥

ततस्तमभिचेलुस्ताः समायान्तीर्विलोक्य सः । आश्चर्यदर्शनकृते सिंहरूपं विनिर्ममे ॥ २१२ ॥

दृष्ट्वा सिंहं तु भीतास्ताः सूरिमेत्य व्यजिज्ञपन् । ज्येष्ठार्यं जग्रसे सिंहस्तत्र सोऽद्यापि तिष्ठति ॥ २१३ ॥

ज्ञात्वोपयोगादाचार्योऽप्यादिदेशेति गच्छत । वन्दध्वं तत्र वः सोऽस्ति ज्येष्ठार्यो न तु केसरी ॥ २१४ ॥

ततोऽयुस्ताः पुनस्तत्र स्वरूपस्थं निरूप्य च । ववन्दिरे स्थूलभद्रं ज्येष्ठा चाख्यद् निजां कथाम् ॥ २१५ ॥

श्रीयकः सममस्माभिर्दीक्षां जग्राह किन्त्वसौ । क्षुधावान् सर्वदा कर्तुं नैकभक्तमपि क्षमः ॥ २१६ ॥

मयोक्तः पर्युषणायां प्रत्याख्याह्यद्य पौरुषीम् । स प्रत्याख्यातवानुक्तो मया पूर्णेऽवधौ पुनः ॥ २१७ ॥

त्वं प्रत्याख्याहि पूर्वार्धं पर्वेदमतिदुर्लभम् । इयान् कालः सुखं चैत्यपरिपाट्यापि यास्यति ॥ २१८ ॥

---

१ अयं २०९ तमः श्लोको नास्ति मु. विना ॥ २ एतत्स्थाने "प्रतीक्षस्व क्षणं प्रत्याख्याहि पूर्वार्धमप्ययि। अद्य यावत् त्वया चैत्यपरिपाटी विधीयते ॥ २१८ ॥" इति मु.-मध्ये पाठः ॥

॥ ७४३ ॥

तथैव प्रतिपेदेऽसौ समयेऽभिहितः पुनः । तिष्ठेदानीमस्त्वपार्धमिति चक्रे तथैव सः ॥ २१९ ॥
प्रत्यासन्नाऽधुना रात्रिः सुखं सुप्तस्य यास्यति । तत्प्रत्याख्याह्यभक्तार्थमित्युक्तः सोऽकरोत् तथा ॥ २२० ॥
ततो निशीथे संप्राप्ते स्मरन् देवगुरूनसौ । क्षुत्पीडया प्रसरन्त्या विपद्य त्रिदिवं ययौ ॥ २२१ ॥
ऋषिघातो मयाऽकारीत्युत्ताम्यन्ती ततस्त्वहम् । पुरः श्रमणसंघस्य प्रायश्चित्ताय ढौकिता ॥ २२२ ॥
संघोऽप्यूचे व्यधायीदं भवत्या शुद्धभावया। प्रायश्चित्तं ततो नेह कर्तव्यं किञ्चिदस्ति ते ॥ २२३ ॥
ततोऽहमित्यवोचं च साक्षादाख्याति चेज्जिनः । ततो हृदयसंवित्तिर्जायते मम नान्यथा ॥ २२४ ॥
अत्रार्थे सकलः संघः कायोत्सर्गं ददावथ । एत्य शासनदेव्यूचे ब्रूत कार्यं करोमि किम् ? ॥ २२५ ॥
संघोऽप्येवमभाषिष्ट जिनपार्श्वमिमां नय । सोचे निर्विघ्नगत्यर्थं कायोत्सर्गेण तिष्ठत ॥ २२६ ॥
संघे तत्प्रतिपेदाने मां साऽनैषीज्जिनान्तिके । ततः सीमन्धरस्वामी वन्दितो भगवान् मया ॥ २२७ ॥
भरतादागताऽऽर्येयं निर्दोषेत्यवदज्जिनः । कृपया मन्निमित्तं च व्याचक्रे चूलिकाद्वयम् ॥ २२८ ॥
ततोऽहं छिन्नसंदेहा देव्यानीता निजाश्रयम् । श्रीसंघस्यार्पितवती चूलिकाद्वितयं च तत् ॥ २२९ ॥
इत्याख्याय स्थूलभद्रानुज्ञाता निजमाश्रयम् । ता ययुः स्थूलभद्रोऽपि वाचनार्थमगाद् गुरुम् ॥ २३० ॥
न ददौ वाचनां तस्यायोग्योऽसीत्यादिशन् गुरुः । दीक्षादिनात् प्रभृत्येषोऽप्यपराधान् व्यचिन्तयत् ॥ २३१ ॥

---

१ यथाश्रयम्-मु. । य यथाश्रयम्-सं.॥ २ न्यपातत्-खं.॥

चिन्तयित्वा च न ह्यागः स्मरामीति जगाद च। कृत्वा न मन्यसे शान्तं पापमित्यवदद् गुरुः ॥ २३२ ॥
स्थूलभद्रस्ततः स्मृत्वा पपात गुरुपादयोः। न करिष्यामि भूयोऽदः क्षम्यतामिति चाब्रवीत् ॥ २३३ ॥
न करिष्यसि भूयस्त्वमकार्षीर्यदिदं पुनः। न दास्ये वाचनां तेनेत्याचार्यास्तमनूचिरे ॥ २३४ ॥
स्थूलभद्रस्ततः सर्वसंघेनामानयद् गुरुम्। महतां कुपितानां हि महान्तोऽलं प्रसादने ॥ २३५ ॥
सूरिः संघं बभाषेऽथ विचक्रेऽसौ यथाधुना। तथाऽन्ये विकरिष्यन्ते मन्दसत्त्वा अतः परम् ॥ २३६ ॥
अवशिष्टानि पूर्वाणि सन्तु मत्पार्श्वे एव तत्। अस्यास्तु दोषदण्डोऽयमन्यशिक्षाकृतेऽपि हि ॥ २३७ ॥
स संघेनाग्रहादुक्तो विवेदेत्युपयोगतः। न मत्तः शेषपूर्वाणामुच्छेदो भाव्यतस्तु सः ॥ २३८ ॥
अन्यस्य शेषपूर्वाणि प्रदेयानि त्वया नहि। इत्यभिग्राह्य भगवान् स्थूलभद्रमवाचयत् ॥ २३९ ॥
सर्वपूर्वधरोऽथासीत् स्थूलभद्रमहामुनिः। प्राप्य चाचार्यकं भद्रभविनः प्रत्यबोधयत् ॥ २४० ॥
स्त्रीभ्यो निवृत्तिमधिगम्य समाधिलीनः, श्रीस्थूलभद्रमुनिराप दिवं क्रमेण।
एवंविधप्रवरसाधुजनस्य सर्वसंसारसौख्यविरतिं विमृशेद् मनीषी ॥ २४१ ॥ १३२ ॥

[ इति श्रीस्थूलभद्रकथानकम् ]

१ -ङ़, थ,। ०भद्रो-मु.॥ २ [ ] एतदन्तर्गतः पाठो नास्ति-मु. विना ॥

योषिदङ्गसतत्त्वं कलापकेनाह—

यकृच्छकृन्मलश्लेष्ममज्जास्थिपरिपूरिताः ।
स्नायुस्यूता बही रम्याः स्त्रियश्चर्मप्रसेविकाः ॥ १३३ ॥

यकृत् कालखण्डम्, शकृद् विष्ठा, मला दन्ताद्युपलेपाः, श्लेष्मा कफः, मज्जा षष्ठो धातुः, अस्थीनि पञ्चमो धातुः; एभिः परिपूरिताः स्त्रियः स्त्रीशरीराणि चर्मप्रसेविका भस्त्राः, अत एव बहिरेव रम्याः । भस्त्रा हि मध्ये पूतिद्रव्यपूरिता अपि बाह्ये रम्या भवन्ति, स्त्रियोऽप्येवम्; भस्त्राश्च स्यूता भवन्ति, अत[1] आह—स्नायुस्यूताः, स्नायुभिः स्नसाभिः[2] स्यूता इव स्यूताः ॥ १३३ ॥

तथा—

बहिरन्तर्विपर्यासः[3] स्त्रीशरीरस्य चेद् भवेत् ।
तस्यैव कामुकः कुर्याद् गृध्र-गोमायुगोपनम् ॥ १३४ ॥

बहिश्चान्तश्च, तयोर्विपर्यासो विनिमयः—बहिर्भागोऽन्तर्भवेत् अन्तर्भागो वा बहिः, स्त्रीशरीरस्य स्त्रीदेहस्य चेद् यदि भवेत्, तदा तस्यैव स्त्रीशरीरस्य कामुकः कामी गृध्र-गोमायुगोपनं गृध्र-गोमायुभ्यो रक्षणं कुर्यात् । गृध्र-गोमायुग्रहणं

१ अत एव स्नायु०–मु. ॥ २ स्नसादिभिः–मु. । स्नाभिः–सं. । "स्नसा स्नायुः" इति अभिधानचिन्तामणौ श्लो० ६३१ ॥
३ बहिरन्तविप०–शां. सं. खं. हे. ॥

दिवानिशं रक्षणीयताप्रतिपादनार्थम्; गृध्रा हि दिवा प्रभविष्णवः, गोमायवश्च रात्रौ। तत् स्त्रीशरीरस्य विपर्यासे नक्तंदिनं कामुको गृध्र-गोमायुरक्षणव्याकुल एव स्यात्, दूरे तत्परिभोगः ॥ १३४ ॥

तथा—

स्त्रीशस्त्रेणापि चेत् कामो जगदेतज्जिगीषति ।
तुच्छपिच्छमयं शस्त्रं किं नादत्ते स मूढधीः ? ॥ १३५ ॥

स्त्र्येव शस्त्रं स्त्रीशस्त्रं तेन जगद्विजयार्थमुपात्तेन, अपीत्यनादरे, चेद् यदि, कामो मन्मथः, एतज्जगत् त्रिलोक्यात्मकम्, जिगीषति जेतुमिच्छति, तदा स मूढधीः कामः तुच्छं काकादीनां यत् पिच्छं तन्मयं शस्त्रं किं नादत्ते कुतो हेतोर्न गृह्णाति ?।

अयमर्थः—यद्यसारेण रसासृग्मांसमेदोऽस्थिमज्जशुक्रपूरितेन बहुमयासलभ्येन स्त्रीरूपेण शस्त्रेण जिगीषत्ययम्, तदा तुच्छं पिच्छमेव सुलभमपूति च किं नादत्ते ? इदं हि विस्मृतमस्य मूढधियः, यल्लौकिकाः पठन्ति—

"अर्के चेद् मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ? ॥ १ ॥" [ ] ॥ १३५ ॥

तथा * इदमपि निद्राच्छेदे चिन्तयेत् * [1] —

सङ्कल्पयोनिनानेन हहा ! विश्वं विडम्बितम् ।
तदुत्खनामि सङ्कल्पं मूलमस्येति चिन्तयेत् ॥ १३६ ॥

१ ** एतदन्तर्गतः पाठो नास्ति–शां. सं. संपू. हे. ॥

सङ्कल्पः कल्पनामात्रं योनिः कारणं यस्य, न तु वास्तवं किञ्चित् कारणमित्यर्थः, तेन, अनेन सकलजगत्संवेदनसिद्धेन, हहा इति खेदे, विश्वं जगद् ब्रह्म-हरि-हर-संक्रन्दनप्रभृतिकं कीटपर्यवसानं तैस्तैः स्त्रीदर्शना-ऽऽलिङ्गन-स्मरणादिभिः प्रकारैर्विडम्बितं विगोपितम्।

श्रूयते हि पुराणेषु—हर-गौरीविवाहोत्सवे पुरोहितीभूतः पितामहः, गौरीप्रणयप्रार्थनासु हरः, गोपीचाटुकर्मणा श्रीपतिः, गौतमभार्यायां रममाणः सहस्रलोचनः, बृहस्पतेर्भार्यायां तारायां चन्द्रः, अश्वायामप्यादित्यो विडम्बनां प्रापितः। तदनेनासारेणासारहेतूद्भवेन च यद् विश्वं विडम्ब्यते तदसाम्प्रतम्। तत् तस्मादिदानीमस्यैव जगद्विडम्बनकर्तुः सङ्कल्पलक्षणं मूलमुत्खनामि उन्मूलयामि। इति स्त्रीशरीरस्याशुचित्वमसारत्वं सङ्कल्पयोन्युपकरणत्वं च विचिन्तयेदिति प्रकृतयोजना ॥ १३६ ॥

तथा, इदमपि निद्राच्छेदे चिन्तयेत्[1]—

**यो यः स्याद्बाधको दोषस्तस्य तस्य प्रतिक्रियाम्।**
**चिन्तयेद् दोषमुक्तेषु प्रमोदं यतिषु व्रजन् ॥ १३७ ॥**

यो यो राग-द्वेष-क्रोध-मान-माया-लोभ-मोह-मन्मथा-ऽसूया-मत्सरादिर्दोषो बाधकश्चित्तप्रशान्तिवाहिकायाः तस्य तस्य दोषस्य प्रतिक्रियां प्रतीकारं चिन्तयेत्, तथाहि—रागस्य वैराग्यम्, द्वेषस्य मैत्री[2], क्रोधस्य क्षमा, मानस्य मार्दवम्, मायाया

१ चिन्तनीयं-सं.॥ २ "मैत्रीं ···· क्षमां ···· सन्तोषं ···· विवेकं ···· भावनाम् ···· बाधां च प्रतिक्रियाम्" इत्येवं सं. मध्ये सर्वत्र द्वितीयान्तानि पदानि ॥

आर्जवम्, लोभस्य सन्तोषः, मोहस्य विवेकः, मन्मथस्य स्त्रीशरीराशौचभावना[1], असूयाया अनभ्यसूयत्वम्[2], मत्सरस्य परसंपदुत्कर्षेऽपि चित्तानाबाधा[3] च प्रतिक्रिया[4]। इदं चाशक्यमिति नाशङ्कनीयम्, दृश्यन्ते हि मुनयस्तत्तद्दोषपरिहारेण गुणमयमात्मानं बिभ्रतः। अत एवाह—दोषमुक्तेषु यतिषु प्रमोदं व्रजन्। सुकरं हि दोषमुक्तमुनिदर्शनेन प्रमोदादात्मन्यपि दोषमोक्षणम् ॥ १३७ ॥

तथा—

[5]दुःस्थां भवस्थितिं स्थेम्ना सर्वजीवेषु चिन्तयन्।
निसर्गसुखसर्गं तेष्वपवर्गं विमार्गयेत् ॥ १३८ ॥

दुःस्थां दुःखहेतुम्, भवस्थितिं संसारावस्थानम्, चिन्तयन् विमृशन्, सर्वजीवेषु तिर्यग्-नारक-नरा-ऽमरेषु, तथाहि—तिरश्चां वध-बन्ध-ताडन-पारवश्य-क्षुत्-पिपासा-ऽतिभारारोपणा-ऽङ्गच्छेदादिभिः, नारकाणां च स्वाभाविक-परस्परोदीरित-परमाधार्मिककृत-क्षेत्रानुभावजवेदना[6]मनुभवतां क्रकचदारण-कुम्भीपाक-कूटशाल्मलीसमाश्लेष-वैतरणीतरणादिभिः, नराणां च दारिद्र्य-व्याधि-पारवश्य-वध-बन्धादिभिः, सुराणां चेर्ष्या-विषाद-विपक्षसंपद्दर्शन-मरणदुःखानुचिन्तनादिभिर्दुःस्थैव भवस्थितिः, तां स्थेम्ना स्थैर्येण चिन्तयंस्तेषु सर्वजीवेष्वपवर्गं मोक्षम्, किंविशिष्टम्? निसर्गसुखसर्गं निसर्गेण सुखसंसर्गो यत्र तम्, विमार्गयेदाशंसेत्—कथं नु[7] नाम सर्वे संसारिणः सकलदुःखविमोक्षेण मोक्षेण[8] संयुज्येरन्निति ॥ १३८ ॥

१ ०भावनाम्–खं.॥ २ अनसूयत्वम्–मु.॥ ३ ०बाधं च प्रतिक्रियाम्–खं.॥ ४ ०क्रिया मता–मु.॥ ५ दुस्थां–शां. सं. संपू. हे.॥ ६ ०जां वेद०–खं.॥ ७ नु–नास्ति खं.॥ ८ मोक्षेण–नास्ति सं. खं. संपू.॥

॥ ७४९ ॥

इदमपि निद्राच्छेदे चिन्तयेत्—

संसर्गेऽप्युपसर्गाणां दृढव्रतपरायणाः ।
धन्यास्ते कामदेवाद्याः श्लाघ्यास्तीर्थकृतामपि ॥ १३९ ॥

संसर्गेऽपि संबन्धेऽपि, उपसर्गाणां सुरादिकृतानाम्, दृढव्रतपरायणाः प्रतिपन्नव्रतपालनपराः कामदेवाद्याः कामदेवप्रभृतयः, धन्या धर्मधनं लब्धारः, त इति भगवदुपासकत्वेन प्रसिद्धाः । धन्यत्वे विशेषहेतुमाह—श्लाघ्याः प्रशस्यास्तीर्थकृतां श्रीमन्महावीरस्य, पूजायां बहुवचनम् । कामदेवकथानकं च संप्रदायगम्यम् । स चायम्—

कामदेव-कथानकम्

अनुगङ्गं पतद्धंसश्रेणीभिरिव चारुभिः । चैत्यध्वजै राजमाना चम्पेत्यस्ति महापुरी ॥ १ ॥
भोगिभोगायतभुजस्तम्भः कुलगृहं श्रियः । जितशत्रुरिति नाम्ना तस्यामासीन् महीपतिः ॥ २ ॥
अभूद् गृहपतिस्तस्यां कामदेवाभिधः सुधीः । आश्रयोऽनेकलोकानां महातरुरिवाध्वनि ॥ ३ ॥
लक्ष्मीरिव स्थिरीभूता रूपलावण्यशालिनी । अभूद् भद्राकृतिर्भद्रा नाम तस्य सधर्मिणी ॥ ४ ॥
निधौ षट् स्वर्णकोट्यः षड् वृद्धौ षड् व्यवहारगाः । व्रजाः षट् चास्य दशगोसहस्रमितयोऽभवन् ॥ ५ ॥
सदा च विहरन्नुर्वी तत्रोर्वीमुखमण्डने । पुण्यभद्राभिधोद्याने श्रीवीरः समवासरत् ॥ ६ ॥

१ पतद्धंश०–मु० । "इतश्च जाह्नवीहंसश्रेणिभिरिव"–इति त्रिषष्टिशलाकापुरुषचरिते पाठः । इत आरभ्य सर्वेऽपि नव श्लोकाः प्रायोऽक्षरशः त्रिषष्टिशलाकापुरुषचरित्रे दशमे पर्वणि वर्तन्ते ८।२६५–२७३ ॥

कामदेवोऽथ पादाभ्यां भगवन्तमुपागमत् । शुश्राव च श्रोत्रसुधां स्वामिनो धर्मदेशनाम् ॥ ७ ॥
कामदेवस्ततो देवनरासुरगुरोः पुरः । प्रपेदे द्वादशविधं गृहिधर्मं विशुद्धधीः ॥ ८ ॥
प्रत्याख्यात्[1] स विना भद्रां स्त्रीर्व्रजान् षड्व्रजीं विना । निधौ वृद्धौ व्यवहारे षट् षट् कोटीर्विना वसु ॥ ९ ॥
हलपञ्चशतीं मुक्त्वाऽत्याक्षीत् क्षेत्राण्यनांसि तु । दिग्यात्रिकाणि वोढॄणि पञ्च पञ्च शतान्यृते ॥ १० ॥
दिग्यात्रिकाणि चत्वारि चत्वारि प्रवहन्ति च । विहाय वहनान्येष प्रत्याख्याद्[2] वहनान्यपि ॥ ११ ॥
विनैकां गन्धकाषायीं स तत्याजाङ्गमार्जनम् । दन्तधावनमप्यार्द्रामपास्य मधुयष्टिकाम् ॥ १२ ॥
ऋते च क्षीरामलकात् फलान्यन्यानि सोऽमुचत् । अभ्यङ्गं च विना तैले सहस्र-शतपाकिमे ॥ १३ ॥
विना सुगन्धिर्गन्धाट्टादुद्वर्तनकमत्यजत्[3] । विनाष्टावौष्ट्रिकानम्भस्कुम्भान् मज्जनकर्म च ॥ १४ ॥
ऋते च क्षौमयुगलाद् वस्त्रं सर्वमवर्जयत् । चन्दनागुरुघुसृणानपास्यान्यद्[4] विलेपनम् ॥ १५ ॥
जातीस्रजं च पद्मं च विना कुसुममत्यजत् । कर्णिकां नाममुद्रां च विहायाभरणान्यपि ॥ १६ ॥
तुरुष्का-ऽगुरुधूपेभ्य ऋते धूपविधिं जहौ । घृतपूरात्[5] खण्डखाद्यादन्यद् भक्ष्यमवर्जयत् ॥ १७ ॥
काष्ठपेयां विना पेयामोदनं कलमं विना । माष-मुद्ग-कलायेभ्य ऋते सूपं च सोऽमुचत् ॥ १८ ॥

---

१ प्रत्याख्यत्–खं. हे. संपू. ॥ इत आरभ्य तुला पृ० ४८८ पं० १४ ॥ २ प्रत्याख्यद्–मु. हे. संपू. ॥ ३ ०गन्धाट्टमुद्व–सं. खं संपू. हे. । ०गन्धाढ्यमुद्व०–मु. । दृश्यतां पृ० ४९१ पं० ३ ॥ ४ ०घुसृणान्यपा०–सं. विना ॥ ५ घृत-पूर्णात्–सं. खं. ॥ दृश्यतां पृ० ४९१ पं० ७ ॥

तत्याज च घृतं सर्वमृते शारदगोघृतात् । शाकं स्वस्तिकमण्डूक्याः पल्यङ्काच्चापरं जहौ ॥ १९ ॥
अन्यत् स्नेहाम्ल-दाल्यम्लात् तीमनं वारि खाम्भसः । जहौ सुगन्धिताम्बूलाद् मुखवासमथापरम् ॥ २० ॥
ततः प्रभुं स वन्दित्वा ययौ निजनिकेतनम् । तद्भार्याप्येत्य जग्राह स्वाम्यग्रे श्रावकव्रतम् ॥ २१ ॥

कुटुम्बभारमारोप्य ज्येष्ठपुत्रे ततः स्वयम् । तस्थौ पोषध[1]शालायामप्रमादी व्रतेषु सः ॥ २२ ॥
तस्थुषस्तस्य तत्राथ निशीथे क्षोभहेतवे । पिशाचरूपभृद् मिथ्यादृष्टिः कोऽप्याययौ सुरः ॥ २३ ॥
शिरोरुहाः शिरस्यस्य कर्कशाः कपिशत्विषः । चकासामासुरापक्वाः केदार इव शालयः ॥ २४ ॥
भाण्डभित्तनिभं भालं बभ्रुपुच्छोपमे भ्रुवौ । कर्णौ सूर्पाकृती युग्मचुल्लीतुल्या च नासिका ॥ २५ ॥
[2]उष्ट्रौष्ठलम्बिनावोष्ठौ दशनाः फालसन्निभाः । जिह्वा सर्पोपमा श्मश्रु वाजिवालधिसोदरम् ॥ २६ ॥
तप्तमूषानिभे नेत्रे हनू सिंहहनूपमौ । हलास्यतुल्यं चिबुकं ग्रीवोष्ट्रग्रीवया समा ॥ २७ ॥
उरः पुरकपाटोरु भुजौ भुजगभीषणौ । पाणी शिलाभावङ्गुल्यः शिलापुत्रकसन्निभाः ॥ २८ ॥

पातालतुल्यमुदरं नाभिः कूपसहोदरा । शिश्नं चाजगरप्रायं वृषणौ [3]कुतुपोपमौ ॥ २९ ॥

---

१ पौषध०–मु. शां. हे. ॥ २ उष्ट्रोष्ठ०–खं. सं ॥ ३ कुतपो०–शां. खं. सं. संपू. हे. ॥ "कुल्वा डुपः"–सि० ७।३।४९॥ अत्रेदं ध्येयम्–मु. विना 'कुतपोपमौ' इति पाठः। "कुतपः छागलोम्नां कम्बलः आस्तरणम्" इति उणादिसूत्र [ सू० ३०५ ]-विवरणे हेमचन्द्राचार्याः। "ह्रस्वा कुतूः कुतुपः। कुतूरिति चर्ममयं तैलाद्यावपनमुच्यते" इति सिद्धहेमबृहद्वृत्तौ हेमचन्द्राचार्याः। एवं च अत्र कः पाठ उचिततर इति सुधीभिरेव विचारणीयम्॥

जङ्घे तालद्रुमाकारे पादौ शैलशिलोपमौ । कोलाहलरवोऽकाण्डाशनिध्वनिभयानकः ॥ ३० ॥

स मूर्ध्न्याखुस्रजं बिभ्रत् कण्ठे च सरटस्रजम् । नकुलान् कर्णिकास्थानेऽङ्गदस्थाने च पन्नगान् ॥ ३१ ॥
क्रुद्धान्तकसमुत्क्षिप्ततर्जनाङ्गुलिदारुणम् । उदस्यन्नपकोशासिं कामदेवं जगाद सः ॥ ३२ ॥
अप्रार्थितप्रार्थक ! रे ! किमारब्धमिदं त्वया । किं स्वर्गमपवर्गं वा वराक ! त्वमपीच्छसि ? ॥ ३३ ॥
मुञ्चारब्धमिदं नो चेदनेन निशितासिना । तरोरिव फलं स्कन्धात् पातयिष्यामि ते शिरः ॥ ३४ ॥
तर्जयत्यपि तत्रैवं समाधेर्न चचाल सः । शरभः सैरिभारावैः किं क्षुभ्यति कदाचन ? ॥ ३५ ॥
कामदेवः शुभध्यानाद् न चचाल यदा तदा । व्याजहार तथैवायं द्विस्त्रिस्त्रिदशपांसनः ॥ ३६ ॥
तत्राप्यक्षुभ्यतः सोऽस्य क्षोभायैभं वपुर्व्यधात् । स्वशक्त्यन्तमनालोक्य विरमन्ति खला न हि ॥ ३७ ॥
सोऽधत्त विग्रहं तुङ्गं सजलाम्भोदसोदरम् । सर्वतोऽप्येत्य मिथ्यात्वं राशीभूतमिवैकतः ॥ ३८ ॥
स दीर्घदारुणाकारं विषाणद्वन्द्वमुन्नतम् । धारयामास कीनाशभुजदण्डविडम्बकम्[3] ॥ ३९ ॥
किञ्चिदाकुञ्चितां शुण्डां कालपाशमिवोद्वहन् । कामदेवं जगादैवं देवः कूटैकदैवतम् ॥ ४० ॥
मायाविन् ! मुच्यतां माया सुखं तिष्ठ मदाज्ञया । पाखण्डगुरुणा केन त्वमस्येवं विमोहितः ? ॥ ४१ ॥
न चेद् मुञ्चस्यमुं धर्मं शुण्डादण्डेन तद् ध्रुवम् । क्रक्ष्यामि त्वामितः स्थानाद् नेष्यामि च नभोऽङ्गणे ॥ ४२ ॥

---
१ ०हारस्थाने–खं.॥ २ शैरिभा०–हे. विना ॥ ३ ०विडम्बनम्–मु.॥ ४ पाशा–मु०॥ ५ द्रुतम्–मु०॥

व्योम्नः पतन्तं दन्ताभ्यां प्रत्येषिष्यामि[1] चान्तरा । अवनम्य ततस्ताभ्यां दारयिष्यामि दारुवत् ॥ ४३ ॥
पादैः कर्दममर्दं च त्वां मर्दिष्यामि निर्दयम् । एकपिण्डीकरिष्यामि तिलपिष्टिमिव क्षणात् ॥ ४४ ॥
उन्मत्तस्येव तस्यैवं घोरं व्याहरतोऽपि हि । नोत्तरं कामदेवोऽदाद् ध्यानसंलीनमानसः ॥ ४५ ॥
असंक्षुभितमीक्षित्वा कामदेवं दृढाशयम् । द्विस्त्रिश्चतुरभाषिष्ट तथैव स दुराशयः ॥ ४६ ॥
ततोऽप्यभीतं तं प्रेक्ष्य शुण्डादण्डेन सोऽग्रहीत् । व्योमन्युच्छालयामास प्रतीयेष च पूलवत् ॥ ४७ ॥
दलयामास दन्ताभ्यां पादन्यासैर्ममर्द च । धर्मकर्मविरुद्धानां किमकृत्यं दुरात्मनाम् ? ॥ ४८ ॥
अधिसेहे च तत् सर्वं कामदेवो महामनाः । मनागपि च न स्थैर्यं जहौ गिरिरिव स्थिरः ॥ ४९ ॥
तस्मिन्नचलिते ध्यानादीदृशेनापि कर्मणा । सदर्पः सर्परूपं स विदधे विबुधाधमः ॥ ५० ॥
देवः पूर्ववदेवोचे स तं भापयितुं ततः । कामदेवस्तु नाभैषीद् ध्यानसंवर्मितः सुधीः ॥ ५१ ॥
भूयो भूयस्तथोक्त्वा तं निर्भीकं प्रेक्ष्य दुःसुरः[2] । आतोद्यमिव वर्ध्रेण[3] स्वभोगेनाभ्यवेष्टयत् ॥ ५२ ॥
निःशूकमेव दशनैर्दंदशूको ददंश तम् । स तु ध्यानसुधामग्नो न तद्बाधामजीगणत् ॥ ५३ ॥
दिव्यरूपं ततः कृत्वा द्युतिद्योतितदिङ्मुखम् । सुरः पोषधशालायां[4] विवेशैवमुवाच च ॥ ५४ ॥
धन्योऽसि कामदेव ! त्वं देवराजेन संसदि । प्रशंसाऽकारि भवतोऽसहिष्णुस्तामिहागमम् ॥ ५५ ॥

कामदेव-कथानकम्

१ प्रेषयिष्यामि-मु. ॥ २ दुःस्वरः-शां. हे. ॥ ३ वध्रेण-मु. खं. । वद्ध्रेण-सं. । वर्द्धेण-हे. ॥ ४ पौषध०-मु. हे. शां. ॥

प्रभवः प्राभवेणापि वर्णयन्ति ह्यवस्त्वपि । अतः परीक्षितोऽसि त्वं नानारूपभृता मया ॥ ५६ ॥
त्वां यथाऽवर्णयच्छक्रस्तथैवासि न संशयः । क्षम्यतामपराधो मे परीक्षणभवस्त्वया ॥ ५७ ॥
प्रययावभिधायैवं स देवो देवसद्मनि । कामदेवोऽपि शुद्धात्मा प्रतिमां तामपारयत् ॥ ५८ ॥
उपसर्गसहिष्णुं तमश्लाघिष्ट स्वयं प्रभुः । सभायां भगवान् वीरो गुरवो गुणवत्सलाः ॥ ५९ ॥
कामदेवो द्वितीयस्मिन्नह्नि पारितपोषधः । त्रिजगत्स्वामिनः पादवन्दनार्थमथागमत् ॥ ६० ॥
जगद्गुरुरभाषिष्ट गौतमप्रभृतीनिति । गृहिधर्मेऽप्यसावेवमुपसर्गान् विसोढवान्[1] ॥ ६१ ॥
सर्वसङ्गपरित्यागाद् यतिधर्मपरायणैः । तद्विशेषेण सोढव्या उपसर्गा भवादृशैः ॥ ६२ ॥
कर्मनिर्मूलनोपायान् श्रावकप्रतिमास्ततः । एकादशापि शिश्राय कामदेवः क्रमेण ताः ॥ ६३ ॥
सोऽथ संलेखनां कृत्वा प्रपेदेऽनशनव्रतम् । परं समाधिमापन्नः कालधर्ममुपाययौ ॥ ६४ ॥
सोऽरुणाभे विमानेऽभूद् चतुष्पल्यस्थितिः सुरः । च्युत्वा ततो विदेहेषूत्पद्य सिद्धिं व्रजिष्यति ॥ ६५ ॥
यथोपसर्गेऽपि निसर्गधैर्यात् स कामदेवो व्रततत्परः सन् ।
श्लाघ्योऽभवत् तीर्थकृतां तथाऽन्येऽप्येवंविधा धन्यतमाः पुमांसः ॥ ६६ ॥ १३९ ॥

[ इति कामदेवकथानकं संपूर्णम् । ][2]

१ विषोढ०-शां. ॥ २ [ ] एतदन्तर्गतः पाठो नास्ति-मु. विना ॥

॥ ७५५ ॥

इदमपि निद्राच्छेदे चिन्तयेत्—

जिनो देवः कृपा धर्मो गुरवो यत्र साधवः ।
श्रावकत्वाय कस्तस्मै न श्लाघेताविमूढधीः ? ॥ १४० ॥

श्रावका उक्तनिर्वचनाः, तेषां भावः श्रावकत्वम्, तस्मै श्रावकत्वाय को न श्लाघेत? सर्वः श्लाघेतैव, मुक्त्वा मोहमूढान् ।

अत एवाह—अविमूढधीः, मूढबुद्धीनां ह्यतत्त्वदर्शिनां तैमिरिकाणामिव चन्द्रद्वितय-शङ्खपीतिमदर्शिनां मा भूत् श्रावकत्वाय श्लाघा, अमूढबुद्धयस्तु तत्त्वदर्शित्वात् श्लाघन्त एव ।

निद्राच्छेदकाले श्रावकेण कर्तव्या मनोरथाः

तस्मै इति तत्संबन्धिनं यच्छब्दमाह, यत्र श्रावकत्वे जिनो रागादिदोषजेता देवः पूज्यो न तु रागादिमान्, कृपा दुःखितदुःखप्रहाणेच्छा धर्मोऽनुष्ठेयरूपो न तु हिंसात्मको यागादिः, साधवः पञ्चमहाव्रतरताः गुरवो धर्मोपदेष्टारो न तु परिग्रहारम्भसक्ताः ॥ १४० ॥

तथा निद्राच्छेदे तांस्तान् मनोरथान् सप्तभिः श्लोकैराह—

जिनधर्मविनिर्मुक्तो मा भूवं चक्रवर्त्यपि ।
स्यां चेटोऽपि दरिद्रोऽपि जिनधर्माधिवासितः ॥ १४१ ॥

१ ०तयं-शां. खं. ॥

जिनधर्मेण ज्ञान-दर्शन-चारित्ररूपेण विनिर्मुक्तो रहितश्चक्रवर्त्यपि सार्वभौमो[1]ऽपि मा भूवं मा जनिपि[2], तस्य नरकमूलत्वात्, किन्तु स्यां भवेयं चेटोऽपि दासोऽपि दरिद्रोऽपि दुःस्थितोऽपि, कथंभूतः? जिनधर्मेणोक्तस्वरूपेणाधिवासितः ॥ १४१ ॥

तथा—

त्यक्तसङ्गो जीर्णवासा मलक्लिन्नकलेवरः ।
भजन् माधुकरीं वृत्तिं मुनिचर्यां कदा श्रये ? ॥ १४२ ॥

त्यक्ता गृह-गृहिणीप्रभृतयः सङ्गा येन स त्यक्तसङ्गः, जीर्णं जरद् वासो यस्य स जीर्णवासाः, मलेन क्लिन्नं कलेवरं यस्य स मलक्लिन्नकलेवरः, मधुकरस्येय माधुकरी, माधुकरीव माधुकरी वृत्तिर्भिक्षा, तां भजन् सेवमानः, यहाहुः ;—

"जहा[3] दुमस्स पुप्फेसु भमरो आविअइ रसं । न य पुप्फं किलामेइ सो य पीणेइ अप्पयं ॥ १ ॥
एमेए समणा मुत्ता जे लोए संति साहुणो । विहंगमा व पुप्फेसु दाणभत्तेसणे रया ॥ २ ॥
वयं च वित्तिं लब्भामो न य को[4] वुवहम्मइ[5] । अहागडेसु रीयंते पुप्फेसु भमरा जहा ॥ ३ ॥ [ दशवै० १।२-४ ]"

---

१ ०भौमो मा–सं. खं. संपू. हे. ॥ २ जनिषं–खं. ॥
३ यथा द्रुमस्य पुष्पेषु भ्रमर आपिबति रसम् । न च पुष्पं क्लमयति स च प्रीणयत्यात्मानम् ॥ १ ॥
एवमेते श्रमणा मुक्ता ये लोके सन्ति साधवः । विहङ्गमा इव पुष्पेषु दानभक्तैषणे रताः ॥ २ ॥
वयं च वृत्तिं लभामहे न च कोऽप्युपहन्यते । यथाकृतेषु रीयन्ते पुष्पेषु भ्रमरा यथा ॥३॥ ४ कोइ उव०–सं. ॥ ५ ०म्मई–हे. ॥

॥ ७५७ ॥

मुनीनां चर्या मूलगुणोत्तरगुणरूपा, तां कदा कर्हि श्रये श्रयिष्यामि, "कदाकर्ह्योर्नवा" [ सि० ५।३।८ ] इति वर्त्स्यति वर्तमाना ॥ १४२ ॥

तथा—

त्यजन् दुःशीलसंसर्गं गुरुपादरजः स्पृशन् ।
कदाहं योगमभ्यस्यन् प्रभवेयं भवच्छिदे ॥ १४३ ॥

निद्राच्छेद-काले श्रावकेण कर्तव्या मनोरथाः

दुःशीला लौकिका लोकोत्तराश्च। तत्र लौकिका दुःशीला विट-भट्ट-भण्ड-गणिकादयः, लोकोत्तरास्तु पार्श्वस्था-ऽवसन्न-कुशील-संसक्त-यथाच्छन्दाः, तैः संसर्गं संवासादिरूपं त्यजन् परिहरन्। न च तन्मात्रेण भवतीत्याह—गुरुपादरजः स्पृशन्। अनेन सत्संसर्गमाह। न चैतावताप्यलमित्याह—योगमभ्यस्यन्, योगो रत्नत्रयं ध्यानं वा, तमभ्यस्यन् पुनः पुनः परिशीलयन् कदाहं प्रभवेयं प्रभविष्यामि। कस्यै ? भवच्छिदे संसारोच्छेदाय ॥ १४३ ॥

तथा—

महानिशायां प्रकृते कायोत्सर्गे पुराद् बहिः ।
स्तम्भवत् स्कन्धकषणं वृषाः कुर्युः कदा मयि ॥ १४४ ॥

१ ०भट–मु. ॥ २ कदा कुर्युर्वृषा मयि–ड ॥

महानिशायां निशीथे कायोत्सर्गे प्रकृते प्रारब्धे पुराद् बहिर्नगराद् बाह्यप्रदेशे स्तम्भ इव स्तम्भवद् मयि स्कन्धकषणं स्कन्धकण्डूयनं कदा वृषा उत्सृष्टपशवः कुर्युः करिष्यन्ति। इदं च प्रतिमाप्रतिपन्नश्रावकविषयम्, तस्यैव पुराद् बहिः कृत-कायोत्सर्गस्य शिलास्तम्भभ्रान्त्या वृषभैः स्कन्धकषणसंभवः; प्रेप्सितयत्यवस्थापेक्षं वा, यतीनां जिनकल्पिकादीनां सर्वदा कायोत्सर्गसंभवात् ॥ १४४ ॥

तथा—

वने पद्मासनासीनं क्रोडस्थितमृगार्भकम्।
कदाऽऽघ्रास्यन्ति वक्त्रे मां जरन्तो मृगयूथपाः ॥ १४५ ॥

वनेऽरण्ये पद्मासनं वक्ष्यमाणं तेनासीनमुपविष्टम्, अहिंस्रत्वेन क्रोड उत्सङ्गे स्थिता मृगार्भका मृगडिम्भा यस्य तं क्रोडस्थितमृगार्भकम्, एवंविधं मामपरिकर्मशरीरं कदा वक्त्रे आघ्रास्यन्ति, के? मृगयूथपा मृगयूथाधिपतयः, किंविशिष्टाः? जरन्तो वृद्धाः। जरन्तो हि यथाकथञ्चित् न विश्वसन्ति, परमसमाधिनिश्चलतासंदर्शनात् तेऽपि विश्वस्ताः सन्तो जातिस्वभावाद् वक्त्रे आजिघ्रन्ति ॥ १४५ ॥

तथा—

शत्रौ मित्रे तृणे स्त्रैणे स्वर्णेऽश्मनि मणौ मृदि।
मोक्षे भवे भविष्यामि निर्विशेषमतिः कदा ॥ १४६ ॥

॥ ७५९ ॥

शत्रौ रिपौ, मित्रे सुहृदि, तृणे शष्पादौ, स्त्रैणे स्त्रीसमूहे, स्वर्णे काञ्चने, अश्मन्युपले, मणौ रत्ने, मृदि मृत्तिकायाम्, मोक्षे कर्मवियोगलक्षणे, भवे कर्मसंबन्धलक्षणे, निर्विशेषमतिस्तुल्यमतिः कदा भविष्यामि। शत्रु-मित्रादिषु निर्विशेषमतित्वमन्यस्यापि भवेत्, असौ तु परमवैराग्योपगतो मोक्ष-भवयोरपि निर्विशेषत्वमर्थयते, यदाहुः—

"मोक्षे भवे च सर्वत्र निःस्पृहो मुनिसत्तमः।" [ ] इति।

एते च मनोरथाः क्रमेणोत्तरोत्तरप्रकर्षवन्तः, तथाहि—प्रथमे श्लोके जिनधर्मानुरागमनोरथः, द्वितीये तु यतिधर्मपरिग्रहमनोरथः, तृतीये तु यतिचर्याकाष्ठाधिरोहमनोरथः, चतुर्थे तु कायोत्सर्गादिमनोरथः, पञ्चमे तु गिरि-गुहाद्यवस्थितमुनिचर्यामनोरथः, षष्ठे तु परमसामायिकपरिपाकमनोरथः ॥ १४६ ॥

निद्राच्छेदकाले श्रावकेण कर्तव्या मनोरथाः

इदानीमुपसंहरति—

**अधिरोढुं गुणश्रेणिं निःश्रेणीं मुक्तिवेश्मनः।**
**परानन्दलताकन्दान् कुर्यादिति मनोरथान् ॥ १४७ ॥**

अधिरोढुमारोढुं गुणश्रेणिमुत्तरोत्तरगुणस्थानकरूपाम्, किंविशिष्टाम्? निःश्रेणीमिव निःश्रेणीम्, कस्य? मुक्तिलक्षणस्य वेश्मनो मन्दिरस्य, कुर्याद् विदध्यात्, इति श्लोकषट्केनोक्तान् मनोरथान्, किंविशिष्टान्? परानन्दलताकन्दान्,

१ ०मप्यन्य०-मु.॥

परश्चासावानन्दश्च स एव लता, तस्याः कन्दान् कन्दभूतान् । यथा हि कन्दाल्लता प्रभवति तथैतेभ्योऽपि मनोरथेभ्यः परो य आनन्दः परमसामायिकरूपः स प्रभवति । सप्तभिः कुलकम् ॥ १४७ ॥

अथोपसंहरति—

इत्याहोरात्रिकीं चर्यामप्रमत्तः समाचरन् ।
यथावदुक्तवृत्तस्थो गृहस्थोऽपि विशुध्यति ॥ १४८ ॥

इति पूर्वोक्तक्रमेण, अहोरात्रे भवामाहोरात्रिकीं चर्यां समाचाररूपामप्रमत्तः प्रमादरहितः समाचरन् सम्यक् कुर्वन्, उक्तं जिनागमेऽभिहितं यद् वृत्तं प्रतिमादिलक्षणं तत्र तिष्ठतीत्युक्तवृत्तस्थः, कथम्? यथावत् सम्यग्विधिना, गृहस्थोऽपि यतित्वमप्राप्नुवन्नपि विशुध्यति क्षीणपापो भवति ।

अथ पुनः काः प्रतिमाः, यासु स्थितो गृहस्थोऽपि विशुध्यति? उच्यते—

शङ्कादिदोषरहितं प्रशमादिलिङ्गं स्थैर्यादिभूषणं मोक्षमार्गप्रासादपीठभूतं सम्यग्दर्शनं भय-लोभ-लज्जादिभिरप्यनतिचरन् मासमात्रं सम्यक्त्वमनुपालयति, इत्येषा प्रथमा प्रतिमा । १ ।

द्वौ मासौ यावदखण्डितान्यविराधितानि च पूर्वप्रतिमानुष्ठानसहितानि द्वादशापि व्रतानि पालयतीति द्वितीया । २ ।

त्रीन् मासानुभयकालमप्रमत्तः पूर्वोक्तप्रतिमानुष्ठानसहितः सामायिकमनुपालयतीति तृतीया । ३ ।

॥ ७६१ ॥

चतुरो मासांश्चतुष्पर्व्यां पूर्वप्रतिमानुष्ठानसहितोऽखण्डितं पोषधं पालयतीति चतुर्थी । ४ ।

पञ्च मासांश्चतुष्पर्व्यां गृहे तद्द्वारे चतुष्पथे वा परीषहोपसर्गादिनिष्कम्पकायोत्सर्गः पूर्वोक्तप्रतिमानुष्ठानं पालयन् सकलां रात्रिमास्त इति पञ्चमी । ५ ।

एवं वक्ष्यमाणास्वपि प्रतिमासु पूर्वपूर्वप्रतिमानुष्ठाननिष्ठता अवसेया, नवरं षण्मासान् ब्रह्मचारी भवतीति षष्ठी । ६ ।

सप्त मासान् सचित्ताहारान् परिहरतीति सप्तमी । ७ ।

अष्टौ मासान् स्वयमारम्भं न करोतीत्यष्टमी । ८ ।

नव मासान् प्रेष्यैरप्यारम्भं न कारयतीति नवमी । ९ ।

श्रावक-प्रतिमा-स्वरूपम्

दश मासानात्मार्थनिष्पन्नमाहारं न भुङ्क्त इति दशमी । १० ।

एकादश मासान् त्यक्तसङ्गो रजोहरणादिमुनिवेषधारी कृतकेशोत्पाटः स्वायत्तेषु गोकुलादिषु वसन् 'प्रतिमाप्रतिपन्नाय श्रमणोपासकाय भिक्षां दत्त' इति वदन् धर्मलाभशब्दोच्चारणरहितं सुसाधुवत् समाचरतीत्येकादशी । ११ ।

उक्तं हि—

"दंसणपडिमा नेआ सम्मत्तजुअस्स जा इहं बुंदी ।
कुग्गहकलंकरहिआ मिच्छत्तखओवसमभावा ॥ १ ॥" [ पञ्चाशके १०।४ ]

१ दर्शनप्रतिमा ज्ञेया सम्यक्त्वयुतस्य येह बोन्दिः । कुग्रहकलङ्करहिता मिथ्यात्वक्षयोपशमभावात् ॥

"बीआ[1] य पडिमा णेया सुद्धाणुव्वयधारणं ।
सामाइअपडिमा उ[2] सुद्धं सामाइयं पि[3] अ ॥ २ ॥

अट्ठमीमाइपव्वेसु सम्मं पोसहपालणं ।
सेसाणुट्ठाणजुत्तस्स चउत्थी पडिमा इमा ॥ ३ ॥

निक्कंपो काउसग्गं तु पुव्वुत्तगुणसंजुओ ।
करेइ पव्वराईसु पंचमिं पडिवन्नओ ॥ ४ ॥

छट्ठीए बंभयारी सो फासुयाहार सत्तमी ।
वज्जे सावज्जमारंभं अट्ठमिं पडिवन्नओ ॥ ५ ॥

---

१ द्वितीया च प्रतिमा ज्ञेया शुद्धाणुव्रतपालनम् । सामायिकप्रतिमा तु शुद्धं सामायिकमपि च ॥ २ ॥
अष्टम्यादिपर्वसु सम्यक् पोषधपालनम् । शेषानुष्ठानयुक्तस्य चतुर्थी प्रतिमा इयम् ॥ ३ ॥
निष्कम्पः कायोत्सर्गं तु पूर्वोक्तगुणसंयुतः । करोति पर्वरात्रिषु पञ्चमीं प्रतिपन्नकः ॥ ४ ॥
षष्ठ्यां ब्रह्मचारी स प्रासुकाहारः सप्तम्याम् । वर्जयेत् सावद्यमारम्भमष्टमीं प्रतिपन्नकः ॥ ५ ॥

२ ऊ-हे. संपू. ॥ ३ पि इअ-शां. । पि आ-खं. हे. ॥

॥ ७६३ ॥

आ विरञ्चादा[1] च कीटाद् ये केचिदिह जन्तवः । विमुच्यैकं वीतरागं ते सर्वेऽपीन्द्रियैर्जिताः ॥ १२ ॥ २७ ॥

एवं सामान्येनेन्द्रियदोषानभिधाय स्पर्शनादीन्द्रियाणां श्लोकपञ्चकेन दोषानाह[2]—

इन्द्रियदोष-वर्णनम्

वशास्पर्शसुखास्वादप्रसारितकरः करी ।
आलानबन्धनक्लेशमासादयति तत्क्षणात् ॥ २८ ॥

पयस्यगाधे विचरन् गिलन् गलगतामिषम् ।
मैनिकस्य करे दीनो मीनः पतति निश्चितम् ॥ २९ ॥

निपतन् मत्तमातङ्गकपोले गन्धलोलुपः ।
कर्णतालतलाघाताद् मृत्युमाप्नोति षट्पदः ॥ ३० ॥

कनकच्छेदसंकाशशिखालोकविमोहितः ।
रभसेन पतन् दीपे शलभो लभते मृतिम् ॥ ३१ ॥

---

१ विरिञ्चा०-मु.॥ २ दोषमाह-शां.। दोषामाह-खं.॥

हरिणो हारिणीं गीतिमाकर्णयितुमुद्धुरः ।
आकर्णाकृष्टचापस्य याति व्याधस्य वेध्यताम् ॥ ३२ ॥

स्पष्टाः । नवरं वशा हस्तिनी, गलो रज्जुबद्धो लोहकण्टकः, मीनान् हन्तीति मैनिको धीवरः, कर्णताल एव तलश्रपेटस्तेनाघातः, गीतिर्गीतम् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

उपसंहरति—

एवं विषय एकैकः पञ्चत्वाय निषेवितः ।
कथं हि युगपत् पञ्च पञ्चत्वाय भवन्ति न ? ॥ ३३ ॥

विषय इन्द्रियस्य गोचरः, इन्द्रियप्रकरणेऽपि यद् विषयस्य दोषदर्शनं तद् विषयद्वारेणैवेन्द्रियाणां दोषजनकत्वमिति दर्शनार्थम् । एकैको विषयो गजादीनां पञ्चत्वाय मरणाय । यस्तु पुमान् सर्वेषु विषयेष्वासक्तस्तं प्रत्याह—कथं हि युगपत् पञ्चापि विषयाः सेविताः पञ्चत्वाय न भवन्ति ? अपि तु भवन्त्येवेति ।

यदाह—

“ पञ्चसु सक्ताः पञ्च विनष्टा यत्रागृहीतपरमार्थाः ।
एकः पञ्चसु सक्तः प्रयाति भस्मान्ततां मूढः ॥ १ ॥ ” [ ] ॥ ३३ ॥

१ ०मुद्धरः-खं. संपू. ॥

इन्द्रियजयोपायादि-वर्णनम्

इन्द्रियदोषानभिधाय तज्जयोपदेशमाह—

**तदिन्द्रियजयं कुर्याद् मनःशुद्ध्या महामतिः ।**
**यां विना यमनियमैः कायक्लेशो वृथा नृणाम् ॥ ३४ ॥**

यस्मादेवंविधानार्थसार्थसमर्थकानीन्द्रियाणि तत् तस्मादिन्द्रियाणां भावेन्द्रियाणां जयं कुर्यात् । द्विविधानि हीन्द्रियाणि–द्रव्येन्द्रियाणि भावेन्द्रियाणि च । तत्र द्रव्येन्द्रियाणि स्पर्शेन्द्रियाद्याकारपरिणतानि पुद्गलद्रव्याणि, भावेन्द्रियाणि स्पर्शादिष्व[1]भिलाषोपायरूपाणि, तेषां जयो लौल्यपरिहारेणावस्थानम् ।

अत्रान्तरश्लोकाः—

अनिर्जितेन्द्रियग्रामो यतो दुःखैः प्रबाध्यते । तस्माज्जयेदिन्द्रियाणि सर्वदुःखविमुक्तये ॥ १ ॥
न चेन्द्रियाणां विजयः सर्वथैवाप्रवर्तनम् । रागद्वेषविमुक्त्या तु प्रवृत्तिरपि[2] तज्जयः ॥ २ ॥
अशक्यो विषयोऽस्प्रष्टुमिन्द्रियैः स्वसमीपगः । रागद्वेषौ पुनस्तत्र मतिमान् परिवर्जयेत् ॥ ३ ॥
हताहतानीन्द्रियाणि सदा संयमयोगिनाम् । अहतानि हितार्थेषु हतान्यहितवस्तुषु ॥ ४ ॥
जितान्यक्षाणि मोक्षाय संसारायाजितानि तु । तदेतदन्तरं ज्ञात्वा यद् युक्तं तत् समाचर ॥ ५ ॥
स्पर्शे मृदौ च तूल्यादेरुपलादेश्च कर्कशे । भव रत्यरती हित्वा[3] जेता स्पर्शनमिन्द्रियम् ॥ ६ ॥

---
१ स्पर्शादिष्वपि अभि०–शां. ॥ २ प्रवृत्तिरिति तज्जयः–शां. ॥ ३ हत्वा–शां. ॥

रसे स्वादौ च भक्ष्यादेरितस्मिन्नथापि वा[1]। प्रीत्यप्रीती विमुच्योच्चैर्जिह्वेन्द्रियजयी भव ॥ ७ ॥
घ्राणदेशमनुप्राप्ते शुभे गन्धे[2] परत्र वा। ज्ञात्वा वस्तुपरीणामं घ्राणेन्द्रियजयं कुरु ॥ ८ ॥
मनोज्ञं[3] रूपमालोक्य यदि वा तद्विलक्षणम्। त्यजन्[4] हर्षं जुगुप्सां च जय त्वं चक्षुरिन्द्रियम् ॥ ९ ॥
स्वरे श्रव्ये च वीणादेः खरोष्ट्रादेश्च दुःश्रवे। रतिं जुगुप्सां च जयन् श्रोत्रेन्द्रियजयी भव ॥ १० ॥
कोऽपि नास्तीह विषयो मनोज्ञ इतरोऽपि वा। य इन्द्रियैर्नोपभुक्तस्तत्स्वास्थ्यं किं न सेव्यते ? ॥ ११ ॥
शुभा अप्यशुभायन्ते[5] शुभायन्तेऽशुभा अपि। विषयास्तत् क रज्येत विरज्येत क चेन्द्रियैः ॥ १२ ॥
स एव रुच्यो[6] द्वेष्यो वा विषयो यदि हेतुतः। शुभाशुभत्वं भावानां तन्न तत्त्वेन जातुचित् ॥ १३ ॥

एवं विमृश्य विषयेषु शुभाशुभत्वमौपाधिकं तँदधिमुक्तिविरक्तचेताः[7]।
हन्तेन्द्रियार्थमधिकृत्य जहीहि रागं द्वेषं तथेन्द्रियजयाय कृताभिलाषः ॥ १४ ॥

अथैवं दुर्जयेन्द्रियं प्रति कोऽसाधारण उपाय इत्याह—मनःशुद्ध्या, मनसो निर्मलत्वेन। सन्त्यन्यान्यपि यम-नियम-वृद्धसेवा-शास्त्राभ्यासादीनीन्द्रियजयकारणानि[8], किन्तु साधकतमं मनःशुद्धिरेव। अन्यानि तु नैकान्तिकान्यात्यन्तिकानि[9] वा, अविशुद्धे हि मनसि यम-नियमादीनि सन्त्यपि नेन्द्रियजयनिबन्धनानि, एतदेवाह—यां विना यमेत्यादि। यां मनःशुद्धिं विना

१ च-खं.॥ २ गन्धेऽपरत्र-मु.॥ ३ मनोज्ञरूप०-शां.॥ ४ त्यज हर्षं-खं.॥ ५ ०शुभायान्ते शुभा अपि-खं.॥ ६ भव्यो-शां.॥ ७ ०तदविमुक्ति०-मु.॥ ८ ०करणानि-शां.॥ ९ ०कानि नात्यन्तिकानि-शां.॥

यमा मूलगुणा नियमा उत्तरगुणास्तैरुपलक्षणत्वाद् वृद्धसेवादिभिश्च यः कायक्लेशः स नृणां पुरुषाणां वृथा। सा च मनःशुद्धिः केषाञ्चित् स्वभावत एव भवति मरुदेव्यादीनाम्। केषाञ्चित् तु यम-नियमाद्युपायबलाद् नियन्त्रिते मनसि भवति ॥ ३४ ॥

अनियन्त्रितं मनो यत् करोति तदाह—

मनःक्षपाचरो भ्राम्यन्नपशङ्कं निरङ्कुशः।
प्रपातयति संसारावर्त्तगर्ते जगत्त्रयीम् ॥ ३५ ॥

इह द्विविधं मनः—द्रव्यमनो भावमनश्च। तत्र द्रव्यमनो विशिष्टाकारपरिणताः पुद्गलाः। भावमनस्तु तद्द्रव्योपाधिः संकल्पात्मक आत्मपरीणामः। मन एव संकल्परूपं क्षपाचरो राक्षसः, अविषयेऽपि प्रवृत्तिशीलत्वात्, भ्राम्यन् तत्र तत्र विषये स्थैर्यमनवलम्बमानः। कथं भ्राम्यन्? अपशङ्कं निर्भयं यथा भवति। तदपि कुतः? निर्गतस्तत्त्वभावनादिर्निवारकत्वात् अङ्कुशो यस्मात् स तथा। प्रपातयति प्रकर्षेण पातयति संसार एवाऽऽवर्त्तप्रधानो गर्त्तस्तत्र जगत्त्रयीमिति, न स कश्चिद् जन्तुर्जगत्त्रयेऽप्यस्ति, यो निरङ्कुशेन मनसा संसारावर्त्तगर्त्ते न पात्यते। जगत्त्रयगतानां जन्तूनां संसारावर्त्तगर्त्ते पातनाद् जगत्त्रयीं पातयतीति उपचारादुक्तम् ॥ ३५ ॥

पुनरनियन्त्रिते मनसि दोषामाह—

तप्यमानांस्तपो मुक्तौ गन्तुकामान् शरीरिणः।
वात्येव तरलं चेतः क्षिपत्यन्यत्र कुत्रचित् ॥ ३६ ॥



अनियन्त्रिते
मनसि
दोषाः

॥ ८१५ ॥ तप्यमानान् कुर्वाणान्, किं तत्? तपः। तथा मुक्तौ मोक्षे गन्तुकामान् गन्तुमध्यवसितान् शरीरिणो जन्तून् तरलमेकत्रानवस्थायि चेतो भावमनः कर्तृ क्षिपत्यन्यत्र कुत्रचित् मोक्षादन्यत्र नरकादौ। किंवद्? वात्येव, यथान्यत्र गन्तुकामान् मनुष्यादीन् वातसमूहो विवक्षितात् देशात् अन्यत्र नयति एवं तरलं चेतोऽपि ॥ ३६ ॥

पुनरनियन्त्रितस्य मनसो दोषमाह—

अनिरुद्धमनस्कः सन् योगश्रद्धां दधाति यः।
पद्भ्यां जिगमिषुर्ग्रामं स पङ्गुरिव हस्यते ॥ ३७ ॥

न निरुद्धं चापलात् च्यावितं मनो येन सोऽनिरुद्धमनस्कः सन् योगश्रद्धाम् अहं योगीत्यभिमानं यो दधाति धारयति स हस्यते विवेकिभिः। क इव कथम्भूतः? पङ्गुरिव पद्भ्यां पादाभ्यां ग्रामान्तरं जिगमिषुः। पादप्रचाररूपो हि मनोरोधः, तदभावे कथं पङ्गुग्रामान्तरजिगमिषातुल्या योगश्रद्धेति ॥ ३७ ॥

न केवलमनिरुद्धमनस्कस्य योगश्रद्धा विफला, यावदशुभकर्माणि बहुतराण्यस्य प्रादुःषन्तीत्युत्तरार्द्धेन प्रतिपादयितुं पूर्वार्द्धेन काक्वा मनोरोधमुपदिशति—

मनोरोधे निरुध्यन्ते कर्माण्यपि समन्ततः।
अनिरुद्धमनस्कस्त प्रसरन्ति हि तान्यपि ॥ ३८ ॥ ॥ ८१५ ॥

मनसो रोधो विषयेभ्यो निवारणं तस्मिन् सति निरुध्यन्ते प्रतिबाध्यन्ते आश्रवनिरोधात् कर्माण्यपि ज्ञानावरणादीन्यतिप्रबलानि समन्ततः सामस्त्येन। मनोरोधायत्तत्वात् कर्मरोधस्य। प्रकृते योजयति—अनिरुद्धमनकस्य पुंसस्तान्यपि कर्माणि प्रसरन्ति विवर्द्धन्ते मनःप्रसराधीनत्वात् कर्मप्रसरस्य ॥ ३८ ॥

तदेतन्निश्चित्य मनोनियन्त्रणाय यत्नः कार्य इत्येतदाह—

मनःकपिरयं विश्वपरिभ्रमणलम्पटः।
नियन्त्रणीयो यत्नेन मुक्तिमिच्छुभिरात्मनः ॥ ३९ ॥

मनःशुद्धौ लाभाः

मनो भावमन एव कपिर्मर्कटः। अयमिति सर्वेषां स्वसंवेदनसिद्धः। कपित्वरूपणे[1] साधर्म्यमाह—विश्वस्मिन् जगति परिभ्रमणमन्यान्यविषयग्रहरूपमनवस्थानं तत्र लम्पटो लोलुपस्तदेवंविधो मनःकपिर्नियन्त्रणीयो निरोद्धव्यः चापलं परित्याज्योचिते विषये परिष्ठाप्यः[2]। यत्नेन तत्त्वाभ्यासरूपेण। किं कुर्वद्भिः? मुक्तिं[3] निर्मोक्षमिच्छन्तीत्येवंशीलास्तैरात्मनः स्वस्य। मनश्चापलनिरोधसाध्या हि मुक्तिरिति ॥ ३९ ॥

इदानीमिन्द्रियजयहेतुं मनःशुद्धिं प्रस्तौति—

दीपिका खल्वनिर्वाणा निर्वाणपथदर्शिनी।
एकैव मनसः शुद्धिः समाम्नाता मनीषिभिः ॥ ४० ॥

१ प्ररूपणे-हे.। रूपेण-मु.॥ २ परिस्थाप्यः-मु.॥ ३ मुक्तिं मोक्ष०-मु. शां.॥

एकैव यमनियमादिरहितापि मनःशुद्धिः दीपिकेव दीपिका, किंविशिष्टा ? अनिर्वाणा अविध्याता, निर्वाणस्य मोक्षस्य पन्था निर्वाणपथस्तं दर्शयतीत्येवंशीला निर्वाणपथदर्शिनी, 'मुमुक्षोः' इति शेषः, समाम्नाता पारम्पर्येण कथिता, कैः ? मनीषिभिः पूर्वाचार्यैः, यदाह—

" ज्ञाने ध्याने दाने माने मौने सदोद्यतो भवतु ।
यदि निर्मलं न चित्तं तदा हुतं भस्मनि समग्रम् ॥ १ ॥ " ४० ॥ [ ]

मनःशुद्धेरन्वय-व्यतिरेकाभ्यां गुणान्तरदर्शनेनोपदेशमाह—

सत्यां हि मनसः शुद्धौ सन्त्यसन्तोऽपि यद्गुणाः ।
सन्तोऽप्यसत्यां नो सन्ति सैव कार्या बुधैस्ततः ॥ ४१ ॥

यद् यस्मात् सत्यां विद्यमानायां मनसः शुद्धावसन्तोऽप्यविद्यमाना अपि सन्तीव तत्फलसद्भावाद् गुणाः क्षान्त्यादयः। सन्तोऽपि विद्यमाना अपि गुणा असत्यां मनसः शुद्धौ नो सन्ति न सन्तीव, तत्फलाभावात्। ततः कारणादन्वय-व्यतिरेकाभ्यां निश्चितफला सैव मनःशुद्धिः कार्या बुधैर्विवेकिभिः ॥ ४१ ॥

ये तु 'आस्तामेषा मनःशुद्धिः, तपोबलेनैव मुक्तिं वय साधयिष्यामः' इति प्रतिपद्यन्ते तान् प्रत्याह—

मनःशुद्धिमबिभ्राणा ये तपस्यन्ति मुक्तये ।
त्यक्त्वा नावं भुजाभ्यां ते तितीर्षन्ति महार्णवम् ॥ ४२ ॥

॥ ८१७ ॥

मनःशुद्धिमबिभ्राणा अधारयन्तो ये मुक्तये मुक्तिनिमित्तं तपस्यन्ति तपःक्लेशमनुभवन्ति, ते दुर्ग्रहग्रहिलाः संनिहितां नावं परित्यज्य महार्णवं भुजाभ्यां तरीतुमिच्छन्ति। यथा नावमन्तरेण महार्णवो भुजाभ्यां दुस्तरः तथा मनःशुद्धिमन्तरेण तपसा मुक्तिर्दुष्प्रापा ॥ ४२ ॥

ये तु 'ध्यानं तपःसहितं मुक्तिदम्' इति वदन्तो मनःशुद्धिमुपेक्षन्ते, 'ध्यानमेव तु कर्मक्षयकारणम्' इति प्रतिपन्नास्तान् प्रत्याह—

मनःशुद्धौ लाभाः

**तपस्विनो मनःशुद्धिविनाभूतस्य सर्वथा ।**
**ध्यानं खलु मुधा चक्षुर्विकलस्येव दर्पणः ॥ ४३ ॥**

तपस्विनोऽपि ध्यानं खलु निश्चयेन मुधा। किंविशिष्टस्य? सर्वथा मनःशुद्धिविनाभूतस्य लेशेनापि मनःशुद्धिरहितस्य। यद्यपि मनःशुद्धिरहितानामपि तपोध्यानबलेन नवमग्रैवेयकं यावद् गतिः श्रूयते तथापि तत् प्रायिकम्, न च तत् फलत्वेन विवक्षितम्, मोक्षस्यैव फलरूपत्वात्। अतो ध्यानं मुधा। यथा दर्पणो रूपनिरूपणकारणमपि चक्षुर्विकलस्य मुधा तथा ध्यानमपीति भावः ॥ ४३ ॥

उपसंहरति—

**तदवश्यं मनःशुद्धिः कर्तव्या सिद्धिमिच्छता ।**
**तपः-श्रुत-यमप्रायैः किमन्यैः कायदण्डनैः ॥ ४४ ॥**

तत् तस्मात् अवश्यं निश्चयेन मनःशुद्धिः कर्त्तव्या सिद्धिं मोक्षमभिलषता। आवश्यकत्वे हेतुमाह–किमन्यैः कायदण्डनैः? कायो दण्ड्यत एभिरिति कायदण्डनास्तैः, कैः? तपः-श्रुत-यमप्रायैः, तपोऽनशनादि, श्रुतमागमः, यमा महाव्रतानि। प्रायग्रहणाद् नियमादयो गृह्यन्ते।

अत्रेदमनुयोक्तव्यम्–केयं मनसः शुद्धिः? लेश्याविशुद्ध्या मनसो निर्मलत्वम्। काः पुनर्लेश्याः[1]? कृष्ण-नील-कापोत-तेजः-पद्म-शुक्लवर्णद्रव्यसाचिव्यादात्मनस्तदनुरूपः परिणामः, यदाह–

" कृष्णादिद्रव्यसाचिव्यात् परिणामो य आत्मनः।
स्फटिकस्येव तत्रायं लेश्याशब्दः प्रवर्त्तते ॥ १ ॥" [ ]

---

१ लेश्यास्वरूपविषये विभिन्ना अभिप्रायाः शास्त्रेषु दृश्यन्ते। तत्रादौ श्वेताम्बरग्रन्थानुसारेण लेश्यास्वरूपमुपदर्श्यते–

"'लिश संश्लेषणे' [पा० धा० १५७५] संलिष्यते आत्मा तैस्तैः परिणामान्तरैः, यथा श्लेषेण वर्णसंबन्धो भवति एवं लेश्याभिरात्मनि कर्माणि संलिष्यन्ते, योगपरिणामो लेस्या, जम्हा अयोगिकेवली अलेस्सो। तत्थ कण्हलेस्सा इति द्विपदमिदं वचनं, कृष्णो द्रव्यपर्यायो वर्णः, लेश्या योगपरिणामः, कृष्णद्रव्यसाचिव्याद्यः योगपरिणामः स कृष्णलेश्या, एवं नीललेश्यादीयाओ वि विभासितव्वाओ। अण्णे भणंति–कृष्णवर्ण इव लेश्या कृष्णलेश्या एवं जाव सुक्कलेस्सा, नवरं पसत्थतरो परिणामो।" इति आवश्यकसूत्रस्य प्रतिक्रमणाध्ययने आवश्यकचूर्णौ पृ. ११२–११३।

"कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः। स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रयुज्यते ॥ १ ॥ [ ]। कृष्णादिद्रव्याणि तु सकलप्रकृतिनिष्यन्दभूतानि"–इति आवश्यकसूत्रस्य प्रतिक्रमणाध्ययने हारिभद्र्यां वृत्तौ पृ. ६४५।

यदुक्तं प्रज्ञापनावृत्तिकृता-
"इह च कर्मद्रव्यलेश्येति सामान्याभिधानेऽपि शरीरनामकर्मद्रव्याण्येव कर्मद्रव्यलेश्या, यस्मात् सयोगिकेवली शुक्ललेश्यापरिणामेन विहृत्यान्तर्मुहूर्ते शेषे योग-
"योगपरिणामो लेश्या, कथं पुनर्योगपरिणामो लेश्या? अतोऽवगम्यते—योगपरिणामो लेश्येति, स पुनर्योगः शरीरनामकर्मपरिणति-
निरोधं करोति, ततोऽयोगित्वमलेश्यत्वं च प्राप्नोति
विशेषः, यस्मादुक्तं—"कर्म हि कार्मणस्य कारणमन्येषां च शरीराणाम्" [ ] इति, तस्मादौदारिकादिशरीरयुक्तस्यात्मनो
वीर्यपरिणतिविशेषः काययोगः, तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्याजीवव्यापारो यः स वाग्योगः,
तथैवौदारिकादिशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्याजीवव्यापारो यः स मनोयोग इति, ततो यथैव कायादिकरणयुक्तस्या-
त्मनो वीर्यपरिणतिर्योग उच्यते तथैव लेश्याऽपि" [हारिभद्री प्रज्ञापनावृत्तिः पृ० ११०-१११] इति। गुरवस्तु व्याचक्षते—कर्म-
निस्यन्दो लेश्या, यतः कर्मस्थितिहेतवो लेश्याः, यथोक्तम्—"ताः कृष्णनीलकापोततैजसीपद्मशुक्लनामानः। श्लेष इव वर्णबन्धस्य
कर्मबन्धस्थितिविधात्र्यः ॥ १ ॥" [प्रशमरतौ ३८] इति। योगपरिणामत्वे तु लेश्यानां "योगा पयडिपएसं ठिइअणुभागं कसायओ
कुणति" [बन्ध शतक गा० ९९] त्ति वचनात् प्रकृतिप्रदेशबन्धहेतुत्वमेव स्यात् न तु कर्मस्थितिहेतुत्वं, कर्मनिस्यन्दरूपत्वे तु यावत्
कषायोदयस्तावत्तन्निस्यन्दस्यापि सद्भावात् कर्मस्थितिहेतुत्वमपि युज्यत एव, अत एवोपशान्तक्षीणमोहयोः कर्मबन्धसद्भावेऽपि न
स्थितिसम्भवः, यदुक्तम्—'तं पढमसमये बद्धं बीयसमये वेइयं ततियसमए निज्जिण्णं" [ ] ति। आह—यदि कर्मनिस्यन्दो
लेश्या तदा समुच्छिन्नक्रियं शुक्लध्यानं ध्यायतः कर्मचतुष्टयसद्भावे तन्निस्यन्दसम्भवेन कथं न लेश्यासद्भावः?। उच्यते, नायं
नियमो यदुत निस्यन्दवतो निस्यन्देन सदा भाव्यं, कदाचिन्निस्यन्दवत्स्वपि वस्तुषु तथाविधावस्थायां तदभावदर्शनात्। यच्चोक्तम्-
अयोगिनो योगपरिणामाभावे लेश्यापरिणामाभाव इति निश्चिनुमः—योगपरिणाम एव लेश्येति, तदप्यसाधकं, यतो रश्म्यादयः
सूर्याद्यभावे न भवन्ति, न च ते तद्रूपा एव, यत उक्तम्—"यच्च चन्द्रप्रभाद्यत्र ज्ञातं तज्ज्ञातमात्रकम्। प्रभा पुद्गलरूपा यत्तद्धर्मो
नोपपद्यते ॥ १ ॥" [ ]। अन्ये त्वाहुः—कार्मणशरीरवत् पृथगेव कर्माष्टकात् कर्मवर्गणानिष्पन्नानि कर्मलेश्याद्रव्याणीति,
तत्त्वं पुनः केवलिनो विदन्ति। इत्युक्ता द्रव्यलेश्या। भावलेश्यामाह—द्विविधा च भावलेश्या-'विशुद्धलेश्या' अकलुषद्रव्य-
संपर्कजात्मपरिणामरूपा तथैव 'अविशुद्धा' इत्यविशुद्धलेश्या। तत्र द्विविधा विशुद्धलेश्या...... कषायोपशमजा कषायक्षयजा



लेश्या-स्वरूपम्

च।···· ····भावलेश्या उदयो विपाकः, इह तूपचारादुदयजनितपरिणामो भणितः षण्णां लेश्यानां जीवेषु”—इति वादिवेताल-श्रीशान्तिसूरिविरचितायामुत्तराध्ययनटीकायां लेश्याध्ययने चतुस्त्रिंशत्तमे पृ० ६५०–६५१॥

“लेसासु पुव्वोववण्णा विसुद्धलेसा। कहं? जेण तेसिं अप्पसत्थकम्मलेसाणं किण्ह–नील–काऊणं असुभो तिव्वाणुभागोदओ भवावेक्खो। जति वि जीवविपाकि लेस्साकम्मं तहा वि ‘जोगपरिणामो लेस्सा’ इति विग्गहे वि कम्मतियकायजोगो अत्थि त्ति धुवोदयत्तं, धुवोदयत्तातो य भवावेक्खो इत्युक्तम्। तस्स चाणुभावो पुव्वोववण्णएहिं बहुं निज्जरिओ त्ति तेण विसुद्धलेस्सा” इति आचार्यश्रीहरिभद्रसूरिविरचितायां प्रज्ञापनावृत्तौ पृ० १०७–१०८॥

“गति-कषाय-लिङ्ग-मिथ्यादर्शना-ऽज्ञाना-ऽसंयता-सिद्धत्व-लेश्याश्चतुश्चतुस्त्र्येकैकैकषड्भेदाः॥ २।६॥” इति तत्त्वार्थसूत्रे। “लेश्याः षड्भेदाः–कृष्णलेश्या, नीललेश्या, कापोतलेश्या, तेजोलेश्या, पद्मलेश्या, शुक्ललेश्या।” इति तत्त्वार्थभाष्ये।

“ननु च कर्मप्रकृतिभेदानां द्वाविंशत्युत्तरशतं प्रकृतिगणनया प्रसिद्धमाम्नाये। न च तत्र लेश्याः पठिताः, तत् कथम्? उच्यते– नामकर्मणि मनःपर्याप्तिर्नाम, पर्याप्तिश्च करणविशेषो येन मनोयोग्यान् पुद्गलानादाय चिन्तयति। ते च मन्यमानाः पुद्गलाः सह करणेन मनोयोग उच्यते। मनोयोगपरिणामश्च लेश्याः। ताश्च नोपात्ताः सूत्र-भाष्ययोरिहोत्तरोत्तरभेदत्वादिति। अपरे मन्यन्ते–कर्माष्टकोदयादसिद्धत्व एव लेश्या ग्राह्याः। तदेतत् सर्वं सूत्रकारेण लाघवमिच्छता लेशत उपात्तं न साक्षात्” इति तत्त्वार्थसूत्रस्य गन्धहस्तिवृत्तित्वेनाभिमतायां सिद्धसेनगणिविरचितायां वृत्तौ २।६॥

“लिश्यन्त इति लेश्या मनोयोगावष्टम्भजनितपरिणामः, आत्मना सह लिश्यते एकीभवतीत्यर्थः·· ······तत्र द्रव्यलेश्याः कृष्णादिवर्णमात्रम्। भावलेश्यास्तु कृष्णादिवर्णद्रव्यावष्टम्भजनिताः परिणामाः कर्मबन्धनस्थितेर्विधातारः श्लेषद्रव्यवद् वर्णकस्य चित्राद्यर्पितस्येति। तत्राविशुद्धोत्पन्न[त्व?]मेव कृष्णवर्णः, तत्सम्बद्धद्रव्यावष्टम्भादविशुद्धपरिणाम उपजायमानः कृष्णलेश्येति व्यपदिश्यते” इति तत्त्वार्थसूत्रस्य सिद्धसेनगणिविरचितायां वृत्तौ २।६।

लेश्यास्वरूपम्

---

"तृतीयः पीतलेश्यः ।४।२।" इति तत्त्वार्थसूत्रे। "ज्योतिष्कदेवनिकायस्तृतीयः इत्युक्तम्। पीता लेश्या यस्यासौ पीतलेश्यः। इह च द्रव्यलेश्या शरीरवर्णः प्रतिनियम्यते, नाध्यवसायविशेषः, लेश्याः षडपीष्यन्ते देवानां प्रतिनिकायमिति" इति सिद्धसेनगणिविरचितायां तत्त्वार्थसूत्रस्य वृत्तौ।

"पीतान्तलेश्याः।४।७।" इति तत्त्वार्थसूत्रे। "पीता अन्ते यासां लेश्यानां ताः पीतान्ताः कृष्ण-नील-कापोत-तैजस्यः। पीतान्ता लेश्या येषां ते पीतान्तलेश्याः पूर्वयोर्निकाययोर्देवा भवन्ति। शरीरवर्णमात्रत्वाद् द्रव्यलेश्या एताः, भावलेश्यास्तु षडपि भवेयुरिति" इति सिद्धसेनगणिविरचितायां तत्त्वार्थसूत्रस्य वृत्तौ।

"लिश्यते प्राणी कर्मणा यया सा लेश्या। यदाह–'श्लेष इव वर्णवन्धस्य कर्मवन्धस्थितिविधात्र्यः।' [प्रशमरतौ ३७]। तथा "कृष्णादिद्रव्यसाचिव्यात् परिणामो य आत्मनः। स्फटिकस्येव तत्रायं लेश्याशब्दः प्रयुज्यते॥" [ ] इति। इयं च शरीरनामकर्मपरिणतिरूपा योगपरिणतिरूपत्वात्, योगस्य च शरीरनामकर्मपरिणतिविशेषत्वात्, यत उक्तं प्रज्ञापनावृत्तिकृता–

"योगपरिणामो लेश्या। कथं पुनर्योगपरिणामो लेश्या? यस्मात् सयोगिकेवली शुक्ललेश्यापरिणामेन विहृत्य अन्तर्मुहूर्ते शेषे योगनिरोधं करोति ततोऽयोगित्वमलेश्यत्वं च प्राप्नोति, अतोऽवगम्यते 'योगपरिणामो लेश्या' इति। स पुनर्योगः शरीरनामकर्मपरिणतिविशेषः, यस्मादुक्तम्—"कर्म हि कार्मणस्य कारणमन्येषां च शरीराणाम्" [ ] इति। तस्मादौदारिकादिशरीरयुक्तस्यात्मनो वीर्यपरिणतिविशेषः काययोगः १, तथा औदारिक-वैक्रिया-ऽऽहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्यात् जीवव्यापारो यः स वाग्योगः २, तथा औदारिकादिशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्याज्जीवव्यापारो यः स मनोयोग इति ३। ततो यथैव कायादिकरणयुक्तस्यात्मनो वीर्यपरिणतिर्योग उच्यते तथैव लेश्याऽपि" [हारिभद्री प्रज्ञापनावृत्तिः पृ० ११०–१११] इति। अन्ये तु व्याचक्षते–"कर्मनिस्यन्दो लेश्येति। सा च द्रव्यभावभेदाद् द्विधा। तत्र द्रव्यलेश्या कृष्णादिद्रव्याण्येव, भावलेश्या तु तज्जन्यो जीवपरिणामः" [उत्तराध्ययनसूत्रबृहद्वृत्तौ पृ० ६५१] इति" इति अभयदेवसूरिविरचितायां स्थानाङ्गसूत्रटीकायाम् पृ० ३१–३२॥

"लेश्या कृष्णादिद्रव्यसान्निध्यजनितो जीवपरिणामः।" इति भगवतीसूत्रे प्रथमे शतके प्रथम उद्देशके अभयदेवसूरिविरचितायां टीकायाम्।

"कृष्णादिद्रव्यसाचिव्यजनितात्मपरिणामरूपां भावलेश्याम्" इति भगवतीसूत्रे प्रथमे शतके द्वितीये उद्देशके अभयदेवसूरिविरचितायां टीकायाम्।

"आत्मनि कर्मपुद्गलानां लेशनात् संश्लेषणात् लेश्याः, योगपरिणामश्चैताः, योगनिरोधे लेश्यानामभावात्, योगश्च शरीरनामकर्मपरिणतिविशेषः" इति भगवतीसूत्रे प्रथमे शतके द्वितीय उद्देशके अभयदेवसूरिविरचितायां टीकायाम्।

"कर्मणः सकाशाद्या लेश्या जीवपरिणतिः सा कर्मलेश्या भावलेश्येत्यर्थः, तामेव प्रतिपतति, द्रव्यतोऽवस्थितलेश्यत्वाद्देवानामिति" इति भगवतीसूत्रे चतुर्दशे शतके प्रथम उद्देशके अभयदेवसूरिविरचितायां टीकायाम्।

"आत्मनः सम्बन्धिनीं, कर्मणो योग्या लेश्या कृष्णादिका कर्मणो वा लेश्या "श्लिश् श्लेषणे" [पा० धा० ११७५] इति वचनात् सम्बन्धः कर्मलेश्या, तां न जानाति" इति भगवतीसूत्रे चतुर्दशे शतके नवमे उद्देशके अभयदेवसूरिविरचितायां टीकायाम्।

"अपरस्त्वाह– ननु कर्मोदयजनितानां नारकत्वादीनां भवत्विहोपन्यासः, लेश्यास्तु कस्यचित् कर्मण उदये भवन्तीत्येतन्न प्रसिद्धम्, तत् किमितीह तदुपन्यासः? सत्यम्, किन्तु योगपरिणामो लेश्या, योगस्तु त्रिविधोऽपि कर्मोदयजन्य एव, ततो लेश्यानामपि तदुदयजन्यत्वं न विहन्यते। अन्ये तु मन्यन्ते कर्माष्टकोदयात् संसारस्थत्वा-ऽसिद्धत्ववल्लेश्यावत्त्वमपि भावनीयमित्यलं विस्तरेण, तदर्थिना तु गन्धहस्तिवृत्तिरनुसर्तव्येति"–इति मलधारि हेमचन्द्रसूरिविरचितायाम् अनुयोगद्वारसूत्रवृत्तौ सू० १२६ ॥

"अथ लेश्येति कः शब्दार्थः? उच्यते–लिप्यते श्लिष्यते आत्मा कर्मणा सह अनयेति लेश्या, कृष्णादिद्रव्यसाचिव्यादात्मनः परिणामविशेषः। उक्तं च– "कृष्णादिद्रव्यसाचिव्यात् परिणामो य आत्मनः। स्फटिकस्येव तत्रायं लेश्याशब्दः प्रवर्तते ॥" [ ]। अथ कानि कृष्णादीनि द्रव्याणि? उच्यते– इह योगे सति लेश्या भवति, योगाभावे च न भवति, ततो योगेन

॥ ८२३ ॥

लेश्या-स्वरूपम्

---

सहान्वय-व्यतिरेकदर्शनाद् योगनिमित्ता लेश्येति निश्चीयते, सर्वत्रापि तन्निमित्तत्वनिश्चयस्यान्वय-व्यतिरेकदर्शनमूलत्वात्।
योगनिमित्ततायामपि विकल्पद्वयमवतरति—किं योगान्तर्गतद्रव्यरूपा योगनिमित्तकर्मद्रव्यरूपा वा? तत्र न तावद् योगनिमित्त-
कर्मद्रव्यरूपा, विकल्पद्वयानतिक्रमात्, तथाहि—योगनिमित्तकर्मद्रव्यरूपा सती घातिकर्मद्रव्यरूपा अघातिकर्मद्रव्यरूपा वा? न
तावद् घातिकर्मद्रव्यरूपा, तेषामभावेऽपि सयोगिकेवलिनि लेश्यायाः सद्भावात्। नापि अघातिकर्मरूपा, तत्सद्भावेऽपि अयोगि-
केवलिनि लेश्याया अभावात्। ततः पारिशेष्याद् योगान्तर्गतद्रव्यरूपा प्रत्येया। तानि च योगान्तर्गतानि द्रव्याणि यावत् कषाया-
स्तावत् तेषामभ्युदयोपबृंहकाणि भवन्ति। दृष्टं च योगान्तर्गतद्रव्याणां कषायोदयोपबृंहणसामर्थ्यम्, यथा पित्तद्रव्यस्य। तथाहि—
पित्तप्रकोपवशादुपलक्ष्यते महान् प्रवर्धमानः कोपः। अन्यच्च, बाह्यान्यपि द्रव्याणि कर्मणामुदय-क्षयोपशमादिहेतव उपलभ्यन्ते,
यथा ब्राह्म्योपधिर्ज्ञानावरणक्षयोपशमस्य, सुरापान ज्ञानावरणोदयस्य, कथमन्यथा युक्तायुक्तविवेकविकलतोपजायते, दधिभोजनं
निद्रारूपदर्शनावरणोदयस्य, तत् किं योगद्रव्याणि न भवन्ति? तेन यः स्थितिपाकविशेषो लेश्यावशादुपगीयते शास्त्रान्तरे स
सम्यगुपपन्नः, यतः स्थितिपाको नामानुभाग उच्यते, तस्य निमित्तं कषायोदयान्तर्गतकृष्णादिलेश्यापरिणामाः, ते च परमार्थतः
कषायस्वरूपा एव, तदन्तर्गतत्वात्, केवलं योगान्तर्गतद्रव्यसहकारिकारणभेदवैचित्र्याभ्यां ते कृष्णादिभेदैर्भिन्ना तारतम्यभेदेन
विचित्राश्चोपजायन्ते, तेन यद् भगवता कर्मप्रकृतिकृता शिवशर्माचार्येण शतकाख्ये ग्रन्थेऽभिहितम्—"ठिइअणुभागं कसायओ
कुणइ" [ बन्धशतके गा० ९९ ] इति, तदपि समीचीनमेव कृष्णादिलेश्यापरिणामानामपि कषायोदयान्तर्गतानां कषायरूपत्वात्।
तेन यदुच्यते कैश्चिद् "योगपरिणामत्वे लेश्यानां "जोगा पयडिपएसं ठिइअणुभागं कसायओ कुणइ" [ बन्धशतके गा० ९९ ]
इति वचनात् प्रकृति-प्रदेशबन्धहेतुत्वमेव स्यात्, न कर्मस्थितिहेतुत्वम्" [उत्तराध्ययनसूत्रबृहद्वृत्तौ पृ० ६५१] इति तदपि न समीचीनं
यथोक्तभावार्थापरिज्ञानात्। अपि च, न लेश्याः स्थितिहेतवः, किन्तु कषायाः। लेश्यास्तु कषायोदयान्तर्गताः अनुभागहेतवः।
अत एव च "स्थितिपाकविशेषस्तस्य भवति लेश्याविशेषेण॥" [ प्रशमरतौ ३७ ] इत्यत्र अनुभागप्रतिपत्त्यर्थं पाकग्रहणम्। एतच्च
सुनिश्चितं कर्मप्रकृतिटीकादिषु। ततः सिद्धान्तपरिज्ञानमपि न सम्यक् तेषामस्ति। यदप्युक्तम् "कर्मनिष्यन्दो लेश्या, निष्यन्दरूपत्वे

हि यावत् कषायोदयस्तावन्निष्यन्दस्यापि सद्भावात् कर्मस्थितिहेतुत्वमपि युज्यत एव" [उत्तराध्ययनसूत्रबृहद्वृत्तौ पृ० ६५१] इत्यादि, तदपि अश्लीलम्, लेश्यानामनुभागबन्धहेतुतया स्थितिबन्धहेतुत्वायोगात्। अन्यच्च, कर्मनिष्यन्दः किं कर्मकल्क उत कर्मसारः? न तावत् कर्मकल्कः, तस्यासारतयोत्कृष्टानुभागबन्धहेतुत्वानुपपत्तिप्रसक्तेः, कल्को हि असारो भवति, असारश्च कथमुत्कृष्टानुभागबन्धहेतुः? अथ चोत्कृष्टानुभागबन्धहेतवोऽपि लेश्या भवन्ति। अथ कर्मसार इति पक्षः तर्हि कस्य कर्मणः सार इति वाच्यम्। यथायोगमष्टानामपीति चेत्, अष्टानामपि कर्मणां शास्त्रे विपाका वर्ण्यन्ते, न च कस्यापि कर्मणो लेश्यारूपो विपाक उपदर्शितः, ततः कथं कर्मसारपक्षमंगीकुर्महे? तस्मात् पूर्वोक्त एव पक्षः श्रेयानित्यङ्गीकर्तव्यः, तस्य हरिभद्रसूरिप्रभृतिभिरपि तत्र तत्र प्रदेशे अङ्गीकृतत्वादिति" इति प्रज्ञापनासूत्रे सप्तदशे लेश्यापदे मलयगिरिसूरिविरचितायां टीकायाम् पृ० ३३०-३३१॥

"द्रव्यलेश्या नाम जीवस्य शुभाशुभपरिणामरूपायां भावलेश्यायां परिणममानस्योपष्टम्भजनकानि कृष्णादीनि पुद्गलद्रव्याणि। ताभिश्च द्रव्यलेश्याभिः भावः शुभाशुभाध्यवसायरूपः साध्यते ॥१६४४॥" इति बृहत्कल्पभाष्यटीकायाम् पृ० ४८३॥

अथ दिगम्बरग्रन्थानुसारेण लेश्यास्वरूपमुपदर्श्यते–

"भावलेश्या कषायोदयरञ्जिता योगप्रवृत्तिरिति कृत्वा औदयिकीत्युच्यते" इति पूज्यपादाचार्यदेवनन्दिकृतायां तत्त्वार्थव्याख्यायां सर्वार्थसिद्धौ २।६॥

"कषायोदयरञ्जिता योगप्रवृत्तिर्लेश्या। द्विविधा लेश्या–द्रव्यलेश्या भावलेश्या चेति। तत्र द्रव्यलेश्या पुद्गलविपाकिकर्मोदयापादितेति सा नेह परिगृह्यते, आत्मनो भावप्रकरणात्। भावलेश्या कषायोदयरञ्जिता योगप्रवृत्तिरिति कृत्वा औदयिकीत्युच्यते। ननु च योगप्रवृत्तिरात्मप्रदेशपरिस्पन्दक्रिया, सा च वीर्यलब्धिरिति क्षायोपशमिकी व्याख्याता, कषायश्चौदयिको व्याख्यातः, ततो लेश्याऽनर्थान्तरभूतेति, नैष दोषः, कषायतीव्रमन्दावस्थापेक्षाभेदाद् अर्थान्तरत्वम्। सा षड्विधा—कृष्णलेश्या नीललेश्या कपोतलेश्या तेजोलेश्या पद्मलेश्या शुक्ललेश्या चेति। तस्यात्मपरिणामस्याशुद्धिप्रकर्षाप्रकर्षापेक्षया कृष्णादिशब्दोपचारः क्रियते।

॥ ८२५ ॥

 ॥ ८२६ ॥

लेश्यास्वरूपम्

---

ननु च उपशान्तकषाये क्षीणकषाये सयोगिकेवलिनि च शुक्ला लेश्यास्तीति आगमः, तत्र कषायानुरञ्जनाभावादौदयिकीत्वं नोपपद्यते; नैष दोषः, पूर्वभावप्रज्ञापननयापेक्षया यासौ योगप्रवृत्तिः कषायानुरञ्जिता 'सैवेयम्' इत्युपचारादौदयिकीत्युच्यते। तदभावादयोगिकेवली अलेश्यः" इति तत्त्वार्थराजवार्तिके २।६, पृ० १०७॥

"कषायश्लेषप्रकर्षयुक्ता योग[प्र]वृत्तिर्लेश्या। सा षड्विधा कृष्ण–नील–कपोत–तेजः–पद्म–शुक्लविकल्पात्। शरीरनामोदयापादिता द्रव्यलेश्या" इति तत्त्वार्थराजवार्तिके ९।७, पृ० ६०४॥

"कषायोदयतो योगप्रवृत्तिरुपदर्शिता। लेश्या जीवस्य कृष्णादिषड्भेदा भावतोऽनघैः॥११॥" इति विद्यानन्दिविरचिते तत्त्वार्थश्लोकवार्तिके २।६।

"लिंपइ अप्पीकीरइ एदीए णियअपुण्णपुण्णं च। जीवो त्ति होदि लेस्सा लेस्सागुणजाणयक्खादा ॥४८९॥
जोगपउत्ती लेस्सा कसायउदयाणुरंजिया होइ। तत्तो दोण्णं कज्जं बंधचउक्कं समुद्दिट्ठं ॥४९०॥
नट्ठकसाये लेस्सा उच्चदि सा भूदपुव्वगदिणाया।
वण्णोदयेण जणिदो सरीरवण्णो दु दव्वदो लेस्सा। सो सोढा किण्हादी अणेयमेया समेयेण ॥४९४॥
अहवा जोगपउत्ती मुक्खो त्ति तहिं हवे लेस्सा ॥५३२॥
वण्णोदयसंपादितसरीरवण्णो दु दव्वदो लेस्सा। मोहुदयखओवसमोवसमखयजजीवफंदणं भावो ॥५३५॥"

इति नेमिचन्द्राचार्यविरचिते गोम्मटसारे जीवकाण्डे॥

तत्र कृष्णवर्णपुद्गलसन्निधाने य आत्मनोऽशुद्धतमः परिणामः सा कृष्णलेश्या। नीलद्रव्यसन्निधाने य आत्मनोऽशुद्धतरः परिणामः सा नीललेश्या। कापोतवर्णद्रव्यसान्निध्यात्तदनुरूपोऽशुद्ध आत्मपरिणामः कापोतलेश्या। तेजोवर्णद्रव्यसान्निध्यात्तदनुरूपः शुद्ध आत्मपरिणामस्तेजोलेश्या। पद्मवर्णद्रव्यसान्निध्यात्तदनुरूपः शुद्धतर आत्मपरिणामः पद्मलेश्या। शुक्लवर्णद्रव्यसान्निध्याच्छुद्धतम आत्मपरिणामः शुक्ललेश्या। कृष्णादिद्रव्याणि च सकलकर्मप्रकृतिनिःस्यन्दभूतानि, तदुपाधिजन्मानो भावलेश्याः कर्मस्थितिहेतवः। यदाह—

“ ताः कृष्ण-नील-कापोत-तैजसी-पद्म-शुक्लनामानः।
श्लेष इव वर्णबन्धस्य कर्मबन्धस्थितिविधात्र्यः ॥ २ ॥” [ प्रशमरतौ ३८ ]

एताश्चाऽशुद्धतमा-ऽशुद्धतरा-ऽशुद्ध-शुद्ध-शुद्धतर-शुद्धतमात्मपरिणामरूपा जम्बूफलखादकदृष्टान्ताद् ग्रामघातकदृष्टान्ताच्चावसेयाः। आगमगाथाश्चात्र—

“ [1]जह जम्बुतरुवरेगो सुपक्कफलभरियनमियसालग्गो।
दिट्ठो छहि पुरसेहिं ते बिंती जंबु भक्खेमो ॥ १ ॥
किह पुण ते बिंतेको आरुहमाणाण जीअसंदेहो।
ता छिंदिऊण मूले पाडेउं ताहि भक्खेमो ॥ २ ॥

१ एता गाथा आवश्यकसूत्रे प्रतिक्रमणाध्ययनस्य हारिभद्रयां वृत्तौ [ पृ० ६४५ ] अपि क्वचित् किञ्चित्पाठभेदेन उद्धृताः ॥
२ यथा जम्बूतरुवर एकः सुपक्वफलभृतनमितशाखाग्रः। दृष्टः षड्भिः पुरुषैः ते ब्रुवन्ति जम्बूः भक्षयामः ॥ १ ॥
कथं पुनस्तान् ? ब्रवीत्येकः आरोहतां जीवसन्देहः। तस्मात् छित्त्वा मूले पातयित्वा तान् भक्षयामः ॥ २ ॥

लेश्या-स्वरूपम्

बीयाऽऽह एद्दहेणं किं छिन्नेण तरुणा उ अम्हं ति ।
साहा महल्ल छिंदह तइओ बेई पसाहाओ ॥ ३ ॥
गुच्छे चउत्थओ पुण पंचमओ बेइ गेण्हह फलाइं ।
छट्ठो बेई पडिया एइच्चिय खायह पघेत्तुं ॥ ४ ॥
दिट्ठंतस्सोवणओ जो बेई तरुं तु छिंद मूलाओ ।
सो वट्टइ किण्हाए साल महल्ला उ नीलाए ॥ ५ ॥
हवइ पसाहा काऊ गुच्छे तेऊ फलाणि पम्हाए ।
पडियाणि सुक्कलेसा अहवा अन्नं उआहरणं ॥ ६ ॥
चोरा गामवहत्थं विणिग्गया एगु बेइ घाएह ।
जं पेच्छह तं सव्वं दुपयं च चउप्पयं वा वि ॥ ७ ॥

---

१ द्वितीय आह- एतावता किं छिन्नेन तरुणा तु अस्माकम् इति ?। शाखा महतीः छिन्त तृतीयो ब्रवीति प्रशाखाः ॥ ३ ॥ गुच्छान् चतुर्थः पुनः पञ्चमो ब्रवीति गृह्णीत फलानि। षष्ठो ब्रवीति पतितान् एतान् एव खादथ प्रगृह्य ॥ ४ ॥ दृष्टान्तस्योपनयो यो ब्रवीति तरुं तु छिन्त मूलात्। स वर्तते कृष्णायां शाखा महतीस्तु नीलायाम् ॥ ५ ॥ भवति प्रशाखाः कापोती, गुच्छान् तैजसी, फलानि पद्मायाम्। पतितानि शुक्लेश्या, अथवाऽन्यदुदाहरणम् ॥ ६ ॥ चौरा ग्रामवधार्थं विनिर्गता एको ब्रवीति घातयत। यं प्रेक्षध्वे तं सर्वं द्विपदं चतुष्पदं वापि ॥ ७ ॥

२ खायह य घेत्तुं-मु. ॥ ३ महल्लाओ नीलाए-मु. ॥ ४ पसाला-शां. खं. संपू. ॥ ५ बेअ-संपू. । बेय-खं. ॥

बीओ[1] माणुस पुरिसे अ तइओ साउहे चउत्थो अ ।
पंचमओ जुज्झंते छट्ठो उण तत्थिमं भणइ ॥ ८ ॥

एक्कं ता हरह धणं बीअं मारेह मा कुणह एयं ।
केवल हरह धणं ती उवसंहारो इमो तेसिं ॥ ९ ॥

सव्वे मारेहं[2] ती वट्टइ सो किण्हलेसपरिणामे ।
एवं[3] कमेण सेसा जा चरमो सुक्कलेसाए १० ॥" [ ]

एतास्त्वाद्यास्तिस्रोऽप्रशस्ताः, उत्तराः प्रशस्ताः । एताश्च मनुष्याणां परिवर्त्तमाना भवन्ति । ततश्च यदा उत्तरास्तिस्र आत्मनो भवन्ति तदा विशुद्धिरित्याख्यायते । यदा चैता मरणकाले भवन्ति, तदा तदनुरूपासु गतिष्वात्मा प्रयाति । तत्र कृष्ण-नील-कापोतलेश्यापरिणतो नरकेषु तिर्यक्षु चोत्पद्यते । पीत-पद्म-शुक्ललेश्यापरिणतस्तु मनुष्येषु देवेषु चोत्पद्यते ।

१ द्वितीयो मनुष्यान्, पुरुषांश्च तृतीयः, सायुधान् चतुर्थश्च । पञ्चमो युध्यतः, षष्ठः पुनः तत्रेदं भणति ॥ ८ ॥ एकं तावद् हरथ धनं द्वितीयं मारयथ मा कुरुत एतत् । केवलं हरत धनमिति उपसंहारः अयं तेषाम् ॥ ९ ॥ सर्वान् मारयत इति वर्तते कृष्णलेश्यापरिणामे । एवं क्रमेण शेषा यावच्चरमः शुक्ललेश्यायाम् ॥ १० ॥

२ मारेहिं ती वट्टइ–संपू. । मारेह त्ति–मु. ॥ ३ एव कमेणं–शां. संपू. हे ॥

॥ ८२९ ॥

यदाहुर्भगवन्तः—

"जंल्लेसे मरइ तल्लेसेसु उववज्जइ ।" [ ]

लौकिकास्त्वाहुः—

"अन्ते च भरतश्रेष्ठ ! या मतिः सा गतिर्नृणाम् ॥" [ ] इति ।

अत्र यदि मतिश्चेतनामात्रं तदा या मतिः सा गतिरिति किं केन संगतम् ?। अथाऽशुद्धतमादिपरिणामयुक्ता[2] मतिर्व्याख्यायते तर्हीदमेव पारमर्षं वचनं साध्वित्यलं प्रसङ्गेन। एवं तावदशुद्धलेश्यात्यागेन विशुद्धलेश्यापरिग्रहेण च मनसः शुद्धिरुक्ता ॥ ४४ ॥

रागादि-दोषवर्णनम्

इदानीं मनःशुद्धिनिमित्तमीषत्करमुपायान्तरमुपदिशति—

**मनःशुद्ध्यै च कर्तव्यो राग-द्वेषविनिर्जयः ।**
**कालुष्यं येन हित्वाऽऽत्मा स्वस्वरूपेऽवतिष्ठते ॥ ४५ ॥**

मनसो भावमनस आत्मरूपस्य शुद्धिहेतवे कर्तव्यो राग-द्वेषयोः प्रीत्यप्रीत्यात्मकयोर्विनिर्जयो निरोधः, उदितयोर्विफलीकरणेन अनुदितयोश्चानुत्पादनेन। तथा सति किं स्यात् ? कालुष्यमशुद्धत्वं हित्वा आत्मा भावमनोरूपः स्वकीये स्वरूपे परमशुद्धिलक्षणेऽवतिष्ठते स्थिरो भवति ॥ ४५ ॥

१ यल्लेश्यो म्रियते तल्लेश्येषु उपपद्यते । "जल्लेसाइं दव्वाइं परियाइत्ता कालं करेइ तल्लेस्सेसु उववज्जइ" इति भगवतीसूत्रे तृतीये शतके चतुर्थ उद्देशके ॥ २ ०परिणामादियुक्ता–शां. संपू. ॥

अथ राग-द्वेषयोर्दुर्जयत्वं श्लोकत्रयेणाह—

आत्मायत्तमपि स्वान्तं कुर्वतामत्र योगिनाम् ।
रागादिभिः समाक्रम्य परायत्तं विधीयते ॥ ४६ ॥

आत्मायत्तमपि आत्मनि निमग्नमपि स्वान्तं मनः कुर्वतां योगिनामत्र जगति रागादिभी राग-द्वेषाभ्यां तदविनाभूतेन च मोहेन समाक्रम्य रक्तं द्विष्टं मूढं च कृत्वा परायत्तमात्मनोऽनधीनं क्रियते ॥ ४६ ॥ तथा—

रक्ष्यमाणमपि स्वान्तं समादाय मनाग् मिषम् ।
पिशाचा इव रागाद्याश्छलयन्ति मुहुर्मुहुः ॥ ४७ ॥

रक्ष्यमाणमपि गोप्यमानमपि यम-नियमादिभिर्मन्त्र-तन्त्रप्रायैः स्वान्तं भावमनः समादाय पुरस्कृत्य मनाग् मिषं स्वल्पं छलं प्रमादरूपं छलयन्ति आत्मवशं कुर्वन्ति। क एते? रागादयः। क इव? पिशाचा इव। मुहुर्मुहुरिति यदा यदा प्रमादलेशो[1] भवति तदा तदा छलयन्ति। यथा हि पिशाचा मन्त्रादिकृतरक्षमपि साधकं छलं प्राप्याऽऽत्मवशं कुर्वन्ति तथा रागाद्योऽपि योगिमन इति ॥ ४७ ॥

---

१ ०लेशोऽपि-मु. ॥

॥ ८३१ ॥

तथा—

राागादितिमिरध्वस्तज्ञानेन मनसा जनः ।
अन्धेनान्ध इवाऽऽकृष्टः पात्यते नरकावटे ॥ ४८ ॥

रागादय एव सम्यग्दर्शनविघातहेतुत्वात् तिमिरमक्ष्णोर्विप्लवः, तेन ध्वस्तं ज्ञानं तत्त्वालोको यस्य तेन तथाविधेन मनसा आकृष्टो जनो नरकावटे नरककूपे पात्यते। केन क इव? अन्धेनाऽन्ध इव। रागादिभिरन्धीकृतेन मनसा जनोऽप्यन्धः, तस्यैव मार्गदर्शकत्वात् । ततो यथाऽन्धेनाऽन्धः समाकृष्याऽवटे पात्यते तथाऽन्धेन मनसा अन्धो जनो नरकावटे पात्यते।

रागादि-दोषवर्णनम्

अत्रान्तरश्लोकाः—

द्रव्यादिषु रति-प्रीती राग इत्यभिधीयते । तेष्वेवाऽरतिमप्रीतिं चाहुर्द्वेषं मनीषिणः ॥ १ ॥
उभावेतौ दृढतरं बन्धनं सर्वजन्मिनाम् । सर्वदुःखानोकहानां मूलकन्दौ प्रकीर्तितौ ॥ २ ॥
कः सुखे विस्मयस्मेरो दुःखे कः कृपणो भवेत् ? । मोक्षं को नाप्नुयाद् राग-द्वेषौ स्यातां न चेदिह ? ॥ ३ ॥
रागेण ह्यविनाभावी द्वेषो द्वेषेण चेतरः । तयोरेकतरत्यागे परित्यक्तावुभावपि ॥ ४ ॥
दोषाः स्मरप्रभृतयो रागस्य परिचारकाः । मिथ्याभिमानप्रमुखा द्वेषस्य तु परिच्छदः ॥ ५ ॥
तयोर्मोहः पिता बीजं नायकः परमेश्वरः । ताभ्यामभिन्नस्तद्रक्षः सर्वदोषपितामहः ॥ ६ ॥

१ ०वटे नरककूपे पात्यते-शां.॥ २ 'तयो रक्षा अस्ति यस्य स तद्रक्षः' इत्यर्थः। मु०मध्ये तु 'तद्रक्ष्यः' इति पाठः ॥

एवमेते त्रयो दोषा नातो दोषान्तरं क्वचित् । तैरमी जन्तवः सर्वे भ्रम्यन्ते भववारिधौ ॥ ७ ॥
स्वभावेन हि जीवोऽयं स्फटिकोपलनिर्मलः । उपाधिभूतैरेतैस्तु तादात्म्येनाऽवभासते ॥ ८ ॥
अराजकमहो ! विश्वं यदेभिः पश्यतोहरैः । ह्रियते ज्ञानसर्वस्वं स्वरूपमपि जन्मिनाम् ॥ ९ ॥
ये जन्तवो निगोदेषु येऽपि चासन्नमुक्तयः । सर्वत्रास्पृष्टकरुणा पतत्येषां पताकिनी ॥ १० ॥
मुक्त्या वैरं किमेतेषां मुक्तिकामैः सहाथवा । येनोभयसमायोगस्तैर्भवन् प्रतिषिध्यते ॥ ११ ॥
दोषक्षयक्षमाणां हि किमुपेक्षा क्षमाऽर्हताम् । जगद्दाहकरं यन्न शान्तं दोषप्रदीपनम् ॥ १२ ॥
व्याघ्र-व्याल-जला-ऽग्निभ्यो न बिभेति तथा मुनिः । लोकद्वयापकारिभ्यो रागादिभ्यो भृशं यथा ॥ १३ ॥
वर्त्माऽतिसंकटमहो ! योगिभिः समुपाश्रितम् । राग-द्वेषौ व्याघ्र-सिंहौ पार्श्वतो यस्य तिष्ठतः ॥ १४ ॥ ४८ ॥

अथ राग-द्वेषजयोपायमुपदिशति—

**अस्ततन्द्रैरतः पुंभिर्निर्वाणपदकाङ्क्षिभिः ।**
**विधातव्यः समत्वेन राग-द्वेषद्विषज्जयः ॥ ४९ ॥**

यत एवंविधौ रागद्वेषौ अतः कारणादस्ततन्द्रैर्निरस्तप्रमादैः पुंभिः पुरुषधर्मोपेतैर्योगिभिः, किंविशिष्टैः ? निर्वाणपदकाङ्क्षिभिः, निर्वान्ति राग-द्वेषोपतप्ताः शीतीभवन्त्यस्मिन्निति निर्वाणम्, तदेव पद्यमानत्वात् पदम्, तत्काङ्क्षणशीला निर्वाणपदकाङ्क्षिणः, तैर्विधातव्यो विधेयो राग-द्वेषावेवोपतापकारित्वाद् द्विषन्तौ तयोर्जयोऽभिभवः, केनोपायेनेत्याह—समत्वेन, रागहेतुषु द्वेषहेतुषु च माध्यस्थ्येनौदासीन्येनेति यावत् ॥ ४९ ॥

॥ ८३३ ॥

यथा साम्यं राग-द्वेषजयोपायस्तथाऽऽह—

अमन्दानन्दजनने साम्यवारिणि मज्जताम्।
जायते सहसा पुंसां राग-द्वेषमलक्षयः ॥ ५० ॥

साम्यमेवातिशीतीभावजनकत्वाद् वारि, तत्र। किंविशिष्टे? अमन्दस्तीव्रो य आनन्दो आह्लादस्तस्य जनने, मज्जतां तन्मध्यमवगाहमानानाम्, सहसा अकस्मात्। केषां? पुंसां। राग-द्वेषावेव मलस्तस्य क्षयः। प्रसिद्धमेतद् यथा वारिणि मज्जतां मलक्षयो भवति, एवं साम्ये मज्जतां लीयमानानां राग-द्वेषक्षयो भवति ॥ ५० ॥

रागादिजयोपायवर्णनम्

न परं राग-द्वेषयोरेवापनायकं साम्यम्, अपि तु सर्वकर्मणामपीत्याह—

प्रणिहन्ति क्षणार्धेन साम्यमालम्ब्य कर्म तत्।
यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ ५१ ॥

प्रणिहन्ति हन्ति क्षणार्धेनान्तर्मुहूर्तेन साम्यमुक्तलक्षणमालम्ब्याश्रित्य तत् कर्म ज्ञानावरणीयादि, यत् किम्? यत् कर्म, न हन्याद् नापनयेद् नरः पुमान् तीव्रतपसा तीव्रेण शरीरमनसोः संतापहेतुनाऽनशनादिरूपेणार्थात् साम्यरहितेन जन्मकोटिभिर्बहुभिरपि जन्मभिः ॥ ५१ ॥

---

१ निमज्जतां–मु.॥

कथमन्तर्मुहूर्त्तमात्रेण साम्यं सर्वकर्मापनायकमित्याह—

**कर्म जीवं च संश्लिष्टं परिज्ञातात्मनिश्चयः ।**
**विभिन्नीकुरुते साधुः सामायिकशलाकया ॥ ५२ ॥**

सामायिकमेव समत्वमेव शलाका वंशादिमयी, तया विभिन्नीकुरुते पृथक् करोति साधुर्यतिः । किं विभिन्नीकुरुते ? कर्म जीवं च संश्लिष्टं संपृक्तम्, यथा श्लेषद्रव्यसंपृक्तानां पत्रादीनां शलाकया पृथग्भावः क्रियते तथा जीव-कर्मणोरपि तादात्म्येन संबद्धयोः सामायिकेनेति। अयमेव कर्मक्षयः। न हि कर्मपुद्गलानामात्यन्तिकः क्षयः संभवति, नित्यत्वात् तेषाम्, आत्मनस्तु पृथग्भूतानि कर्माणि क्षीणानि इत्युच्यन्ते ।

ननु वाङ्मात्रमेतद् यत् सामायिकशलाकया साधुः कर्माणि पृथक् करोतीत्याह—परिज्ञातात्मनिश्चयः, परिज्ञातः पुनः पुनः संविदित आत्मनिश्चय आत्मनिर्णयो येन स तथा । अयमर्थः—आत्मज्ञानमभ्यस्यंस्तथाविधावरणापगमेन तथा पुनः पुनः स्वसंवेदनेनात्मनिश्चयं दृढं करोति यथात्मरूपाद् भिन्नरूपाणि आत्मरूपावारकाणि च कर्माणि परमसामायिकबलेन निर्जरयति ॥ ५२ ॥

न केवलमात्मनिश्चयबलेन कर्माणि पृथक् करोति यावदात्मनि परमात्मदर्शनमपि भवतीत्याह—

**रागादिध्वान्तविध्वंसे कृते सामायिकांशुना ।**
**स्वस्मिन् स्वरूपं पश्यन्ति योगिनः परमात्मनः ॥ ५३ ॥**

राागादय एव स्वरूपतिरोधायकत्वाद् ध्वान्तम्, तस्य विध्वंसः, तस्मिन् कृते। केन? सामायिकमेवांशुरादित्यस्तेन। ततः किं स्यात्? स्वस्मिन्नात्मनि परमात्मनः स्वरूपं योगिनः पश्यन्ति। सर्वेऽपि ह्यात्मानस्तत्त्वतः परमात्मान एव, केवलज्ञानस्य येन तेनांशेन सर्वत्र भावात्, यत् पारमार्षम्[1]—

"सव्वजीवाणं[2] पि अ णं अक्खरस्साणंतभागो[3] निच्चुग्घाडियओ चेव" [नन्दीसूत्रे सू० ७७]।

केवलं रागद्वेषादिदोषकलुषितत्वाद् न साक्षात् परमात्मस्वरूपाभिव्यक्तिः। सामायिकांशुमत्प्रकाशनेन तु रागादितिमिरेऽपगते आत्मन्येव परमात्मस्वरूपमभिव्यक्तं भवति ॥ ५३ ॥

साम्यप्रभाववर्णनम्

इदानीं साम्यप्रभावं व्यनक्ति—

स्निह्यन्ति जन्तवो नित्यं वैरिणोऽपि परस्परम्।
अपि स्वार्थकृते साम्यभाजः साधोः प्रभावतः ॥ ५४ ॥

अपि स्वार्थकृते स्वार्थनिमित्तमपि साम्यवतः साधोः प्रभावाद् नित्यवैरिणोऽप्यहि-नकुलादयः स्निह्यन्ति परस्परं मैत्रीं कुर्वन्ति।

---

१ पारमर्षम्–मु. ॥ २ सर्वजीवानमपि च अक्षरस्यानन्तभागो नित्योद्घाटित एव ॥ ३ ०स्सणंत०–शां. खं. संपू. ॥

अयमर्थः–ईदृशः साम्यस्य महिमा यदेतत् स्वनिमित्तं कृतमपि परेषु नित्यवैरिषु पर्यवस्यति, यत् स्तुवन्ति विद्वांसः–

" देवाकृष्य करेण केशरिपदं दन्ती कपोलस्थलीं
कण्डूयत्यहिरेष बभ्रुपुरतो मार्गं निरुध्य स्थितः ।
व्याघ्रव्यात्तविशालवक्त्रकुहरं जिघ्रत्यजस्रं मृगो
यत्रैवं पशवः प्रशान्तमनसस्तामर्थये त्वद्भुवम् ॥ १ ॥ " [ ]

लौकिका अपि साम्यवतां योगिनां स्तुतिमाहुर्यथा—

" तत्सन्निधौ वैरत्यागः " [ पातञ्जलयोगदर्शने २।३५ ] इति।

अत्रान्तरश्लोकाः—

चेतनाचेतनैर्भावैरिष्टानिष्टतया स्थितैः । न मुह्यति मनो यस्य तस्य साम्यं प्रचक्षते ॥ १ ॥

गोशीर्षचन्दनालेपे वासीच्छेदे[2] च वाह्वोः । अभिन्ना चित्तवृत्तिश्चेत् तदा साम्यमनुत्तरम् ॥ २ ॥

अभिष्टोतरि च प्रीते रोषान्धे चाऽभिशप्तरि । यस्याविशेषणं चेतः स साम्यमवगाहते ॥ ३ ॥

१ " अहिंसाप्रतिष्ठायां तत्सान्निधौ वैरत्यागः " इति सम्पूर्णं सूत्रम् ॥ २ ०च्छेदेथवानयोः–शां. । " भुजो बाहुः प्रवेष्टो दोर्वाहा·········॥ ५८९ ॥ " इति अभिधानचिन्तामणौ ॥

[1]हूयते न तप्यते न दीयते वा न किञ्चन । अहो ! अमूल्यक्रीतीयं साम्यमात्रेण निर्वृतिः[2] ॥ ४ ॥
प्रयत्नकूटैः क्लिष्टैश्च रागाद्यैः किमुपासितैः ? । अयत्नलभ्यं हृद्यं च श्रय साम्यं सुखावहम् ॥ ५ ॥
परोक्षार्थप्रतिक्षेपात् स्वर्ग-मोक्षावपह्नुताम् । साम्यशर्म स्वसंवेद्यं नास्तिकोऽपि न निह्नुते ॥ ६ ॥
कविप्रलापरूढेऽस्मिन्नमृते किं विमुह्यसि ? स्वसंवेद्यरसं मूढ ! पिब साम्यरसायनम् ॥ ७ ॥
खाद्य-लेह्य-चूष्य-पेयरसेभ्यो विमुखा अपि । पिबन्ति यतयः स्वैरं साम्यामृतरसं मुहुः ॥ ८ ॥
कण्ठपीठे लुठन् भोगिभोगो मन्दारदाम च । यस्याप्रीत्यै न वा नो वा प्रीत्यै स समतापतिः ॥ ९ ॥
न गूढं किञ्चनाचार्यमुष्टिः काचिन्न चापरा । बालानां सुधियां चैकं साम्यं भवरुजौषधम् ॥ १० ॥
अतिक्रूरतरं कर्म शान्तानामपि योगिनाम् । यद् घ्नन्ति साम्यशस्त्रेण रागादीनां कुलान्यपि[3] ॥ ११ ॥
अयं प्रभावः परमः समत्वस्य प्रतीयताम् । यत् पापिनः क्षणेनापि पदमियूति शाश्वतम् ॥ १२ ॥
यस्मिन् सति सफलतामसत्यफलतां व्रजेत् । रत्नत्रयं नमस्तस्मै समत्वाय महोजसे ॥ १३ ॥
विगाह्य सर्वशास्त्रार्थमिदमुच्चैस्तरां ब्रुवे । इहामुत्र स्व-परयोर्नान्यत् साम्यात् सुखाकरम् ॥ १४ ॥
संसर्गेऽप्युपसर्गाणामपि मृत्यावुपस्थिते । न तत्कालोचितं किञ्चित् साम्यादौपयिकं वरम् ॥ १५ ॥

---

१ न ह्रूयते न तप्यते दीयते-संपू. । न ह्रूयते तप्यते न दीयते-मु. ॥ २ निवृत्तिः-शां. ॥ ३ कुलानि ते-मु. ॥
४ परम्-मु. ॥

रागद्वेषादिशत्रुप्रतिहतिनिपुणां साम्यसाम्राज्यलक्ष्मीं,
भुक्त्वा भुक्त्वा निरन्ताः शुभगतिपदवीं लेभिरे प्राणभाजः ।
तेनैतद् मानुषत्वं सपदि सफलतां नेतुकामैर्निकामं,
साम्ये निस्सीमसौख्यप्रचयपरिचिते न प्रमादो विधेयः ॥ १६ ॥ ५४ ॥

नन्ववगतमेतत् सर्वदोषनिवारणकारणं समत्वम्, प्रीताः स्मः, यदि तु साम्यं प्रत्यप्युपायः कश्चन स्यात्, तदुपायेऽप्युपायान्तरमीषत्करं स्यात् तदा निराकाङ्क्षाः प्रमोदामहे, इत्यतेद् मनसि कृत्वा श्लोकद्वयमाह—

साम्यं स्याद् निर्ममत्वेन तत्कृते भावनाः श्रयेत् ।
अनित्यतामशरणं भवमेकत्वमन्यताम् ॥ ५५ ॥

अशौचमाश्रवविधिं संवरं कर्मनिर्जराम् ।
धर्मस्वाख्याततां लोकं द्वादशीं बोधिभावनाम् ॥ ५६ ॥

साम्यं यथोक्तस्वरूपं निर्ममत्वेनोपायेन स्यात्। ननु साम्य-निर्ममत्वयोः को भेदः? उच्यते—साम्यं राग-द्वेषयोरुभयोरपि प्रतिपक्षभूतम्, निर्ममत्वं तु रागस्यैकस्य प्रतिपक्षभूतम्। तद्दोषद्वयनिवारणाय साम्ये चिकीर्षिते भवति बलवत्तरस्य रागस्य प्रतिपक्षभूतं निर्ममत्वमुपायः। यथा हि बलवत्यां सेनायां बलवत्तरस्य कस्यचिद् विनाश इतरेषां विनाशाय तथा रागनिग्रहहेतुर्निर्ममत्वं हीनबलानां द्वेषादीनां विनाशायेति अलं प्रसङ्गेन।

॥ ८३९ ॥

निर्ममत्वस्याप्युपायं दर्शयति—तत्कृते निर्ममत्वनिमित्तं भावना अनुप्रेक्षाः श्रयेद् योगीति प्रकृतम् । भावना नामतः कथयति—अनित्यतामित्यादि, स्पष्टं चैतत् ॥ ५५ ॥ ५६ ॥

तद्यथा इत्युपस्कारपूर्वकमनित्यताख्यां प्रथमां भावनां दर्शयति—

द्वादशभावनानिरूपणम्

यत् प्रातस्तन्न मध्याह्ने यन्मध्याह्ने न तन्निशि ।
निरीक्ष्यते भवेऽस्मिन् ही ! पदार्थानामनित्यता ॥ ५७ ॥

शरीरं देहिनां सर्वपुरुषार्थनिबन्धनम् ।
प्रचण्डपवनोद्धूतघनाघनविनश्वरम् ॥ ५८ ॥

कल्लोलचपला लक्ष्मीः संगमाः स्वप्नसंनिभाः ।
वात्याव्यतिकरोत्क्षिप्ततूलतुल्यं च यौवनम् ॥ ५९ ॥

श्लोकत्रयं स्पष्टम्, नवरं शरीरमित्यादि श्लोके पूर्वार्द्धे यदिति शेषः, उत्तरार्द्धे तदिति शेषः ॥

अत्रान्तरश्लोकाः—

स्वतोऽन्यतश्च सर्वाभ्यो दिग्भ्यश्चागच्छदापदः । कृतान्तदन्तयन्त्रस्थाः कष्टं जीवन्ति जन्तवः ॥ १ ॥
वज्रसारेषु देहेषु यद्यास्कन्दत्यनित्यता । रम्भागर्भसगर्भेषु का कथा तर्हि देहिनाम् ॥ २ ॥

असारेषु शरीरेषु स्थेमानं यश्चिकीर्षति । जीर्णशीर्णपलालोत्थे चञ्चापुंसि करोतु सः ॥ ३ ॥
न मन्त्र-तन्त्र-भैषज्यकरणानि शरीरिणाम् । त्राणाय मरणव्याघ्रमुखकोटरवासिनाम् ॥ ४ ॥
प्रवर्द्धमानं पुरुषं प्रथमं ग्रसते जरा । ततः कृतान्तस्त्वरते धिगहो ! जन्म देहिनाम् ॥ ५ ॥
यद्यात्मानं विजानीयात् कृतान्तवशवर्तिनम् । को ग्रासमपि गृह्णीयात् पापकर्मसु का कथा ? ॥ ६ ॥
समुत्पद्य समुत्पद्य विपद्यन्तेऽप्सु बुद्बुदाः । यथा तथा क्षणेनैव शरीराणि शरीरिणाम् ॥ ७ ॥
आढ्यं निःस्वं नृपं रङ्कं ज्ञं मूर्खं सज्जनं खलम् । अविशेषेण संहर्तुं समवर्ती प्रवर्तते ॥ ८ ॥
न गुणेष्वस्य दाक्षिण्य द्वेषो दोषेषु चास्ति न । दवाग्निवदरण्यानीं विलुम्पत्यन्तको जनम् ॥ ९ ॥
इदं तु मा स्म शङ्किष्ठाः कुशास्त्रैरपि मोहितः । कुतोऽप्युपायतः कायो निरपायो भवेदिति ॥ १० ॥
ये मेरुं दण्डसात् कर्तुं पृथ्वीं वा छत्रसात् क्षमाः । तेऽपि त्रातुं स्वमन्यं वा न मृत्योः प्रभविष्णवः ॥ ११ ॥
आ कीटादा च देवेन्द्रात् प्रभावन्तकशासने । अनुन्मत्तो न भाषेत कथञ्चित् कालवञ्चनम् ॥ १२ ॥
पूर्वेषां चेत् क्वचित् कश्चिज्जीवन् दृश्येत तद् वयम् । मनोरथातीतमपि प्रतीमः कालवञ्चनम् ॥ १३ ॥
अनित्यं यौवनमपि प्रतियन्तु मनीषिणः । बलरूपापहारिण्या जरसा जर्जरीभवेत् ॥ १४ ॥
यौवने कामिनीभिर्ये काम्यन्ते कामलीलया । निकामकृतथूत्कारं त्यज्यन्ते तेऽपि वार्द्धके ॥ १५ ॥
यदर्जितं बहुक्लेशैरभुक्त्वा यच्च पालितम् । तद् याति क्षणमात्रेण निधनं धनिनां धनम् ॥ १६ ॥

॥ ८४१ ॥

उपमानपदं किं स्यात् फेन-बुद्बुद-विद्युताम् । धनस्य नश्यतोऽवश्यं पश्यतामपि तद्वताम्[1] ॥ १७ ॥
समागमाः सापगमाः सुहृद्भिर्बन्धुभिर्निजैः । स्वस्य वाऽन्यस्य वा नाशे विकृतेऽपकृतेऽपि वा ॥ १८ ॥
ध्यायन्ननित्यतां नित्यं मृतं पुत्रं न शोचति । नित्यताग्रहमूढस्तु कुड्यभङ्गेऽपि रोदिति ॥ १९ ॥

एतच्छरीरधनयौवनबान्धवादि, तावद् न केवलमनित्यमिहासुभाजाम् ।
विश्वं सचेतनमचेतनमप्यशेषमुत्पत्तिधर्मकमनित्यमुशन्ति सन्तः ॥ २० ॥ ५७ ॥ ५८ ॥ ५९ ॥

अनित्य-भावना-वर्णनम्

अनित्यताभावनामुपसंहरन्नुपदर्शयति—

इत्यनित्यं जगद्वृत्तं स्थिरचित्तः प्रतिक्षणम् ।
तृष्णाकृष्णाहिमन्त्राय निर्ममत्वाय चिन्तयेत् ॥ ६० ॥

इति पूर्वोक्तप्रकारेण जगद्वृत्तं जगत्स्वरूपमनित्यं प्रतिक्षणं चिन्तयेदवधारयेत्, स्थिरचित्तो निश्चलचित्तः सन् । किमर्थम्? निर्ममत्वाय, अनित्यत्वादिभावनासाध्यवीतरागत्वनिमित्तम् । किंविशिष्टाय? तृष्णाकृष्णाहिमन्त्राय, तृष्णा रागः, सैव कृष्णाहिः, तस्या मन्त्राय मन्त्रस्वरूपाय । अहिशब्दः स्त्रीलिङ्गोऽप्यस्तीति नोपमानोपमेययोर्भिन्नलिङ्गत्वम् । अनित्यता ॥ १ ॥ ६० ॥

---

१ ०नमिदं०–खं. ॥

अथाशरणभावनामुपदिशति—

इन्द्रोपेन्द्रादयोऽप्येते यन्मृत्योर्यान्ति गोचरम् ।
अहो ! तदन्तकातङ्के कः शरण्यः शरीरिणाम् ? ॥ ६१ ॥

इन्द्रः सुरनाथः, उपेन्द्रो वासुदेवः, तावादी येषां सुर-मनुष्यादीनाम्, चक्रवर्तिपरिहारेणोपेन्द्रग्रहणं लोके मृत्युकाले शरणत्वोपहासपरम्, तेऽपि यद् यस्माद् मृत्योर्गोचरं वशं यान्ति, अहो इति विस्मये, तत् तस्मादन्तकातङ्के मृत्युभये उपस्थिते कः शरण्यः शरणे साधुः शरीरिणां जन्तूनाम् ? कोऽपि नास्तीत्यर्थः ॥ ६१ ॥ तथा—

पितुर्मातुः स्वसुर्भ्रातुस्तनयानां च पश्यताम् ।
अत्राणो नीयते जन्तुः कर्मभिर्यमसद्मनि ॥ ६२ ॥

पित्रादीनां पश्यतांताननादृत्यैवात्राणोऽशरणो जन्तुः कर्मभिः परभववेदनीयैः शुभाशुभैर्यमसद्मनि यमालये नीयते। एतच्च लोकप्रसिद्ध्यपेक्षम्, न पुनर्यमसद्मनि कश्चिद् नीयते, अपि तु चतुर्गतिस्वरूपे संसारे तत्तद्गत्युचितैः कर्मभिस्तत्र तत्र नीयत इति परमार्थः ॥ ६२ ॥ तथा—

शोचन्ति स्वजनानन्तं नीयमानान् स्वकर्मभिः ।
नेष्यमाणं तु शोचन्ति नात्मानं मूढबुद्धयः ॥ ६३ ॥

॥ ८४३ ॥

शोचन्ति शोकविषयतां नयन्ति स्वजनान् बन्धून्, अन्तमवसानं नीयमानान् स्वकर्मभिर्भवान्तरवेदनीयैः 'मूढबुद्धयः' इत्युत्तरेण योगः। आत्मानं तु स्वकर्मभिरेवान्तं नेष्यमाणं न शोचन्ति। संनिहितपरित्यागे हि व्यवहितं प्रति कारणं वाच्यम्, संनिहितश्चात्मा, तस्य शोचनीयतां मुक्त्वा व्यवहितस्य स्वजनादेः शोचनं बुद्धिमोहनिबन्धनमेव ॥ ६३ ॥

अशरणभावनामुपसंहरति—

संसारे दुःखदावाग्निज्वलज्ज्वालाकरालिते ।
वने मृगार्भकस्येव शरणं नास्ति देहिनः ॥ ६४ ॥

अशरण-भावना-वर्णनम्

संसारे शरणं देहिनो नास्ति। कस्येव कुत्र? वने मृगार्भकस्येव। किंविशिष्टे संसारे? दुःखमेव दावाग्निस्तस्य ज्वलन्त्यो या ज्वाला दुःखस्यैव प्रभेदास्तैः करालिते रौद्रे। वने किंविशिष्टे? दुःखो दुःखहेतुर्यो दावाग्निस्तस्य ज्वलन्त्यो या ज्वालास्ताभिः करालिते। अर्भकग्रहणमतिमौग्ध्यख्यापनार्थम्। अशरणभावना।

अत्रान्तरश्लोकाः—

अष्टाङ्गेनायुर्वेदेन जीवातुभिरथागदैः। मृत्युंजयादिभिर्मन्त्रैस्त्राणं नैवास्ति मृत्युतः ॥ १ ॥
खड्गपञ्जरमध्यस्थश्चतुरङ्गचमूवृतः। रङ्कवत् कृष्यते राजा हठेन यमकिङ्करैः ॥ २ ॥
जलमध्यस्थितस्तम्भमूर्धपञ्जरमध्यगम्[1]। राज्ञः प्रियसुतं मृत्युश्चकर्षाऽन्यस्य का कथा? ॥ ३ ॥

१ ०मूर्ध्वप०-मु. ॥

षष्टिं पुत्रसहस्राणि सगरस्यापि चक्रिणः । तृणवत् त्राणरहितान्यदहज्ज्वलनप्रभः ॥ ४ ॥
आस्कन्द्य स्कन्दकाचार्यं मुनिपञ्चशतीं म्नतः । न कश्चिदभवत् त्राता पालकादन्तकादिव ॥ ५ ॥
यथा मृत्युप्रतीकारं पशवो नैव जानते । विपश्चितोऽपि हि तथा धिक् प्रतिकारमूढताम् ॥ ६ ॥
येऽसिमात्रोपकरणाः कुर्वते क्ष्मामकण्टकाम् । यमभ्रूभङ्गभीतास्तेऽप्यास्ये निदधतेऽङ्गुलीः ॥ ७ ॥
स्नेहादाश्लिष्य शक्रेणार्द्धासनेऽध्यास्यते स्म यः । श्रेणिकः सोऽप्यशरणोऽश्रोतव्यां प्राप तां दशाम् ॥ ८ ॥
मुनीनामप्यपापानामसिधारोपमैर्व्रतैः । न शक्यते कृतान्तस्य प्रतिकर्तुं कदाचन ॥ ९ ॥
अशरण्यमहो ! विश्वमराजकमनायकम् । यदेतदप्रतीकारं ग्रस्यते यमरक्षसा ॥ १० ॥
योऽपि धर्मः प्रतीकारो न सोऽपि मरणं प्रति । शुभां गतिं ददानस्तु प्रतिकर्तेति कीर्त्यते ॥ ११ ॥

एवं विश्वमनाकुलः कवलयन्नाब्रह्म कीटावधि,
श्रान्तिं याति कथञ्चनापि न खलु त्रैलोक्यभीमो यमः ।
नैवास्य प्रतिकारकर्मणि सुराधीशोऽप्यलंभूष्णुता–
मालम्बेत शरण्यवर्जितमिदं हा ! हा ! जगत् ताम्यति ॥ १२ ॥

अशरणभावना ॥ २ ॥ ६४ ॥

१ दृश्यतां पृ० ३९७॥ २ दृश्यतां त्रिषष्टिशलाकापुरुषचरित्रे सप्तमे पर्वणि जैनरामायणे पञ्चमे सर्गे श्लो० ३३५–३६२॥
३ धर्मप्रतीकारो–संपू. हे. मु.॥

॥ ८४५ ॥

[1]अथ भवभावनां श्लोकत्रयेणाह—

श्रोत्रियः श्वपचः स्वामी पत्तिर्ब्रह्मा कृमिश्च सः ।
संसारनाट्ये नटवत् संसारी हन्त ! चेष्टते ॥ ६५ ॥

संसारो नानायोनिषु सञ्चरणं स एव नाट्यं नटकर्म तत्र नटवत् नर्तकवत् संसारी जन्तुश्चेष्टते विविधां चेष्टां [2]करोति। हन्तेत्यामन्त्रणे। केनोल्लेखेन चेष्टते ? श्रोत्रियो वेदपारगः स एव श्वपचो भवति, स्वामी प्रभुः स एव पत्तिर्भवति, ब्रह्मा प्रजापतिः स एव कृमिर्भवति। यथेष्टं च विध्यनुवादौ, तेन श्वपचः श्रोत्रियः, पत्तिः स्वामी, कृमिर्ब्रह्मा, इत्यपि द्रष्टव्यम्। यथा हि नाट्ये विविधवर्णकादियोगाद् भूमिकान्तरं नटाः प्रतिपद्यन्ते तथैव संसारी विविधकर्मो[3]पाधेः श्रोत्रियादितां प्रतिपद्यते, न पुनरस्य तथाविधं परमार्थतो रूपमस्ति ॥ ६५ ॥ तथा—

भवभावना-स्वरूपम्

न याति कतमां योनिं कतमां वा न मुञ्चति ।
संसारी कर्मसम्बन्धादवक्रयकुटीमिव ॥ ६६ ॥

योनिमेकेन्द्रियादिलक्षणां कतमां न याति ? सर्वामपि यातीत्यर्थः, कतमां वा योनिं न मुञ्चति ? सर्वामपि मुञ्चतीत्यर्थः, संसारी जन्तुः। कुतो हेतोरित्याह—कर्मसम्बन्धात्, अवक्रयकुटीमिव भाटककुटीमिव। यथा हि तथाविधो[4]पयोगहेतोर्गृहमेधी एकां कुटीं प्रविशति, उपयोगाभावे तां मुञ्चति; उपयोगान्तराच्च कुट्यन्तरमादत्ते परिहरति च, एवं नियतकर्मोपभोगहेतोरेकां

१ अथ संसारभावनां–संपू. मु.॥ २ करोतीति–मु.॥ ३ ०पाधिः–शां. विना॥ ४ ०पयोगाद्धेतो०–खं. हे.॥

योनिं जन्तुः प्रविशति, तद्योग्यकर्मोपभोगानन्तरं तु तां विमुञ्चति, योन्यन्तरं चोपादत्ते पुनश्च परिहरति, न पुनर्नियतः कोऽपि योनिपरिग्रहोऽस्तीति ॥ ६६ ॥ तथा—

समस्तलोकाकाशेऽपि नानारूपैः स्वकर्मतः ।
वालाग्रमपि तन्नास्ति यन्न स्पृष्टं शरीरिभिः ॥ ६७ ॥

इहाकाशं द्विविधम्—लोकाकाशमलोकाकाशं च । यत्र धर्मा-ऽधर्म-जीव-पुद्गलानां सम्भवोऽस्ति तल्लोकाकाशम्, इतरत्त्वलोकाकाशम्, यदाह—

"धर्मादीनां वृत्तिर्द्रव्याणां यत्र भवति तत् क्षेत्रम् ।
तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यम् ॥ १ ॥" [ ]

ततः समग्रेऽपि लोकाकाशे चतुर्दशरज्ज्वात्मके वालाग्रमपि वालाग्रप्रमाणमपि तत् क्षेत्रं नास्ति यत् शरीरिभिरुत्पद्यमानैर्विपद्यमानैश्च न स्पृष्टम् । अत्र हेतुमाह—किंविशिष्टैः शरीरिभिः? सूक्ष्म-बादर-प्रत्येक-साधारणैकेन्द्रियभेदतो द्वि-त्रि-चतुष्पञ्चेन्द्रियभेदतश्च यथायोग्यं नानारूपैः । नानारूपत्वमपि कुतः? स्वकर्मतः, न त्वीश्वरादिप्रेरणया, यथाहुः परे—

"अज्ञो जन्तुरनीशः स्यादात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥ १ ॥" [महाभारते आरण्यकपर्वणि ३१-२७]

---

१ यथायोग्यनानारूपैः-शां. खं. ॥ २ "अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं नरकमेव च ॥" इति महाभारते पाठः ॥

॥ ८४७ ॥

भवभावना-स्वरूपम्

तत्रेश्वरप्रेरणा यदि कर्मनिरपेक्षा तदा विश्वस्य वैश्वरूप्यं[2] विलीयेत। कर्मसापेक्षतायां त्वीश्वरस्यास्वातन्त्र्यं वैफल्यं वा स्यादिति कर्मैवास्तु प्रेरकम्, किमीश्वरेण? यदवोचाम वीतरागस्तोत्रे—

"कर्मापेक्षः स चेत् तर्हि न स्वतन्त्रोऽस्मदादिवत्।
कर्मजन्ये च वैचित्र्ये किमनेन शिखण्डिना? ॥ १ ॥" [वीतरागस्तोत्रे ७।५]

अत्रान्तरश्लोकाः—

संसारिणश्चतुर्भेदाः श्वभ्रि[3]-तिर्यग्-नरा-ऽमराः। प्रायेण दुःखबहुलाः कर्मसम्बन्धबाधिताः ॥ १ ॥
आद्येषु त्रिषु नरकेषूष्णं शीतं परेषु च। चतुर्थे शीतमुष्णं च दुःखं क्षेत्रोद्भवं त्विदम् ॥ २ ॥
नरकेषूष्णशीतेषु चेत् पतेल्लोहपर्वतः। विलीयेत विशीर्येत तदा भुवमनाप्नुवन् ॥ ३ ॥
उदीरितमहादुःखा अन्योन्येनाऽसुरैश्च ते। इति त्रिविधदुःखार्त्ता वसन्ति नरकावनौ ॥ ४ ॥
समुत्पन्ना घटीयन्त्रेष्वधार्मिकसुरैर्बलात्। आकृष्यन्ते लघुद्वाराद्[4] यथा सीसशलाकिका ॥ ५ ॥
गृहीत्वा पाणि-पादादौ वज्रकण्टकसङ्कटे। आस्फाल्यन्ते शिलापृष्ठे वासांसि रजकैरिव ॥ ६ ॥
दारुदारं विदार्यन्ते दारुणैः क्रकचैः क्वचित्। तिलपेषं च पिष्यन्ते चित्रयन्त्रैः क्वचित् पुनः ॥ ७ ॥
पिपासार्त्ताः पुनस्तप्तत्रपु-सीसकवाहिनीम्। नदीं वैतरणीं नामाऽवतार्यन्ते वराककाः ॥ ८ ॥
छायाभिकाङ्क्षिणः क्षिप्रमसिपत्रवनं गताः। पत्रशस्त्रैः पतद्भिस्ते छिद्यन्ते तिलशोऽसकृत् ॥ ९ ॥

१ प्रेरणापि-शां.॥ २ वैरूप्यं शां.॥ ३ श्वभ्र०-संपूसं. मु.॥ ४ ०द्वारा यथा-संपू.॥

संश्लेष्यन्ते च शाल्मल्यो वज्रकण्टकसङ्कटाः । तप्तायःपुत्रिकाः क्वापि स्मारितान्यवधूरतम् ॥ १० ॥
संस्मार्य मांसलोलत्वमाश्यन्ते मांसमङ्गजम् । प्रख्याप्य मधुलौल्यं च पाय्यन्ते तापितं त्रपु ॥ ११ ॥
भ्राष्ट्र-कन्दु-महाशूल-कुम्भीपाकादिवेदनाः । अश्रान्तमनुभाव्यन्ते भृज्यन्ते च भटित्रवत् ॥ १२ ॥
छिन्नभिन्नशरीराणां भूयोमिलितवर्ष्मणाम् । नेत्राद्यङ्गानि कृष्यन्ते वक-कङ्कादिपक्षिभिः ॥ १३ ॥
एवं महादुःखहताः सुखांशेनापि वर्जिताः । गमयन्ति बहुं कालमात्रयस्त्रिंशिसागरम् ॥ १४ ॥
तिर्यग्गतिमपि प्राप्ताः सम्प्राप्यैकेन्द्रियादिताम् । तत्रापि पृथिवीकायरूपतां समुपागताः ॥ १५ ॥
हलादिशस्त्रैः पाट्यन्ते मृद्यन्तेऽश्व-गजादिभिः । वारिप्रवाहैः प्लाव्यन्ते दह्यन्ते च दवाग्निना ॥ १६ ॥
व्यथ्यन्ते लवणा-ऽऽचाम-मूत्रादिसलिलैरपि । लवणक्षारतां प्राप्ताः क्वथ्यन्ते चोष्णवारिणि ॥ १७ ॥
पच्यन्ते कुम्भकाराद्यैः कृत्वा कुम्भेष्टकादिसात् । चीयन्ते भित्तिमध्ये च प्राप्ताः कर्दमरूपताम् ॥ १८ ॥
केचिच्छाणैर्निघृष्यन्ते विपच्य क्षारमृत्पुटैः । टङ्कान्दुकैर्विदार्यन्ते पाट्यन्तेऽद्रिसरित्प्लवैः ॥ १९ ॥
अप्कायतां पुनः प्राप्तास्ताप्यन्ते तपनांशुभिः । घनीक्रियन्ते तुहिनैः संशोष्यन्ते च पांशुभिः ॥ २० ॥
क्षारेतररसाश्लेषाद् विपद्यन्ते परस्परम् । स्थाल्यन्तःस्था विपच्यन्ते पीयन्ते च पिपासितैः ॥ २१ ॥
तेजस्कायत्वमाप्ताश्च विध्याप्यन्ते जलादिभिः । घनादिभिः प्रकुट्यन्ते ज्वाल्यन्ते चेन्धनादिभिः ॥ २२ ॥

---

१ आश्लेष्यन्ते–संपू. मु. ॥ २ ०राणां पुनर्मिलित०–मु. ॥ ३ ०त्रयस्त्रिंशसा०–संपू. मु. ॥ ४ लवणाचाम्लमूत्रा०–मु. ॥ ५ प्राप्ता कर्दम०–शां. संपू. । कृत्वा कर्दम०–मु. ॥ ६ टंकांडुकै०–शां. खं. ॥ ७ ०न्तस्था संपू मु. ॥

॥ ८४९ ॥

वायुकायत्वमप्याप्ता हन्यन्ते व्यजनादिभिः । शीतोष्णादिद्रव्ययोगाद् विपद्यन्ते क्षणे क्षणे ॥ २३ ॥
प्राचीनाद्यास्तु सर्वेऽपि विराध्यन्ते परस्परम् । मुखादिवातैर्बाध्यन्ते पीयन्ते चोरगादिभिः ॥ २४ ॥
वनस्पतित्वं दशधा प्राप्ताः कन्दादिभेदतः । छिद्यन्ते चाथ भिद्यन्ते पच्यन्ते चाग्नियोगतः ॥ २५ ॥
संशोष्यन्ते निपिष्यन्ते प्लुष्यन्तेऽन्योन्यघर्षणैः । क्षारादिभिश्च दह्यन्ते संधीयन्ते च भोक्तृभिः ॥ २६ ॥
सर्वावस्थासु खाद्यन्ते भज्यन्ते च प्रभञ्जनैः । क्रियन्ते भस्मसाद् दावैरुन्मूल्यन्ते सरित्प्लवैः ॥ २७ ॥
सर्वेऽपि वनस्पतयः सर्वेषां भोज्यतां गताः । सर्वैः शस्त्रैः सर्वदाऽनुभवन्ति क्लेशसन्ततिम् ॥ २८ ॥
द्वीन्द्रियत्वे च ताप्यन्ते पीयन्ते पूतरादयः । चूर्ण्यन्ते कृमयः पादैर्भक्ष्यन्ते चटकादिभिः ॥ २९ ॥
शङ्खादयो निखन्यन्ते निःकृष्यन्ते[1] जलौकसः । गण्डूपदाद्याः पात्यन्ते जठरादौषधादिभिः ॥ ३० ॥
त्रीन्द्रियत्वेऽपि सम्प्राप्ते षट्पदी-मत्कुणादयः । विमृद्यन्ते शरीरेण ताप्यन्ते चोष्णवारिणा ॥ ३१ ॥
पिपीलिकास्तु तुद्यन्ते पादैः सम्मार्जनेन च । अदृश्यमानाः कुन्थ्वाद्या मथ्यन्ते चासनादिभिः ॥ ३२ ॥
चतुरिन्द्रियताभाजः सरघा[2]-भ्रमरादयः । मधुभक्षैर्विराध्यन्ते यष्टि-लोष्टादिताडनैः ॥ ३३ ॥
ताड्यन्ते तालवृन्ताद्यैर्द्राग् दंश-मशकादयः । ग्रस्यन्ते गृहगोधाद्यैर्मक्षिका-मर्कटादयः ॥ ३४ ॥
पञ्चेन्द्रिया जलचराः खादन्त्यन्योन्यमुत्सुकाः । धीवरैः परिगृह्यन्ते गिल्यन्ते[3] च बकादिभिः ॥ ३५ ॥

---

१ निकृष्यन्ते-मु. शां. खं. ॥ २ "सरघा मधुमक्षिका ॥ १२१२ ॥" इति अभिधानचिन्तामणौ ॥ ३ गल्यन्ते-शां. संपूमू. ॥

धर्मस्वाख्याततभावनायां दशविधयतिधर्मवर्णनम्

पदार्थाभिव्याहारा-ऽर्हद्वचनानुसारा-ऽर्थ्यत्वा-ऽर्थिजनभावग्राहकत्व-देशकालोपपन्नत्व-यत-मित-हितत्वैर्युक्तं [2]याचन-प्रच्छन-प्रश्नव्याकरणादिरूपमिति मृषावादपरिहाररूपं सूनृतम् ।

शौचं संयमं प्रति निरुपलेपता। सा चादत्तादानपरिहाररूपा। लोभार्त्तो हि परधनं जिघृक्षन् संयमं मलिनयति। लौकिका अप्याहुः—

" सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् ।
योऽर्थेषु शुचिः स शुचिर्न मृद्वारिशुचिः शुचिः ॥ १ ॥" [ मनुस्मृतौ ५।१०६ ]

अशुचिर्हि भावकल्मषसंयुक्त इहामुत्र चाशुभं कर्मोपचिनोति, उपदिश्यमानमपि च श्रेयो न प्रतिपद्यते, इत्यदत्तादानपरिहाररूपं शौचम् ।

नव[3]ब्रह्मचर्यगुप्तिसनाथमुपस्थसंयमो ब्रह्म 'भीमो भीमसेनः' इति न्यायाद् ब्रह्मचर्यम्। बृहत्त्वाद् ब्रह्मात्मा, तत्र चरणं ब्रह्मचर्यमात्मारामतेत्यर्थः। तदर्थं गुरुकुलसेवनमपि ब्रह्मचर्यमित्यब्रह्मनिवृत्तिरूपं ब्रह्मचर्यम्।

---

१ ०सारार्थत्वा०-संपू. विना। ०साराथित्वा०-शां. ॥ "सत्यर्थे भवं वचः सत्यम्। तदननृतम् अपरुषम् अपिशुनम् अनसभ्यम् अचपलम् अनाविलम् अविरलम् अभ्रान्तम् मधुरम् अभिजातम् असन्दिग्धम् स्फुटम् औदार्ययुक्तम् अग्राम्यपदार्थाभिव्याहारम् असीभरम् अरागद्वेषयुक्तम् सूत्रमार्गानुसारप्रवृत्तार्थम् अर्थ्यम् अर्थिजनभावग्रहणसमर्थम् आत्मपरार्थानुग्राहकं निरुपधं देश-कालोपपन्नम् अनवद्यम् अर्हच्छासनप्रशस्तं यतं मितं याचनप्रच्छनं प्रश्नव्याकरणमिति सत्यधर्मः" इति तत्त्वार्थभाष्ये [ ९।६ ]। विशेषार्थिभिः सिद्धसेनगणिविरचिता तत्त्वार्थभाष्यटीका विलोकनीया पृ० १९६-१९७॥ २ वाचन०-मु.॥ ३ ०ब्रह्मगुप्ति०-मु. ॥

नास्य किञ्चनं द्रव्यमस्तीत्यकिञ्चनः, तस्य भावोऽकिञ्चनता। उपलक्षणं चैतत्, तेन शरीर-धर्मोपकरणादिष्वपि निर्ममत्वमकिञ्चनत्वम्। शरीरमपि धारयन्तो मुनयो निर्ममत्वात् तत्परिग्रहरहिता भोजनादिकमपि संयमयात्रार्थं शकटाक्षलेपनवत् कुर्वन्ति, न मूर्च्छया। उपकरणमपि च रजोहरणादिकं संयमरक्षार्थं वस्त्र-पात्रादिकं तु संयमशरीरपरित्राणार्थं धारयन्ति,, न पुनर्लोभादिना इति निष्परिग्रहा एव। इति परिग्रहपरिहाररूपाऽकिञ्चनता।

तप उक्तनिर्वचनम्, उक्तस्य संयमादेर्वक्ष्यमाणस्य च क्षान्त्यादेः संवर-हेतोर्धर्मस्य मध्ये पठितम्, संवर-निर्जराहेतुत्वात्। तच्च द्वादशप्रकारं पूर्वमुक्तम्। प्रकीर्णकं चेदमनेकविधम्, तद्यथा–यवमध्यं वज्रमध्यं च चान्द्रायणं, कनक-रत्न-मुक्तावल्यस्तिस्रः, सिंहविक्रीडिते द्वे, सप्तसप्तमिकाद्याः प्रतिमाश्चतस्रः, सर्वतोभद्रम्, भद्रोत्तरम्, आचाम्लवर्धमानमित्येवमादि। तथा द्वादश भिक्षुप्रतिमा मासिक्याद्या आ सप्तमासिक्याः सप्त, सप्तरात्रिक्यस्तिस्रः, अहोरात्रिकी, एकरात्रिकी च।

क्षान्तिः क्षमा शक्तस्याशक्तस्य वा सहनपरिणामः, सा च क्रोधनिमित्तस्यात्मनि भावाभावचिन्तनात्, क्रोधदोषचिन्तनात्, बालस्वभावचिन्तनात्, स्वकृतकर्मफलाभ्यागमचिन्तनात्, क्षमागुणानुप्रेक्षणाच्च।

तत्र येन दोषेण मामाक्रोशति परः स दोषो मयि यद्यस्ति तदस्य सद्भूतमर्थं प्रकाशयतः कोऽपराधः?। अथ नास्ति, तर्हि मृषाऽसौ वदतीति भावाभाव[3]चिन्तनात् क्षमितव्यमेव, यदाह––

"आक्रुष्टेन मतिमता तत्त्वार्थविचारणे मतिः कार्या।
यदि सत्यं कः कोपः स्यादनृतं किं नु कोपेन॥ १॥" [ ]

१ किञ्चनद्रव्य०-मु.॥ २ ०दिक च संयम०-मु.। ३ भावविचिन्तनात्-मु.॥

धर्मस्वाख्याततभावनायां दशविधयतिधर्मवर्णनम्

क्रोधदोषचिन्तनादपि क्षमितव्यमेव। क्रुद्धस्य तावद् ध्रुवः कर्मबन्धः, ततः पराभिघातः, ततोऽप्यहिंसाव्रतलोपः, क्रुद्धस्य चापवदतः सूनृतव्रतलोपः, विस्मृतप्रव्रज्याप्रतिपत्तिश्चादत्तमपि गृह्णीयात् ततोऽस्तेयव्रतलोपः, द्वेषात् परपाखण्डिनीष्वब्रह्मासेवमानस्य ब्रह्मचर्यव्रतलोपः, प्रद्विष्टस्याविरतेषु गृहस्थेषु सहायबुद्ध्या मूर्च्छापि स्यादित्यपरिग्रहव्रतलोपः। उत्तरगुणभङ्गप्रसङ्गे तु का कथा? क्रुद्धश्च गुरूनप्याशातयेद[1]धिक्षिपेद् वा। इति क्रोधदोषचिन्तनम्।

बालस्वभावचिन्तनाच्च क्षन्तव्यम्। बालोऽज्ञः, तत्स्वभावचिन्तनं पुनर्बालः कदाचित् परोक्षमाक्रोशति कदाचित् प्रत्यक्षम्। आक्रोशन्नपि कश्चित् ताडयति, कश्चिद् मारयति, कश्चिद्[2] धर्मभ्रंशमपि चिकीर्षति, तद् दिष्ट्या वर्धामहे मामेष परोक्षमाक्रोशति न प्रत्यक्षम्, प्रत्यक्षं वाऽऽक्रोशति न ताडयति, ताडयति वा न मारयति, मारयति वा न धर्माद् भ्रंशयति, इत्युत्तरस्योत्तरस्याभावे लाभ एष ममेति मन्यते, यदाहुः—

"अक्कोस[3]-हणण-मारण-धम्मब्भंसाण बालसुलहाण।
लाभं मन्नइ धीरो जहोत्तराणं अभावम्मि ॥ १ ॥" [ ]

इति बालस्वभावचिन्तनम्।

स्वकृतकर्मफलाभ्यागमचिन्तनादपि क्षमितव्यमेव[4]। पूर्वकृतकर्मणां फलाभ्यागम एषः, फलभोगं तपो वा विना न निकाचितस्य कर्मणः क्षय इत्यवश्यभोक्तव्ये फले निमित्तमात्रमेव परः, यदाहुः—

---

१ ०सादयेद०—शां. खं. संपू.॥ २ कश्चिच्च धर्म०—शां.॥ ३ आक्रोश-हनन-मारण-धर्मभ्रंशानां बालसुलभानाम्। लाभं मन्यते धीरो यथोत्तराणामभावे॥ ४ क्षन्तव्यमेव—मु.॥

" संव्वो पुव्वकयाणं कम्माणं पावए फलविवागं ।
अवराहेसु गुणेसु अ निमित्तमित्तं परो होइ ॥ १ ॥" [ ]

इति स्वकृतकर्मफलाभ्यागमचिन्तनम् ।

क्षमागुणानुप्रेक्षणाच्च क्षन्तव्यम् । अनायासः, क्रोधनिमित्तप्रायश्चिताभावः, शुभध्यानाध्यवसायः, परसमाधानोत्पादनम्, स्तिमितप्रसन्नान्तरात्मत्वम्, प्रहरणसहायान्वेषणाभावः, असंरम्भः, प्रसन्नमुखता, धवलविलोचनता, अस्वेदता, निष्कम्पता, परप्रहारवेदनाऽभाव इति क्षमागुणाः । इति क्रोधप्रतिपक्षः क्षमाधर्मः ।

अथ मार्दवम् । मृदुरस्तब्धः, तस्य भावः कर्म वा मार्दवं नीचैर्वृत्तिरनुत्सेकश्च, तदुभयमपि मदनिग्रहाद् भवति । मदाश्च जातिमदादयः पूर्वमुक्ताः । ततश्च

" जाति-कुल-रूप-बल-लाभ-बुद्धि-वाल्लभ्यक-श्रुतमदान्धाः ।
क्लीबाः परत्र चेह च हितमप्यर्थं न पश्यन्ति ॥" [ प्रशमरतौ ८० ]

इत्यादिमददोषपरिहारहेतुर्मानप्रतिपक्षो मार्दवम् ।

अथ ऋजुता । ऋजुरवक्रमनोवाक्कायकर्मा, तस्य भावः कर्म वा ऋजुता, मनोवाक्कायविक्रियाविरह इत्यर्थः, मायारहितत्वमिति यावत् । मायावी हि सर्वातिसन्धानपरतया सर्वाभिशङ्कनीयो भवति, यदाह—

१ सर्वः पूर्वकृतानां कर्मणां प्राप्नोति फलविपाकम् । अपराधेषु गुणेषु च निमित्तमात्रं परो भवति ॥

॥ ८९७ ॥

"मायाशीलः पुरुषो यद्यपि न करोति काञ्चिदपराधम् ।
सर्प इवाविश्वास्यो भवति तथाह्या(प्या)त्मदोषहतः ॥ १ ॥" [ प्रशमरतौ २८ ]

इति मायाप्रतिपक्षभूता ऋजुता ।

अथ मुक्तिः । सा च बाह्याभ्यन्तरवस्तुषु तृष्णाविच्छेदरूपा लोभाभाव इत्यर्थः । लोभाभिभूतो हि क्रोध-मान-माया-हिंसा-ऽनृत-स्तेया-ऽब्रह्म-परिग्रहदोषजालेनोपचीयते, यदाह—

धर्मस्वाख्याततभावनायां दशविधयतिधर्मवर्णनम्

"सर्वविनाशाश्रयिणः सर्वव्यसनैकराजमार्गस्य ।
लोभस्य को मुखगतः क्षणमपि दुःखान्तरमुपेयात्[2] ! ॥ १ ॥" [ प्रशमरतौ ३० ]

इति लोभपरिहाररूपा निर्भयत्व-स्वपरहितात्मप्रवृत्तिमत्त्व-ममत्वाभाव-निस्सङ्गता-ऽपरद्रोहकत्वादिगुणयुक्ता रजोहरणादिकेष्वप्युपकरणेष्वनभिष्वङ्गस्वभावा मुक्तिः । इति दशविधो धर्म्मः ।

ननु संयम-सूनृत-शौच-ब्रह्मा-ऽकिञ्चनतानां महाव्रतेषु, क्षमा-मार्दवा-ऽऽर्जव-मुक्तीनां संवरप्रकरणे, तपसश्च संवर-निर्जराहेतुत्वेनोक्तत्वाद् धर्मप्रतिपादनप्रकरणे पुनरुक्तत्वमेव । उच्यते—नात्र संयमादीनां पुनर्भणनं प्रकृतम्, किन्तु संयमादिदशविधधर्मप्रतिपादनप्रकारेण भगवतामर्हतां स्वाख्यातधर्मत्वानुप्रेक्षणमेव, इति धर्माणां गुणभावेन तदाख्यातॄणां भगवतामनुप्रेक्षानिमित्तं स्तुतिरिति सर्वं समञ्जसम् ॥ ९३ ॥

१ ०पधीयते–खं. ॥ २ दोषान्तर०–संपू. ॥

अथास्य धर्मस्य माहात्म्यमाह—

धर्मप्रभावतः कल्पद्रुमाद्या ददतीप्सितम् ।
गोचरेऽपि न ते यत् स्युरधर्माधिष्ठितात्मनाम् ॥ ९४ ॥

कल्पद्रुमः कल्पवृक्षः, आदिशब्दाच्चिन्तामण्यादयः परिगृह्यन्ते, ते वनस्पतिरूपा उपलरूपाश्च धर्मवद्भ्यः सुषमादिकालभाविभ्योऽभीष्टफलदायिनो भवन्ति । ते एव च[1] धर्महीनानां दुःषमादिकालभाविनाम्, आस्तामभीष्टं न ददति, गोचरेऽपि न भवन्ति । अत्रार्थप्राप्तिः फलम् ॥ ९४ ॥

तथा—

अपारे व्यसनाम्भोधौ पतन्तं पाति देहिनम् ।
सदा सविधवर्त्येकबन्धुर्धर्मोऽतिवत्सलः ॥ ९५ ॥

स्पष्टः । अत्रानर्थपरिहारः फलम् ॥ ९५ ॥

---

१ च–नास्ति संपू. मु. ॥

॥ ८९९

धर्मस्वाख्याततभावनायां धर्ममाहात्म्यवर्णनम्

तथा—

आप्लावयति नाम्भोधिराश्वासयति चाम्बुदः ।
यन्महीं स प्रभावोऽयं ध्रुवं धर्मस्य केवलः ॥ ९६ ॥

स्पष्टः । अत्रानर्थपरिहारोऽर्थप्राप्तिश्च फलम् ॥ ९६ ॥

इदानीं साधारणस्य धर्मस्य साधारणं फलमाह—

न ज्वलत्यनलस्तिर्यग् यदूर्ध्वं वाति नानिलः ।
अचिन्त्यमहिमा तत्र धर्म एव निबन्धनम् ॥ ९७ ॥

स्पष्टः । मिथ्यादृशोऽप्याहुः–"अग्नेरूर्ध्वज्वलनं, वायोस्तिर्यक् पवनमदृष्टकारितम्" [वैशे० ५।२।१४] इति ॥ ९७ ॥

तथा—

निरालम्बा निराधारा विश्वाधारो वसुन्धरा ।
यच्चावतिष्ठते तत्र धर्मादन्यद् न कारणम् ॥ ९८ ॥

---

१ "अग्नेरूर्ध्वज्वलनं वायोश्च तिर्यक् पवनमणु-मनसोश्चाद्यं कर्मेत्यदृष्टकारितानि" इति वैशेषिकदर्शने सूत्रपाठः ॥

निरालम्बा आलम्बनस्य रज्ज्वादेरभावात्, निराधारा आधारस्य शेष-कूर्म-वराह-दिक्कुञ्जरादेः प्रमाणानुपपन्नत्वेना-
९०१ ॥ भावात्, विश्वस्य चराचरभेदस्य जगत आधारः, वसुन्धरा पृथ्वी यदवतिष्ठते, नाधः पतति, तत्र धर्मान्यद् न कारणम्, अन्वय-व्यतिरेकाभ्यामन्यस्य कस्यचिदवस्थानहेतोरभावात् ॥ ९८ ॥

तथा—

सूर्याचन्द्रमसावेतौ विश्वोपकृतिहेतवे ।
उदयेते जगत्यस्मिन् नूनं धर्मस्य शासनात् ॥ ९९ ॥

स्पष्टः ॥ ९९ ॥ तथा—

अबन्धूनामसौ बन्धुरसखीनामसौ सखा ।
अनाथानामसौ नाथो धर्मो विश्वैकवत्सलः ॥ १०० ॥

अबन्धूनां बन्धुरहितानामसौ धर्मो बन्धुः, बन्धुकार्यस्य विपदुत्तारणादेः करणात्। असखीनां मित्ररहितानामसौ सखा, प्रीत्युत्पादकत्वात्। अनाथानामस्वामिकानामसौ नाथः, योगक्षेमकारित्वात्, यदाह—"योगक्षेमकृद् नाथः" [ ललितविस्तरा ] इति। अत्र हेतुः–विश्वैकवत्सलः। वत्सं लाति स्नेहेनादत्ते वत्सला गौः, तद्वत् सकलजगत्प्रीतिहेतुत्वाद् ॥ ९०१ ॥
धर्मोऽपि वत्सलः ॥ १०० ॥

धर्मस्वाख्याततभावनायां धर्ममाहात्म्यवर्णनम्

इदानीमनर्थनिवृत्तेः प्राकृतैरप्याकाङ्क्षयमाणत्वाद् धर्मफलत्वमाह—

रक्षो-यक्षोरग-व्याघ्र-व्याला-ऽनल-गरादयः ।
नापकर्तुमलं तेषां यैर्धर्मः शरणं श्रितः ॥ १०१ ॥

स्पष्टः ॥ १०१ ॥

इदानीं प्रधानभूतामनर्थनिवृत्तिमर्थप्राप्तिं च धर्मस्य फलमाह—

धर्मो नरकपातालपातादवति देहिनः ।
धर्मो निरुपमं यच्छत्यपि सर्वज्ञवैभवम् ॥ १०२ ॥

नरकपातरक्षणलक्षणा अनर्थनिवृत्तिः सर्वज्ञवैभवप्राप्तिश्चार्थप्राप्तिः प्रधानभूता धर्मस्य फलम्, शेषं त्वानुषङ्गिकमुक्तमिति ।

अत्रान्तरश्लोकाः—

अयं दशविधो धर्मो मिथ्यादृग्भिर्न वीक्षितः । योऽपि कश्चित् क्वचित् प्रोचे सोऽपि वाङ्मात्रनर्तनम्[1] ॥ १ ॥

तत्त्वार्थो वाचि सर्वेषां केषाञ्चन मनस्यपि । क्रियायामपि[2] नर्नर्ति नित्यं जिनमतस्पृशाम् ॥ २ ॥

---

१ ०मात्रवर्तनम्–खं.। ०मात्रदर्शनम्–संपू.। ०मात्रवर्णनम्–मु.॥ २ क्रिययापि नरीनर्त्ति–खं. संपू. मु.॥

वेदशास्त्रपराधीनबुद्धयः सूत्रकण्ठकाः । न लेशमपि जानन्ति धर्मरत्नस्य तत्त्वतः ॥ ३ ॥
गोमेध-नरमेधा-ऽश्वमेधाद्यध्वरकारिणाम् । याज्ञिकानां कुतो धर्मः प्राणिघातविधायिनाम् ? ॥ ४ ॥
अश्रद्धेयमसद्भूतं परस्परविरोधि च । वस्तु प्रलपतां धर्मः कः पुराणविधायिनाम् ? ॥ ५ ॥
असद्भूतव्यवस्थाभिः पराद् द्रव्यं जिघृक्षताम् । मृत्पानीयादिभिः शौचं स्मार्तादीनां कुतो ननु ? ॥ ६ ॥
ऋतुकाले व्यतिक्रान्ते भ्रूणहत्याविधायिनाम् । ब्राह्मणानां कुतो ब्रह्म ब्रह्मचर्यापलापिनाम् ॥ ७ ॥
अदित्सतोऽपि सर्वस्वं यजमानाज्जिघृक्षताम् । अर्थार्थे त्यजतां प्राणान् काऽऽकिञ्चन्यं द्विजन्मनाम् ? ॥ ८ ॥
दिवसे च रजन्यां च मुखमापृच्छ्य खादताम्[1] । भक्ष्याभक्ष्याविवेकानां सौगतानां कुतस्तपः ? ॥ ९ ॥
मृद्वी शय्या प्रातः पेया मध्ये भक्तं सायं पानम् । द्राक्षाखण्डं रात्रेर्मध्ये शाक्योपज्ञः साधुधर्मः[2] ॥ १० ॥
स्वल्पेष्वप्यपराधेषु क्षणात् शापं प्रयच्छताम् । लौकिकानामृषीणां न क्षमालेशोऽपि दृश्यते ॥ ११ ॥
जात्यादिमदुर्वृत्तपरिनर्तितचेतसाम् । क्व मार्दवं द्विजातीनां चतुराश्रमवर्तिनाम् ॥ १२ ॥
दम्भसंरम्भगर्भाणां[3] बकवृत्तिजुषां बहिः । भवेदार्जवलेशोऽपि पाषण्डव्रतिनां[4] कथम् ? ॥ १३ ॥
गृहिणी-गृह-पुत्रादिपरिग्रहवतां सदा । द्विजन्मनां कथं मुक्तिर्लोभैककुलवेश्मनाम् ? ॥ १४ ॥
अरक्तद्विष्टमूढानां केवलज्ञानशालिनाम् । ततो भगवतामेषा धर्मस्वाख्यातताऽर्हताम् ॥ १५ ॥
रागाद् द्वेषात् तथा मोहाद् भवेद् वितथवादिता[5] । तदभावे कथं नामाऽर्हतां वितथवादिता ? ॥ १६ ॥

१ भक्षताम्-मु.॥ २ साधुर्धर्मः-हे. मु.॥ ३ ०गर्त्तानां-खं.॥ ४ पाषण्डि०-शां.॥ ५ वितथा वादिता-शां. खं.॥

ये तु रागादिभिर्दोषैः कलुषीकृतचेतसः । न तेषां सूनृताः वाचः प्रसरन्ति कदाचन ॥ १७ ॥
तथाहि याग-होमादिकर्माणीष्टानि कुर्वताम् । वापी-कूप-तडागादीन्यपि पूर्तान्यनेकशः ॥ १८ ॥
पशूपघाततः स्वर्गिलोकसौख्यं विमार्गताम् । द्विजेभ्यो भोजनैर्दत्तैः पितृतृप्तिं चिकीर्षताम् ॥ १९ ॥
घृतयोन्यादिकरणैः प्रायश्चित्तविधायिनाम् । पञ्चस्वापत्सु नारीणां पुनरुद्वाहकारिणाम् ॥ २० ॥
अपत्यासम्भवे स्त्रीषु क्षेत्रजापत्यवादिनाम् । सदोषाणामपि स्त्रीणां रजसा शुद्धिवादिनाम् ॥ २१ ॥
श्रेयोबुद्ध्याऽध्वरहतच्छागशिश्नोपजीविनाम् । सौत्रामण्यां सप्ततन्तौ सीधुपानविधायिनाम् ॥ २२ ॥
गूथाशिनीनां च गवां स्पर्शतः पूतमानिनाम् । जलादिस्नानमात्रेण पापशुद्ध्यभिधायिनाम् ॥ २३ ॥
वटाश्वत्थामलक्यादि[2]द्रुमपूजाविधायिनाम् । वह्नौ हुतेन हव्येन देवप्रीणनमानिनाम् ॥ २४ ॥
भुवि गोदोहकरणाद् रिष्टशान्तिकमानिनाम् । योषिद्विडम्बनाप्रायव्रतधर्मोपदेशिनाम् ॥ २५ ॥

तथा—

जटापटल-भस्मा-ऽङ्गराग-कौपीनधारिणाम् । अर्क-धत्तूर-माल्रैर्देवपूजाविधायिनाम् ॥ २६ ॥
कुर्वतां गीत-नृत्तादि पुतौ वादयतां मुहुः । मुहुर्वदननादेनातोद्यनादविधायिनाम् ॥ २७ ॥
असत्यभाषापूर्व्वं च मुनीन् देवान् जनान् नताम् । विधाय व्रतभङ्गं च दासीदासत्वमिच्छताम् ॥ २८ ॥
गृह्णतां मुञ्चतां भूयो भूयः पाशुपत[3]व्रतम् । भेषजादिप्रयोगेण यूकालिक्षं प्रणिघ्नताम् ॥ २९ ॥

---

१ स्वगलोक०-मु. हेमू. ॥ २ ०मलकादि०-शां. ॥ ३ ०पतं व्रतम्-मु. ॥

नरास्थिभूषणभृतां शूल-खट्वाङ्गवाहिनाम् । कपालभाजनभुजां घण्टा-नूपुरधारिणाम् ॥ ३० ॥
मद्य-मांसा-ऽङ्गनाभोगप्रसक्तानां निरन्तरम् । पुतानुबद्धघण्टानां गायतां नृत्यतां मुहुः ॥ ३१ ॥
तथा—
अनन्तकायकन्दादि-फल-मूल-दलाशिनाम् । कलत्र-पुत्रयुक्तानां वनवासजुषामपि ॥ ३२ ॥
तथा—
भक्ष्या-ऽभक्ष्ये पेया-ऽपेये गम्या-ऽगम्ये समात्मनाम् । योगिनाम्ना प्रसिद्धानां कौलाचार्यान्तवासिनाम् ॥ ३३ ॥
अन्येषामपि जैनेन्द्रशासनास्पृष्टचेतसाम् । क्व धर्मः क्व फलं तस्य तस्य स्वाख्यातता कथम् ? ॥ ३४ ॥
जैनेन्द्रस्यापि धर्मस्य यदत्रामुत्र वा फलम् । आनुषङ्गिकमेवेदं मुख्यं मोक्षं प्रचक्षते ॥ ३५ ॥
सस्यहेतौ कृषौ यद्वत् पलालाद्यानुषङ्गिकम् । अपवर्गफले धर्मे तद्वत् सांसारिकं फलम् ॥ ३६ ॥

स्वाख्याततामिति जिनाधिपतिप्रणीतधर्माश्रितामसकृदेव विभावयन्तः ।
मुक्ता ममत्वविषवेगविकारदोषैः, साम्यं प्रकर्षपदवीं परमां नयन्ति ॥ ३७ ॥

धर्मस्वाख्याततताभावना १० ॥ १०२ ॥

अथ लोकभावनामाह—

**कटिस्थकरवैशाखस्थानकस्थनराकृतिम् ।**
**द्रव्यैः पूर्णं स्मरेल्लोकं स्थित्युत्पत्तिव्ययात्मकैः ॥ १०३ ॥**

कटिः श्रोणिः, तत्र तिष्ठत इति कटिस्थौ करौ यस्यासौ कटिस्थकरः, वैशाखं प्रसारितपादं तच्च तत् स्थानकं च तत्र तिष्ठति तत्स्थः, स चासौ नरश्च, तद्वदाकृतिर्यस्य तं लोकमाकाशक्षेत्रं चतुर्दशरज्जुप्रमाणं स्मरेदनुप्रेक्षेत। किंविशिष्टम्? द्रव्यैर्धर्मा-ऽधर्म-काल-जीव-पुद्गलैः पूर्णम्, किंविशिष्टैर्द्रव्यैः? स्थित्युत्पत्तिव्ययात्मकैः, स्थितिर्ध्रौव्यम्, उत्पत्तिरुत्पादः, व्ययो विनाशः, ते आत्मानः स्वरूपं येषां तानि तथा। सर्वमपि हि वस्तु स्थित्युत्पादव्ययात्मकम्, यदाह—

"उत्पाद-व्यय-ध्रौव्ययुक्तं सत्" [तत्त्वार्थ० ५।२९]।

लोक-भावना-वर्णनम्

आकाशादयोऽपि हि नित्यत्वेन प्रसिद्धाः प्रतिक्षणं तेन तेन पर्यायेणोत्पद्यन्ते विपद्यन्ते च। प्रदीपादयोऽप्युत्पाद-विनाशयोगिनोऽवतिष्ठन्ते, न पुनरैकान्तिकस्थितियोगि उत्पाद-विनाशयोगि वा किञ्चिदस्ति, यदवोचाम—

"आदीपमाव्योम समस्वभावं स्याद्वादमुद्रानतिभेदि वस्तु।
तन्नित्यमेवैकमनित्यमन्यदिति त्वदाज्ञाद्विषतां प्रलापाः ॥ १ ॥" [अन्ययोगव्यवच्छेदद्वात्रिंशिका ५]

इति ॥ १०३ ॥

लोकस्वरूपमेवाह—

लोको जगत्त्रयाकीर्णो भुवः सप्तात्र वेष्टिताः।
घनाम्भोधि-महावात-तनुवातैर्महाबलैः ॥ १०४ ॥

॥ ९०७ ॥ लोक उक्तस्वरूपो जगतां लोकदेशानां त्रयेणाऽधस्तिर्यगूर्ध्वरूपेणाऽऽकीर्णो व्याप्तः, वदन्ति हि 'अधोलोकः, तिर्यग्लोकः, ऊर्ध्वलोकः' इति। अत्र[1] लोके सप्तसंख्या भुवः पृथिव्यो रत्नप्रभा-शर्कराप्रभा-वालुकाप्रभा-पङ्कप्रभा-धूमप्रभा-तमःप्रभा-महातमः-प्रभा यथार्थाभिधानाः, अनादिकालप्रसिद्धाऽनन्वर्थसंज्ञाश्च तद्यथा-घर्मा, वंशा, शैला, अञ्जना, रिष्टा[2], माघव्या, माघवी च। ताश्च प्रत्येकं रत्नप्रभाद्या[3] अधोऽधः पृथुतराः। तासु त्रिंशत्, पञ्चविंशतिः, पञ्चदश, दश, त्रीणि, एकं पञ्चोनं नरकावासशत-सहस्रम्, पञ्चैव नारकावासा[4] यथाक्रमम्। ताश्च वेष्टिताः परिवृता अधः पार्श्वतश्च। कैः? घनो निबिडो न तु द्रवो योऽसावम्भोधिः, महांश्चासौ वातश्च महावातो घनवातः, तनुश्चासौ वातश्च तनुवातः, तैः। किंविशिष्टैः? महाबलैः पृथ्वी-धारणसमर्थैः। तत्र सर्वासां पृथिवीनामधो घनोदधयः मध्योत्सेधे विंशतियोजनसहस्राणि, महावाताः उत्सेधे घनोदधितोऽ-संख्यानि योजनसहस्राणि, तनुवाताश्च महावातेभ्योऽसंख्यानि योजनसहस्राणि, ततोऽप्यसंख्येयानि योजनसहस्राण्याकाशम्, एतच्च मध्ये उत्सेधमानम्। ततः परं क्रमेण हीयमानं प्रान्ते वलयतुल्यमानमिति। घनोदधिवलयविष्कम्भमानं रत्नप्रभायाः षड् योजनानि, घनवातवलयविष्कम्भमानमर्धपञ्चमयोजनानि, तनुवातवलयविष्कम्भमानं सार्धं योजनम्। रत्नप्रभावलयमाना-

---

१ तत्र-मु.॥ २ रिष्टा मघा माघवती च-हे.॥ अरिष्टा माघव्या माघवी च-मु.। अत्रेदं ध्येयम्-मु. मध्ये तत्त्वार्थ-भाष्ये च 'माघव्या माघवी' इति नामोल्लेखो दृश्यते तथापि अस्मत्समीपवर्तिषु प्राचीनतालपत्रात्मकेषु चतुर्षु हस्तलिखितादर्शेषु 'माघव्या माधवी' इति पाठदर्शनात् स पाठोऽस्माभिरत्र मूले स्थापितः॥ ३ ०प्रभाद्या-शां. विना॥ ४ नरका०-मु.॥ ॥ ९०७ ॥

दुपरि योजनत्रिभागो घनोदधौ, घनवाते गव्यूतम्, तनुवाते च गव्यूतत्रिभागो वर्तते। एतच्छर्कराप्रभायां वलयमानम्। एवं शर्कराप्रभावलयमानादुपर्ययमेव प्रक्षेपः। एवं पूर्वपूर्ववलयमानादुपर्ययमेव प्रक्षेपः सप्तमपृथ्वीं यावत्, यदाह—

"[2]तिभागो गाउयं चेव तिभागो गाउयस्स य।
आइधुवे पक्खेवो अहो अहो जाव सत्तमिआ ॥ १ ॥" [ बृहत्संग्रहणी गा० २४५ ]

प्रक्षेपे सति वलयविष्कम्भमानमाभ्यो गाथाभ्योऽवसेयम्, तद्यथा—

"[3]छस्सतिभाग पउणा य पंच वलयाण जोअणपमाणं।
एगं बारसभागा सत्त कमा बीयपुढवीए ॥ १ ॥
जोअण सत्त तिभागोण पंच एगं च वलयपरिमाणं।
बारस भागा अट्ठ उ तइयाइ जहक्कमं नेयं ॥ २ ॥

१ पृथिवीं-मु. ॥
२ त्रिभागो गव्यूतं चैव त्रिभागो गव्यूतस्य च। आदिध्रुवे प्रक्षेपः अधोऽधो यावत् सप्तमी ॥
३ षट् सत्रिभागाः पादोनाः पञ्च वलयानां योजनप्रमाणम्। एकं द्वादशभागाः सप्त क्रमेण द्वितीयपृथिव्याम् ॥ योजनानि सप्त त्रिभागोनानि पञ्चैकं च वलयपरिमाणम्। द्वादशभागा अष्ट तु तृतीयायां यथाक्रमं ज्ञेयम् ॥
४ भागा पउणा पंच-संपू.। ०भागा पउणा यं पंच-खं. ॥

सत्त सवाया पंच उ पउणा दो जोअणा चउत्थीए ।
घणउअहिमाइयाणं वलयाणं माणमेयं तु ॥ ३ ॥
सतिभाग सत्त तह अद्धछट्ठ[2] वलयाण माणमेयं तु ।
जोअणमेगं बारसभागा दस पंचमाइ[3] तहा ॥ ४ ॥
अट्ठ तिभागोणाइं पउणाइं छच्च वलयमाणं तु ।
छट्ठीए जोअणं तह बारसभागा य एक्कारा ॥ ५ ॥
अट्ठ य छ च्चिय दु च्चिय घणोअहीमाइयाण माणं तु ।
सत्तममहीए नेयं जहासंखेण तिण्हं पि ॥ ६ ॥" [ बृहत्संग्रहणी गा० २४६–२५१ ]

एतानि च वलयानि पृथिव्याधारभूतघनोदध्यादिभ्यः पृथिवीपर्यन्तपरिधिमान्तेषु वलयाकारतया एतावद्विष्कम्भाणि पृथिव्युत्सेधसमोत्सेधानि च ॥ १०४ ॥

१ सप्त सपादाः पञ्च तु पादोने द्वे योजने चतुर्थ्याम्। घनोदध्यादिकानां वलयानां मानमेतत्तु ॥
सत्रिभागाः सप्त तथा अर्धषष्ठानि वलयानां मानमेतत्तु। योजनमेकं द्वादशभागाः दश पञ्चम्यां तथा ॥
अष्ट त्रिभागोनानि पादोनानि षद् च वलयमानं तु। षष्ठ्यां योजनं तथा द्वादशभागाश्च एकादश ॥
अष्ट च षडेव द्वावेव घनोदध्यादिकानां मानं तु। सप्तमपृथिव्यां ज्ञेयं यथासङ्ख्येन त्रयाणामपि ॥
२ यद्धं छट्ठ–शां. ॥ ३ पंचमीए–मु. ॥

लोक-भावनायां लोकस्वरूप-वर्णनम्

पुनर्लोकस्वरूपमाह—

वेत्रासनसमोऽधस्तान्मध्यतो झल्लरीनिभः।
अग्रे मुरजसङ्काशो लोकः स्यादेवमाकृतिः ॥ १०५ ॥

अधस्तादधोभागे वेत्रासनमधस्ताद् विस्तीर्णमुपर्युपरिसङ्कोचवत् तत्समस्तदाकारः, मध्यतो मध्ये झल्लरी वाद्यविशेषस्तत्सदृशः, अग्रे मध्यलोकादुपरि मुरज ऊर्ध्वमधश्च संकुचितो मध्यभागे विस्तृतो वाद्यविशेषस्तत्सदृशः। एवमधोमध्योर्ध्वेषु आकारत्रययोगी लोकः। यदाहुः—

" तत्राधोमुखमल्लकसंस्थानं वर्णयन्त्यधोलोकम्।
स्थालमिव च तिर्यग्लोकमूर्ध्वमथ मल्लकसमुद्गम् ॥ १ ॥" [ प्रशमरतौ २११ ]

इह चाधस्तिर्यगूर्ध्वलोका रुचकापेक्षया। रुचकश्च मेरुमध्ये गोस्तनाकारचतुराकाशप्रदेशप्रमाणोऽधः, तादृश एवोर्ध्वम्, एवमष्टप्रदेशः, यदाहुः—

" अट्ठपएसो[1] रुअगो तिरियंलोगस्स[2] मज्झयारम्मि।
एस पहवो दिसाणं एसेव भवे अणुदिसाणं ॥ १ ॥" [ आचाराङ्गनिर्युक्तौ गा० ४२ ]

---

१ अष्टप्रदेशो रुचकस्तिर्यग्लोकस्य मध्ये। एष प्रभवो दिशाम् एष एव भवेदनुदिशाम्॥ २ तिरियलो०-मु०॥

तत्र रुचकादध उपरि च नव नव योजनशतानि तिर्यग्लोक इत्युत्सेधेऽष्टादशयोजनशतप्रमाणः, तिर्यग्लोकादधो नवयोजनशतोनसप्तरज्जुप्रमाणोऽधोलोकः। तत्र सप्त पृथिव्य उक्तरूपाः। तत्र रत्नप्रभायां पृथिव्यामशीतिसहस्राधिकयोजनलक्षबाहल्यायामुपर्यधश्च योजनसहस्रं मुक्त्वा मध्येऽष्टसप्ततिसहस्राधिके योजनलक्षे भवनपतीनां भवनानि। ते चासुर-नाग-विद्युत्-सुपर्णा-ऽग्नि-वात-स्तनितोदधि-द्वीप-दिक्कुमाराः। ते च चूडामणि-फणि-वज्र-गरुड-घटा-ऽश्व-वर्धमान-मकर-सिंह-हस्ति-चिह्नाः। तत्र भवनपतयो दक्षिणोत्तरदिग्व्यवस्थिताः। तत्रासुरकुमाराणां द्वाविन्द्रौ चमरो बलिश्च। नागकुमाराणां धरणो भूतानन्दश्च। विद्युत्कुमाराणां हरिर्हरिसहश्च। सुपर्णकुमाराणां वेणुदेवो वेणुदारी[1] च। अग्निकुमाराणामग्निशिखोऽग्निमाणवश्च। वातकुमाराणां वेलम्बः प्रभञ्जनश्च। स्तनितकुमाराणां सुघोषो महाघोषश्च। उदधिकुमाराणां जलकान्तो जलप्रभश्च। द्वीपकुमाराणां पूर्णो वशिष्ठश्च। दिक्कुमाराणाममितो मितवाहनश्च। अस्यामेव रत्नप्रभायामुपरितनयोजनसहस्रस्याध उपरि च योजनशत मुक्त्वा मध्येऽष्टासु योजनशतेष्वष्टविधानां पिशाच-भूत-यक्ष-राक्षस-किन्नर-किम्पुरुष-महोरग-गन्धर्वाणां कदम्बवृक्ष--सुलसवृक्ष-वटवृक्ष-खट्वाङ्ग-ऽशोकवृक्ष-चम्पकवृक्ष-नागवृक्ष-तुंम्बरुवृक्षचिह्नानां[2] तिर्यग्लोकवासिनां व्यन्तराणां नगराणि। तेष्वपि दक्षिणोत्तरदिग्व्यवस्थितेषु द्वौ द्वाविन्द्रौ। तत्र पिशाचानामिन्द्रौ कालो महाकालश्च। भूतानां सुरूपः प्रतिरूपश्च। यक्षाणां पूर्णभद्रो माणिभद्रश्च। राक्षसानां भीमो महाभीमश्च। किन्नराणां किन्नरः किम्पुरुषश्च। किम्पुरुषाणां सत्पुरुषो महापुरुषश्च। महोरगाणामतिकायो महाकायश्च। गन्धर्वाणां गीतरतिर्गीतयशाश्च[3]।

---

१ ०दाली च-खं.। ०दालिश्च-मु.। “वेणुदारी च” इति तत्त्वार्थभाष्ये ४।६॥ २ तुम्बुरवृक्ष०-शां. संपू. हे.॥
३ ०र्गीतरसाश्च-संपू.॥

लोक-भावनायां लोकस्वरूपवर्णनम्

रत्नप्रभायामेव प्रथमस्य शतस्याध उपरि च दश दश योजनानि मुक्त्वा मध्येऽशीतौ[1] योजनेषु अणपन्निअ[2]-पणपन्निअ[3]-प्रभृतयस्तथैव दक्षिणोत्तरव्यवस्थिता अष्टौ व्यन्तरनिकायाः तथैव द्वौ द्वाविन्द्रौ।

तथा रत्नप्रभायाः पृथिव्याः समतलादुपरि सप्तसु नवत्यधिकेषु ज्योतिषामधस्तलप्रदेशः, तदुपरि दशयोजनेषु सूर्यः, तदुपर्यशीतियोजनेषु चन्द्रः, तदुपरि विंशतियोजनेषु तारा ग्रहाश्च। एवमयं ज्योतिर्लोको दशोत्तरं योजनशतं बाहल्येन। एकादशभिर्योजनशतैरेकविंशत्युत्तरैर्जम्बूद्वीपकमेरुमस्पृशन् सर्वासु दिक्षु मण्डलिकया व्यवस्थितं ज्योतिश्चक्रं ध्रुववर्जं भ्राम्यति, लोकान्तं च एकादशभिर्योजनशतैरेकादशोत्तरैरस्पृशद् मण्डलिकया तिष्ठति, यदाह—

" एक्कारसेकवीसा[4] सयमेक्काराहिआ य एक्कारा।
मेरु-अलोगाबाहं जोइसचक्कं चरइ ठाइ ॥ १ ॥" [ बृहत्संग्रहणी गा० १०५ ]

अत्र सर्वोपरि किल स्वातिनक्षत्रम्, सर्वेषामधो भरणिनक्षत्रम्, सर्वदक्षिणो मूलः, सर्वोत्तरश्चाभीचिः।

तत्र जम्बूद्वीपे द्वौ चन्द्रौ द्वौ च सूर्यौ। लवणसमुद्रे चत्वारश्चन्द्राः सूर्याश्च। धातकीखण्डे द्वादश चन्द्राः सूर्याश्च।

---

१ ०शीतियोज०–खं.॥ २, ३ ०पन्तिअ०–संपू. खं.॥

४ एक्कारमेक–खं. संपू.। एक्कारमिक्कवीसा य समेक्कारा०–शां.। "इह यथासङ्ख्येन पदानां योजना, सा चैवम्—एकादश योजनशतानि एकविंशत्यधिकानि मेरोरबाधामपान्तरालरूपां कृत्वा मनुष्यलोकवर्ति चरं ज्योतिश्चक्रं चरति। तथा एकादश योजनशतानि एकादशाधिकानि अलोकाकाशस्याबाधामपान्तरालरूपां कृत्वा एतावद्भिर्योजनशतैरलोकाकाशादर्वाक् स्थित्वेत्यर्थः स्थिरं ज्योतिश्चक्रं तिष्ठति" इति मलयगिरिसूरिविरचितायां बृहत्संग्रहणीवृत्तौ ॥

कालोदे द्विचत्वारिंशच्चन्द्राः सूर्याश्च। पुष्करार्धे[1] द्विसप्ततिश्चन्द्राः[2] सूर्याश्च। इत्येवं मनुष्यलोके द्वात्रिंशं चन्द्रशतं सूर्यशतं च भवति ।

अष्टाशीतिर्ग्रहाः, अष्टाविंशतिर्नक्षत्राणि,[3] षट्षष्टिसहस्राणि[4] नव शतानि पञ्चसप्तत्यधिकानि[5] तारकाकोटीकोटीनामेकैकस्य[6] चन्द्रमसः परिग्रहः। तत्र एकषष्टिभागीकृतस्य योजनस्य षट्पञ्चाशद्भागा आयामविष्कम्भाभ्यां चन्द्रविमानम्, अष्टचत्वारिंशत् सूर्यविमानम्, ग्रहाणामर्धयोजनम्, नक्षत्राणां गव्यूतम्, आयुषा सर्वोत्कृष्टायास्ताराया अर्धक्रोशः, सर्वजघन्यायाः पञ्च धनुःशतानि, बाहल्यं तु सर्वेषामायामार्धेन। एते च पञ्चचत्वारिंशल्लक्षयोजनप्रमिते मनुष्यक्षेत्रे भवन्ति ।

चन्द्रादिविमानवाहनानि च पुरतः सिंहाः, दक्षिणतो गजाः, अपरतो वृषभाः, उत्तरतोऽश्वाः। ते चाभियोगिका देवाश्चन्द्र-सूर्ययोः षोडश सहस्राणि, ग्रहाणामष्टौ, नक्षत्राणां चत्वारि, तारकाणां द्वे, स्वरसप्रवृत्तगतीनामपि चन्द्रादीनामाभियोग्यकर्मवशात्तत्रोपतिष्ठन्ते ।

मानुषोत्तरात् परतः पञ्चाशता[7] योजनसहस्रैः परस्परमन्तरिताः सूर्यान्तरिताश्चन्द्राः चन्द्रान्तरिताः सूर्याः मनुष्यक्षेत्रीयचन्द्र-सूर्यप्रमाणादर्धप्रमाणा यथोत्तरं क्षेत्रपरिधिवृद्ध्या संख्यया वर्धमानाः शुभलेश्या ग्रह-नक्षत्र-तारापरिवारा घण्टाकारा असंख्येया आ स्वयंभूरमणाल्लक्षयोजनान्तरिताभिः पङ्क्तिभिस्तिष्ठन्ति ।

---

१ पुष्करवरार्धे–मु.॥ २ द्वासप्तति०–मु. खं.॥ ३ ०तिन०–खं.॥ ४ ०षष्टिः सह०–मु०॥ ५ ०सप्ततानि–संपू. खं.॥ ०सप्ताधिकानि–हे.॥ ६ ०काकोटीनामे०–खं.॥ ७ पञ्चाशत्योजन०–शां.॥

॥ ९१३ ॥

लोक-भावनायां लोकस्वरूप-वर्णनम्

मध्यलोके तु जम्बूद्वीप-लवणादयः शुभनामानो द्वीप-समुद्रा असङ्ख्याता द्विगुणद्विगुणविस्ताराः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः। अन्त्यः स्वयंभूरमणः समुद्रः ॥

जम्बूद्वीपमध्ये मेरुः काञ्चनस्थालमिव वृत्तो योजनसहस्रमधो धरणितलमवगाढः, नवनवतियोजनसहस्रोच्छ्रितः, दश योजनसहस्राणि सातिरेकनवत्यधिकानि कन्दे विस्तृतः, धरणितले दश योजनसहस्राणि विस्तृतः, उपरि योजनसहस्रविस्तृतः, त्रिकाण्डः, त्रिलोकप्रविभक्तमूर्तिः, चतुर्भिर्वनैर्भद्रशाल-नन्दन-सौमनस-पाण्डकैः परिवृतः। तत्र शुद्धपृथिव्युपल-वज्र-शर्कराबहुलं योजनसहस्रमेकं प्रथमं काण्डम्, द्वितीयं [2]त्रिषष्टियोजनसहस्राणि रजत-जातरूपा-ऽङ्क-स्फटिकबहुलम्, तृतीयं षट्त्रिंशद्योजनसहस्राणि जाम्बूनदबहुलम्, वैडूर्यबहुलाऽस्य चूलिका चत्वारिंशद्योजनानि उच्छ्रायेण, मूले द्वादश विष्कम्भेण, मध्येऽष्टौ, उपरि चत्वारीति। [3]मेरोर्मूले भूमौ वलयाकृति भद्रशालवनं। भद्रशालवनात् पञ्चभ्यो योजनशतेभ्य ऊर्ध्वं पञ्चयोजनशतविस्तारं मेखलायां वलयाकृति नन्दनवनम्, ततः सार्धद्विषष्टियोजनसहस्रेभ्य ऊर्ध्वं द्वितीयमेखलायां पञ्चयोजनशतविस्तारं वलयाकृति सौमनसं वनम्, ततोऽपि षट्त्रिंशद्योजनसहस्रेभ्य ऊर्ध्वं तृतीयमेखलायां चतुर्नवत्यधिकचतुर्योजनशतविस्तारं वलयाकृति मेरोः शिरसि पाण्डकवनम्।

तत्र जम्बूद्वीपे सप्त वर्षाणि। [1]तत्र दक्षिणतो भरतक्षेत्रम्, तदुत्तरतो हैमवतम्, ततोऽपि हरिवर्षम्, ततोऽपि विदेहाः, ततोऽपि रम्यकक्षेत्रम्, ततोऽपि हैरण्यवतम्, ततोऽप्यैरावतमिति। क्षेत्रविभागकारिणस्तु हिमवन्महाहिमवन्निषधनीलरुक्मि-

१ सहस्रं-मु ॥. २ त्रिपष्टियोज०-मु० ॥ ३ मेरोर्मूलभूमौ-मु. ॥

शिखरिणो वर्षधरपर्वताः, ते च यथाक्रमं हेमा-[1]ऽर्जुन-तपनीय-वैडूर्य-रजत-तपनीयमया मणिविचित्रपार्श्वा मूलोपरि तुल्यविस्ताराः। तत्र पञ्चविंशतियोजनान्यवगाढो योजनशतोच्छ्रायो हिमवान्, तद्द्विगुणो महाहिमवान्, ततोऽपि द्विगुणो निषधः, तत्समो नीलः, महाहिमवत्समो रुक्मी, हिमवत्समः शिखरी। तदुपरि पद्म-महापद्म-[2]तिगिंच्छि-केसरि-महापुण्डरीक-पुण्डरीका ह्रदाः। योजनसहस्रायामस्तदर्धविस्तीर्णः प्रथमः, तद्द्विगुणद्विगुणायामविस्तारौ परौ, उत्तरे पुण्डरीकादयो दक्षिणतुल्याः। सर्वेष्वपि च

---

१ हेमार्जुनरजतवैडूर्यरजततपनीयमया–खं. संपू.। "हेमार्जुनतपनीयवैडूर्यरजतहेममयाः ३।१२। त एते हिमवदादयः पर्वता हेमादिमया वेदितव्याः। मयट् प्रत्येकं परिसमाप्यते। यथाक्रमं हिमवदादयः सम्बध्यन्ते। हेममयो हिमवान् चीनपट्टवर्णः। अर्जुनमयो महाहिमवान् शुक्लः। तपनीयमयो निषधः तरुणादित्यवर्णः। वैडूर्यमयो नीलः मयूरग्रीवाभः। रजतमयो रुक्मी शुक्लः। हेममयः शिखरी चीनपट्टवर्ण इति।" इति दिगम्बराचार्येण अकलङ्कदेवेन विरचिते तत्त्वार्थराजवार्तिके। ३। १२॥

"जोयणसयमुव्विद्धा कणगमया सिहरिचुल्लहिमवंता। रुप्पिमहाहिमवंता दुसउच्चा रुप्पकणगमया ॥ १३० ॥ चत्तारि जोअणसए उव्विद्धा निसहनीलवंता वि। निसहो तवणिज्जमओ वेरुलिओ नीलवंतगिरी ॥ १३१ ॥" इति जिनभद्रगणिक्षमाश्रमणविरचिते बृहत्क्षेत्रसमासे। "कनकमयौ पीतसुवर्णमयौ शिखरि-क्षुल्लहिमवन्तौ ⋯ ⋯ रुक्मिमहाहिमवन्तौ ⋯ ⋯ रुक्मकनकमयौ। रुक्मं श्वेतं कनकम्, पीतं सुवर्णम्, तन्मयौ। किमुक्तं भवति? श्वेतसुवर्णमयो रुक्मी, पीतसुवर्णमयो महाहिमवान्। केचित् पुन रुक्मिपर्वतं रुक्ममयमिच्छन्ति, अपरे महाहिमवन्तं सर्वरत्नमयम्। ⋯⋯ निषधस्तपनीयमयः आरक्तच्छायसुवर्णमय.। नीलवन्नामा च गिरिर्वैडूर्यरत्नमयः" —इति मलयगिरिसूरिविरचितायां बृहत्क्षेत्रसमासवृत्तौ ॥

२ तिंगिच्छि०–शां. संपू.। तिगिच्छि०–मु. ॥

पद्मानि दशयोजनावगाहानि। तन्निवासिन्यः क्रमेण श्री-ह्री-धृति-कीर्ति-बुद्धि-लक्ष्म्यः पल्योपमस्थितयः सामानिक-पारिपद्या-ऽऽत्मरक्षा-ऽनीकपरिवृताः।[1]

तत्र भरते गङ्गासिन्धू महानद्यौ, हैमवते[2] रोहिता-रोहितांशे, हरिवर्षे हरिद्धरिकान्ते, महाविदेहे शीता-शीतोदे, रम्यके नर-नारीकान्ते, हैरण्यवते सुवर्णकूला-रूप्यकूले। ऐरावते रक्ता-रक्तोदे। प्रथमाः पूर्वगाः, द्वितीयाः पश्चिमगाः। तत्र चतुर्दश-

---

१ ०त्मरक्षपरिवृताः-खं. संपू.॥ २ अत्र हस्तलिखितादर्शेषु मु. मध्ये च विविधाः पाठा उपलभ्यन्ते—

हैमवते रोहिता-रोहितांशे, हरिवर्षे हरिद्धरिकान्ते, महाविदेहे सीता-शीतोदे, रम्यके नर-नारीकान्ते, हैरण्यवते सुवर्णकूला रूप्यकूले, ऐरावते रक्ता-रक्तोदे। प्रथमाः पूर्वगाः, द्वितीयाः पश्चिमगाः। तत्र चतुर्दशनदीसहस्रपरिवृते प्रत्येकं गङ्गा-सिन्धू, यथोत्तरं द्विगुण-द्विगुणनदीपरिवृते द्वे द्वे नद्यौ सीतासीतोदाभ्यामर्वाक्। ते तु प्रत्येकं द्वात्रिंशत्सहस्राधिकपञ्चलक्षपरिवृते। उत्तरास्तु दक्षिणाभिस्तुल्याः-हे.।

हैमवते रोहितांशा-रोहिते, हरिवर्षे हरिकान्ताहरितौ महाविदेहे शीतोदा-शीते रम्यके नारी-नरकान्ते हैरण्यवते रूप्यकूल सुवर्णकूले ऐरवते रक्ता-रक्तोदे। प्रथमाः पूर्वगाः, द्वितीयाः पश्चिमगाः। तत्र चतुर्दशनदीसहस्रपरिवृते प्रत्येकं गङ्गा-सिन्धू यथोत्तरं द्विगुणद्विगुणनदीपरिवृते द्वे द्वे नद्यौ शीतोदा-शीते यावत्। उत्तरास्तु दक्षिणाभिस्तुल्याः-खं. संपू.।

हैमवते रोहितांशा-रोहितौ, हरिवर्षे हरिकान्ता-हरितौ, महाविदेहे शीतोदा-शीते, रम्यके नारी-नरकान्ते, हैरण्यवते रूप्यकूल-सुवर्णकूले, ऐरवते रक्ता-रक्तोदे। प्रथमाः पूर्वगाः, द्वितीयाः पश्चिमगाः। तत्र चतुर्दशनदीसहस्रपरिवृते प्रत्येकं गङ्गा-सिन्धू यथोत्तरं द्विगुणद्विगुणनदीपरिवृते द्वे द्वे नद्यौ शीतोदा-शीते यावत् तेषु प्रत्येकं द्वात्रिंशत्सहस्राधिकपञ्चलक्षनदीपरिवृते। उत्तरास्तु दक्षिणाभिस्तुल्याः-शां.।

हैमवते रोहितांशा-रोहिते, हरिवर्षे हरिकान्ता-हरिते, महाविदेहे शीता-शीतोदे, रम्यके नारी-नरकान्ते, हैरण्यवते सुवर्णकूला-रूप्यकूले, ऐरवते रक्ता-रक्तोदे। प्रथमाः पूर्वगाः, द्वितीयाः पश्चिमगाः। तत्र चतुर्दशनदीसहस्रपरिवृते प्रत्येकं गङ्गा-सिंधू यथोत्तरं द्विगुणनदीपरिवृते द्वे द्वे नद्यौ शीता-शीतोदाभ्यामर्वाक्। ते तु प्रत्येकं द्वात्रिंशत्सहस्राधिकपञ्चलक्षनदीपरिवृते। उत्तरास्तु दक्षिणाभिस्तुल्याः-मु.।

एतेषु हे. पाठोऽस्माभिर्मूले स्वीकृतोऽस्ति।

"गङ्गासिन्धूरोहिद्रोहितास्याहरिद्धरिकान्तासीतासीतोदानारीनरकान्तासुवर्णकूलारूप्यकूलारक्तारक्तोदासरितस्तन्मध्यगाः। ३। २०। द्वयोर्द्वयोः पूर्वाः पूर्वगाः ३। २१। शेषास्त्वपरगाः। ३। २२। चतुर्दशनदीसहस्रपरिवृता गङ्गासिन्ध्वाद्यो नद्यः। ३। २३।" इति दिगम्बरपरम्परासम्मते तत्त्वार्थसूत्रे पाठः॥ श्वेताम्बरपरम्परायां त्वेतानि सूत्राणि नैव सन्ति तत्त्वार्थसूत्रे॥

"गङ्गा ··· ··· पूर्वाभिमुखी, ··· ·। सिन्धू ·· ··· पश्चिमाभिमुखं गच्छति। ·· ··· रोहितांशा · · पश्चिमाभिमुखं परावर्तते। ·· · रक्ता · ·· · पूर्वेण। रक्तवती अपरेण । सुवर्णकूला · पूर्वदिग्भागेनोदधिं समवगाढा · · · । रोहिता · ·· · पूर्वाभिमुखं परावर्तते · · । हरिकान्ता · · · पश्चिमाभिमुखं परावर्तते ··· · । रूप्यकूला ······· ·· पश्चिमदिग्भागेनोदधिं लवणसमुद्रं गता। नरकान्तापि ·· ·· ····· पूर्वदिग्भागेन समुद्रमाधिगता। ·· · · · हरिसलिला····· · · पूर्वदिग्भागेन लवणसमुद्रं प्राप्ता। ····· ·· शीतोदा · · · पश्चिमदिग्भागेन उदधिं लवणसमुद्रमनुप्राप्ता। शीता · · · · · पूर्वेण दिग्भागेन लवणसमुद्रमभ्येति। ······· ·· नारीकान्ता · · ·· पश्चिमाभिमुखं परावर्तते।" इति मलयगिरिसूरिविरचितायां बृहत्क्षेत्रसमासटीकायाम् पृ० ९२-१०७, गा० २१२-२५१॥

नदीसहस्रपरिवृते प्रत्येकं गङ्गा-सिन्धू। यथोत्तरं द्विगुण-द्विगुणनदीपरिवृते द्वे द्वे नद्यौ शीता-शीतोदाभ्यामर्वाक्। ते तु प्रत्येकं द्वात्रिंशत्सहस्राधिकपञ्चलक्षनदीपरिवृते। उत्तरास्तु दक्षिणाभिस्तुल्याः।

तत्र भरतक्षेत्रं विष्कम्भतः पञ्च योजनशतानि षड्विंशानि एकोनविंशतीभागीकृतस्य योजनस्य षड् भागाः, तद्द्विगुणद्विगुणविष्कम्भा यथोत्तरं वर्षधर-वर्षा विदेहान्ताः। उत्तरा दक्षिणतुल्याः।

विदेहेषु निषधस्योत्तरतो मेरोर्दक्षिणतो विद्युत्प्रभ-सौमनसाभ्यां पश्चिमपूर्वाभ्यां निषध-मेर्वन्तर्वर्तिभ्यां[1] गजदन्ताकृतिभ्यां पर्वताभ्यामावृताः शीतोदाभिन्न[2]हृदपञ्चकोभयपार्श्वव्यवस्थितैर्दशभिर्दशभिः काञ्चनपर्वतैर्विराजिताः शीतोदानदीपूर्वापरकूलस्थिताभ्यां योजनसहस्रोच्चाभ्यां तावदधोविस्तृताभ्यां तदर्धोपरिविस्तृताभ्यां च विचित्रकूट-चित्रकूटाभ्यां शोभिताश्च देवकुरवः विष्कम्भेणैकादश योजनसहस्राणि अष्टौ च शतानि द्विचत्वारिंशानि।

मेरोरुत्तरतो नीलाद्दक्षिणतो गन्धमादन-माल्यवत्पर्वताभ्यां गजदन्ताकृतिभ्यां मेरु-नीलान्तरस्थाभ्यामावृताः शीतानदीविभिन्नहृदपञ्चकोभयपार्श्वस्थितकाञ्चनपर्वतशतेन शीतानद्युभयकूलस्थाभ्यां काञ्चनाभ्यां यमकपर्वताभ्यां विचित्रकूट-चित्रकूटमानाभ्यां च विराजिता उत्तराः कुरवः।

देवकुरूत्तरकुरुभ्यः पूर्वतः पूर्वविदेहाः, पश्चिमतोऽपरविदेहाः। पूर्वविदेहेषु चक्रवर्तिविजेतव्या नदी-पर्वतविभक्ताः परस्परमगम्याः षोडश विजयाः, एवमपरविदेहेष्वपि ॥

१ ०न्तव०-संपू.॥ २ ०दानदीभिन्न०-मु.॥

भरतक्षेत्रमध्ये च पूर्वापरायत उभयतः समुद्रमवगाढो दक्षिणोत्तरार्धविभागकारी तमिस्रा-खण्डप्रपातागुहाद्वयोपशोभितः षड् योजनानि सक्रोशानि धरणितलमवगाढः पञ्चाशद्योजनविस्तृतः पञ्चविंशतियोजनोच्छ्रितो वैताढ्यपर्वतः। अत्र च दक्षिणोत्तरपार्श्वाभ्यां भूमितो दशयोजनेभ्य ऊर्ध्वं दशयोजनविस्तृते विद्याधरश्रेण्यौ। तत्र दक्षिणस्यां सजनपदानि पञ्चाशन्नगराणि उत्तरस्यां तु षष्टिः। विद्याधरश्रेणिभ्यामूर्ध्वमुभयतो दशयोजनान्ते व्यन्तरश्रेण्यौ, तयोर्व्यन्तरावासाः। व्यन्तरश्रेण्योरुपरि पञ्चसु योजनेषु नव कूटानि। वैताढ्यवक्तव्यता ऐरवत[1]क्षेत्रेऽपि समाना वक्तव्या।

जम्बूद्वीपस्य च प्राकारभूता वज्रमयी अष्टयोजनोच्छ्राया जगती, द्वादश योजनान्यस्या मूले विष्कम्भः, मध्येऽष्टौ योजनानि, उपरि चत्वारि योजनानि, तदुपरि द्विगव्यूत्युच्छ्रायो जालकटको विद्याधरक्रीडास्थानम्। तस्याप्युपरि पद्मवरवेदिका देवभोगभूमिः। अस्याश्च जगत्याः पूर्वादिषु दिक्षु विजय-वैजयन्त-जयन्ता-ऽपराजिताख्यानि चत्वारि द्वाराणि, हिमवन्महाहिमवतोरन्तरे शब्दापाती नाम वृत्तवैताढ्यपर्वतः। रुक्मि-शिखरिणोर्मध्ये विकटापाती। महाहिमवन्निषधयोरन्तरे गन्धापाती। नील-रुक्मिणोरन्तरे माल्यवान्। सर्वेऽपि योजनसहस्रोच्छ्रायाः पल्याकृतयः।

तथा जम्बूद्वीपपरिक्षेपी तद्द्विगुणविस्तारो योजनसहस्रावगाढो मात्रया पञ्चनवतियोजनसहस्राणि यावदुभयत उच्छ्रयेण प्रवर्धमानजलो मध्ये दशसहस्रविस्तारे षोडशयोजनसहस्रोच्छ्रयशिखः तदुपरि कालद्वयेऽपि गव्यूतद्वितयं यावत् ह्रास-वृद्धिमान् लवणोदः समुद्रः। तत्र मध्ये चतु[2]र्दिशि योजनलक्षप्रमाणाः प्राक्क्रमात् वडवामुख-केयूप-यूपक-ईश्वराख्याः [3]साहस्रवज्रमयकुड्या

१ ऐरावत०-मु०॥ २ ०र्दिशे-खं.। ०र्दिशं-मु.॥ ३ सहस्र०-मु. खं.॥

॥ ९१९ ॥

दशयोजनसहस्राण्यधो मुखे च विस्तृताः काल-महाकाल-वेलम्ब-प्रभञ्जनसुरावासा वायुधृतत्रिभागजला महालञ्जराकृतयः पातालकलशाः। क्षुल्लकाश्चान्ये साहस्राः, अधो मुखे च शत्याः, दशयोजनकुड्याः, वायून्नामितमध्यमिश्रोपरिजला, चतुरशीत्यधिकाष्टशतान्वितसप्तसहस्रसङ्ख्याः (७८८४)। तथा द्विचत्वारिंशत्सहस्रसङ्ख्या (४२०००) नागकुमारा अन्तर्वेलाधारिणः, द्विसप्ततिसहस्राणि (७२०००) बाह्यवेलाधारिणः, षष्टिसहस्राणि (६००००) शिखावेलाधारिणः। गोस्तूपोदकाभासशङ्खोदकसीमानो वेलाधारीन्द्रगिरयः कनका-ऽङ्क-रजत-स्फटिकमया गोस्तूप-शिवक-शङ्ख-मनोह्रदावासाः[1] द्विचत्वारिंशद्योजनसहस्रेषु दिश्याः। एकविंशसप्तदशयोजनशतोच्चाः (१७२१), अधो द्वाविंशत्यधिकयोजनसहस्रविस्ताराः (१०२२), उपरि चतुर्विंशचतुःशतयोजनाः (४२४) तदुपरि प्रासादाः। कर्कोटक-कार्दम-कैलासा-ऽरुणप्रभा अणुवेलाधारीन्द्रगिरयः सर्वरत्नमयाः कर्कोट-विद्युज्जिह्व-कैलासा-ऽरुणप्रभावासाः। तथा विदिक्षु द्वादशयोजनसहस्रेषु प्राच्यामिन्दुद्वीपौ तावद्विस्तारायामौ, तावत्परेण सवित्रोः। तथा गौतमद्वीपः सुस्थितावासस्तावति। तथा अन्तर्बाह्यलावणक[2]चन्द्रसूर्याणां सर्वेषु च प्रासादाः। लवणो लवणरसः।

लवणोदधिपरिक्षेपी तद्द्विगुणो धातकीखण्डः। य एते मेरु-वर्षधर-वर्षादयो जम्बूद्वीपेऽभिहिता एते द्विगुणा धातकी-

---

१ मनशिलावासाः–संपू.। मनःशिलावासाः–मु.॥ "गोस्तूप-शङ्ख-मनोह्द(ह्र)दसुराश्रया" इति त्रिषष्टिशलाकापुरुषचरिते द्वितीये पर्वणि तृतीये सर्गे श्लो० ६३२॥

"गोत्थुभ सिवए संखे मणोसिले नागरायाणो" इति जिनभद्रगणिक्षमाश्रमणविरचिते बृहत्क्षेत्रसमासे ॥ ४१९॥

"दकसीम्नो मनःशिलः" इति मलयगिरिसूरिविरचितायां बृहत्क्षेत्रसमासटीकायाम् पृ० १८९॥ २ लावणिक–मु.॥

खण्डे द्वाभ्यामिष्वाकारपर्वताभ्यां दक्षिणोत्तरायताभ्यां विभक्ताः। एभिरेव नामभिर्जम्बूद्वीपकसमसङ्ख्याः, पूर्वार्धे चापरार्धे च चक्रारसंस्थिता निषधसमोच्छ्रायाः कालोद-लवणजलस्पर्शिनो वर्षधराः सेष्वाकारपर्वताः, अरविवरसंस्थिताश्च वर्षा इति।

धातकीखण्डपरिक्षेपी अष्टयोजनलक्षविष्कम्भः कालोदः समुद्रः।

कालोदपरिक्षेपी तद्द्विगुणविस्तारः पुष्करवरद्वीपः, तदर्धं यावन्मानुषं क्षेत्रम्। यश्च धातकीखण्डे मेर्वादीनां सेष्वाकारपर्वतानां सङ्ख्याविषयनियमः स एव पुष्करार्धे वेदितव्यः, धातकीखण्डक्षेत्रादिविभागतो द्विगुणक्षेत्रादिविभागश्च। धातकीखण्ड-पुष्करार्धयोश्च क्षुद्रमेरवश्चत्वारोऽपि महामेरोः पञ्चदशभिर्योजनसहस्रैर्हीनोच्छ्रायाः (८५०००) षड्भिर्योजनशतैर्धरणितले हीनविष्कम्भाः। तेषां प्रथमं काण्डं महामेरुतुल्यम् (१०००), द्वितीयं सप्तभिर्योजनसहस्रैर्हीनम् (५६०००), तृतीयमष्टाभिः (२८००)। भद्रशाल-नन्दनवने महामेरुवत्। सार्धपञ्चपञ्चाशद्योजनसहस्रोपरि पञ्चयोजनशतविस्तृतं सौमनसम्। ततोऽष्टाविंशतियोजनसहस्रोपरि चतुर्णवत्यधिकचतुर्योजनशतविस्तृतं पाण्डकवनम्। उपरि चाधश्च विष्कम्भोऽवगाहश्च (१०००-१००००-१०००) तुल्यो महामेरुणा, चूलिका चेति।

तदेवं[1] मानुषं क्षेत्रमर्धतृतीया द्वीपाः, समुद्रद्वयम्, पञ्च मेरवः, पञ्चत्रिंशत् क्षेत्राणि, त्रिंशद्वर्षधरपर्वताः, पञ्च देवकुरवः, पञ्चोत्तराः कुरवः, शतं षष्ट्यधिकं विजयानामिति।

ततः परं मानुषोत्तरो नाम पर्वतो मानुषलोकपरिक्षेपी महानगरप्राकारवृत्तः पुष्करवरद्वीपार्धविनिविष्टः काञ्चनमयः सप्तदश योजनशतान्येकविंशान्युच्छ्रितः, चत्वारि योजनशतानि त्रिंशानि क्रोशं चाधो धरणितलमवगाढः, योजनसहस्रं द्वाविंश-

१ तदेव-खं. संपू. ॥

॥ ९२१ ॥

मधस्ताद्विस्तृतः, सप्त योजनशतानि त्रयोविंशतानि मध्ये, चत्वारि योजनशतानि चतुर्विंशान्युपरीति। न कदाचिदस्मात् परतो मनुष्या जायन्ते वा म्रियन्ते वा। येऽपि चारणविद्याधरर्द्धिप्राप्ता मनुष्यास्तमुल्लङ्घ्य परतो गतास्तेऽपि तत्र न म्रियन्ते, अत एव मानुपोत्तर इत्युच्यते। न च तत्परतो बादराग्नि-मेघ-विद्युन्नदी-काल-परिवेषादयः। मानुपोत्तरादर्वाक् पुनः पञ्चत्रिंशति क्षेत्रेषु सान्तरद्वीपेषु जन्मतो मनुष्या भवन्ति, संहरणविद्यर्द्धियोगात्तु सर्वेष्वर्धतृतीयेषु द्वीपेषु समेर्वादिशिखरेषु समुद्रद्वये चेति।

लोक-भावनायां तिर्यग्लोक-स्वरूपम्

भारतका हैमवतका इत्येवमादयः क्षेत्रविभागेन, जम्बूद्वीपका लवणका इत्यादयो द्वीप-समुद्रविभागेन मनुष्या इति। ते च द्विविधा आर्या म्लेच्छाश्च। तत्रार्याः सार्धपञ्चविंशतिजनपदप्रभवाः। जनपदास्तु विशिष्टनगरोपलक्षिता इमे, तद्यथा—

रायगिह मगह १ चंपा अंगा २ तह तामलित्ति वंगा य ३।
कंचणपुरं कलिंगा ४ वाणारसी[3] चेव कासी अ ५॥ १॥
साकेय कोसला ६ गयपुरं च कुरु ७ सोरिअं कुसट्टा य ८।
कंपिल्लं पंचाला ९ अहिछत्ता जंगला १० चेव[4]॥ २॥

---

१ इमाः षड् गाथाः सूत्रकृताङ्गवृत्ति [पृ० १२३ A]–बृहत्कल्पसूत्रवृत्ति [पृ० ९१३] प्रभृतिग्रन्थेष्वपि उद्धृताः। प्रवचनसारोद्धारेऽपि [गा० १५८६–१५९२] संगृहीताः॥ "राजगृहं नगरम्, मगधो देशः, चम्पानगरी, अङ्गदेशः। तथा तामलिप्ती नगरी, वङ्गा जनपदः। काञ्चनपुरं नगरम्, कलिङ्गदेशः। वाणारसी नगरी, काशयो देशः। साकेतं नगरम्, कोशला जनपदः। गजपुरं नगरम्, कुरवो देशः। सौरिकं नगरम्, कुशार्तो देशः। काम्पिल्यं नगरम्, पाञ्चालो देशः। अहिच्छत्रा नगरी, जङ्गलो देशः।

बारवई अ सुरट्ठा ११ मिहिल विदेहा य १२ वच्छ कोसंबी १३ ।
नंदिपुरं संडिल्ला १४ भद्दिलपुरमेव मलया य १५ ॥ ३ ॥
वइराड मच्छ १६ वरणा अच्छा १७ तह मित्तियावइ दसण्णा १८ ।
सुत्तीमई य चेदी १९ वीअभयं[1] सिंधुसोवीरा २० ॥ ४ ॥
महुरा य सूरसेणा २१ पावा भंगी अ २२ मासपुरि वट्टा २३ ।
सावत्थी अ कुणाला २४ कोडीवरिसं च लाढा य २५ ॥ ५ ॥

१ वीइभयं-मु. विना ॥

द्वारवती नगरी, सुराष्ट्रो देशः। मिथिला नगरी, विदेहा जनपदः। वत्सा देशः, कौशाम्बी नगरी। नन्दिपुरं नगरम्, शाण्डिल्यो शाण्डिल्या वा देशः। भद्दिलपुरं नगरम्, मलया देशः। वैराटो देशः, वत्सा राजधानी। अन्ये तु वत्सा देशः, वैराटं पुरं नगरमित्याहुः। वरुणा नगरम्, अच्छा देशः। अन्ये तु वरुणेषु अच्छपुरीत्याहुः। तथा मृत्तिकावती नगरी, दशार्णो देश। शुक्तिमती नगरी, चेदयो देशः। वीतभयं नगरम्, सिन्धुसौवीरा जनपदः। मथुरा नगरी, सूरसेनाख्यो देशः। पापा नगरी भङ्गयो देशः। मासपुरी नगरी, वर्तो देशः। अन्ये त्वाहुः—चेदिषु सौक्तिकावती, वीतभयं सिन्धुषु, सौवीरेषु मथुरा, सूरसेनेषु पापा, भङ्गिषु मासपुरीवट्टेति। तदतिव्यवहृतम्, परं बहुश्रुतसम्प्रदायः प्रमाणम्। तथा श्रावस्ती नगरी, कुणाला देशः। कोटीवर्षं नगरम्, लाढा देशः। श्वेतम्बिका नगरी, केकयजनपदस्यार्धम्। एतावदर्धपञ्चविंशतिजनपदात्मकं क्षेत्रमार्यं भणितम्। कुत इत्याह–जत्थुप्पत्तीत्यादि। यस्मादत्र एतेषु अर्धपञ्चविंशतिसङ्ख्येषु जनपदेषु उत्पत्तिर्जिनानां तीर्थकराणां चक्रिणां चक्रवर्तिनां रामाणां बलदेवानां कृष्णानां वासुदेवानां च तत आर्यम्" इति सिद्धसेनसूरिविरचितायां प्रवचनसारोद्धारवृत्तौ ॥ त्रिषष्टिशलाकापुरुषचरिते द्वितीये पर्वणि तृतीये सर्गे आर्यदेशानां म्लेच्छदेशानां च नामानि आचार्यश्री हेमचन्द्रसूरिभिरित्थं

॥ ९२३ ॥

वर्णितानि—

"द्विधाऽऽर्य-म्लेच्छभेदात् ते, तत्रार्याः षड्विधा इह । क्षेत्र-जाति-कुल-कर्म-शिल्प-भाषाविभेदतः ॥ ६६४ ॥
क्षेत्रार्याः पञ्चदशसु जायन्ते कर्मभूमिषु । तत्रेह भारते सार्धपञ्चविंशतिदेशजाः ॥ ६६५ ॥
ते चार्यदेशा नगरैरुपलक्ष्या इमे यथा । राजगृहेण मगधा अङ्गदेशस्तु चम्पया ॥ ६६६ ॥
वङ्गा पुनस्ताम्रलिप्त्या, वाराणस्या च काशय । काञ्चनपुर्या कलिङ्गा, साकेतेन च कोसलाः ॥ ६६७ ॥
कुरवो गजपुरेण, शौर्येण च कुशार्तकाः । काम्पील्येन च पञ्चाला अहिच्छत्रेण जाङ्गला ॥ ६६८ ॥
विदेहास्तु मिथिलया, द्वारवत्या सुराष्ट्रका । वत्साश्च कौशाम्बीपुर्या, मलया भद्रिलेन तु ॥ ६६९ ॥
नान्दीपुरेण सन्दर्भा वरुणाः पुनरच्छया । वैराटेन पुनर्मत्स्या, शुक्तिमत्या च चेदय ॥ ६७० ॥
दशार्णा मृत्तिकावत्या, वीतभयेन सिन्धव । सौवीरास्तु मथुरया, सूरसेनास्तु पापया ॥ ६७१ ॥
भङ्ग्या मासपुरीवर्ता, श्रावस्त्या च कुणालका । कोटीवर्षेण लाटाश्च श्वेतव्या केतकार्धकम् ॥ ६७२ ॥
आर्यदेशा अमी एभिर्नगरैरुपलक्षिता । तीर्थकृच्चक्रभृत्-कृष्ण-बलानां जन्म येषु हि ॥ ६७३ ॥
म्लेच्छास्तु शाका यवना शवरा वर्बरा अपि । काया मुरुण्डा उड्राश्च गोड्रा पक्वणका अपि ॥ ६७९ ॥
अरपाकाश्च हूणाश्च, रोमकाः पारसा अपि । खसाश्च खासिका डौम्बिलिकाश्च लकुसा अपि ॥ ६८० ॥
भिल्ला अन्ध्रा वुक्कसाश्च पुलिन्दाः क्रौञ्चका अपि । भ्रमररूता कुञ्चाश्च, चीन-चञ्चुक-मालवा ॥ ६८१ ॥
द्रविडाश्च कुलक्षाश्च, किराता कैकया अपि । हयमुखा गजमुखास्तुरगा-ऽजमुखा अपि ॥ ६८२ ॥
हयकर्णा गजकर्णा अनार्या अपरेऽपि हि । मर्त्या येषु न जानन्ति धर्म इत्यक्षराण्यपि ॥ ६८३ ॥"

२ तामलत्ति–मु. विना ॥ ३ ०रसि–खं. संपू. हे. ॥ ४ चेअ–शां. सं. पू. ॥

सेयंविया[1] वि य नयरी केअयअद्धं च २६ आरिअं भणिअं ।
जत्थोप्पत्ति[2] जिणाणं चक्कीणं राम-कण्हाणं ॥ ६ ॥

शक-यवनादयस्तु म्लेच्छाः । तद्यथा—

सग[3]-जवण-सवर-बब्बर-काय-मुरुंडोड्ड[4]-गोड्ड-पक्कणया ।
अरवाग-हूण-रोमस[5]-पारस-खस-खासिआ चेव ॥ १ ॥
डुम्बिलिअ[6]-लउस-बुक्कस-भिल्लंध-पुलिंद-कुंच-भमररुआ[7] ।
कुंचा[8] य चीण-चंचुअ-मालव-दमिला[9] कुलक्खा[10] य ॥ २ ॥
केकंय[11] किराय हयमुह[12] गयमुह तह तुरग-मेंढगमुहा य ।
हयकण्णा गयकण्णा अण्णो[13] अ अणारिआ बहवे ॥ ३ ॥

---

१ सेअविआ–शां.। सेअवीआ–हे.॥ २ जत्थोपत्ति–संपू. हे.॥ ३ इमाश्चतस्रो गाथाः सूत्रकृताङ्गवृत्तौ पृ० १२३, २७७] अपि उद्धृताः। प्रवचनसारोद्धारेऽपि [गा० १५८३–१५८६] संगृहीताः। "शकाः यवनाः शबराः बर्बराः कायाः मुरुण्डाः उड्डाः गौड्डाः पक्कणगाः अरवागाः हूणाः रोमकाः पारसाः खसाः खासिकाः दुम्बिलकाः लकुशाः बोकसाः बोक्कशाः भिल्लाः अन्ध्राः पुलिन्द्राः कुञ्चाः भ्रमररुचाः कोर्पकाः चीनाः चञ्चुकाः मालवाः द्रविडाः कुलार्घाः केकयाः किराताः हयमुखाः खरमुखाः गजमुखाः तुरङ्गमुखाः मिण्ढकमुखाः हयकर्णा गजकर्णाश्चेत्येते देशा अनार्याः ... " 'अपरेऽपि एवंप्रकारा बहवोऽनार्या देशाः प्रश्नव्याकर-

॥९२५॥

पावा[1] य चंडकम्मा अणारिआ निग्घिणा निरणुतावा[2] ।

धम्मो त्ति अक्खराइं जत्थ[3] न नज्जंति सिविणे[4] वि ॥ ४ ॥

तथाऽन्तरद्वीपजा अपि म्लेच्छाः। अन्तरद्वीपाश्च षट्पञ्चाशत्। तद्यथा—

हिमवतः प्राग्भागे पश्चाद्भागे च विदिक्षु पूर्वोत्तरादिकासु चतसृषु त्रीणि योजनशतानि लवणजलधिमवगाह्य पूर्वोत्तरस्यां दिशि योजनशतत्रयायामविष्कम्भः प्रथमोऽन्तरद्वीपः एकोरुकाभिधानः स्थितः, स चैकोरुकपुरुषाणामधिवासः, द्वीपनामतश्च पुरुषनामानि, पुरुषास्तु सर्वाङ्गोपाङ्गसुन्दरा नैकोरुका एव, एवं शेषा अपि। दक्षिणपूर्वस्यां त्रीणि योजनशतानि लवणजलधिमवगाह्य योजनत्रिशतायामविष्कम्भ आभाषिकपुरुषाधिवासः[5] आभाषिकोऽन्तरद्वीपः। तथा दक्षिणापरस्यां त्रीणि योजन-

१ पाव य चंडदंडा-खं.। पावा य चंडकम्मा-मु.॥ २ निरणुकंपा-शां. खं. हे.॥ ३ सुविणे वि न नज्जए ताण-मु.॥ ४ सुविणे वि-खं.॥ ५ ०वासः प्रथम आभा०-मु.॥

णादिग्रन्थोक्ता विज्ञेयाः। .... .. एते सर्वेऽप्यनार्यदेशाः पापाः ..... .... चण्डं कोपोत्कटतया रौद्राभिधानरसविशेषप्रवर्तितत्वाद् अतिरौद्रं कर्म समाचरणं येषां ते चण्डकर्माणः .......... निर्घृणाः .... निरनुतापिनः ......... येषु धर्म इत्यक्षराणि स्वप्नेऽपि सर्वथा न ज्ञायन्ते" इति सिद्धसेनसूरिविरचितायां प्रवचनसारोद्धारवृत्तौ॥ ४ ०मुरंडो०-संपू०॥ ५ रोमय०-शां.। गोमय०-शां.॥ ६ डुविलिअ-संपू॥ ७ ०रुअं-शां.॥ ८ कापोअ चीण-मु.॥ ९ दविडा-मु.॥ १० कुलत्था-मु.॥ 'क्खा' इत्यस्य अधस्तात् 'ग्घा' इति हे० मध्ये लिखितमस्ति॥ ११ केकय-खं. संपू. हे.॥ १२ हयमुह खरमुह गयतुरगमेंढपमुहा य। -मु.॥ १३ अन्ने य अ अणा०-मु.॥

शतानि लवणजलधिमवगाह्य त्रिशतायामविष्कम्भो[1] लाङ्गूलिकमनुष्यावासो लाङ्गूलाभिधानः प्रथमोऽन्तरद्वीपः। तथोत्तरापरस्यां त्रीणि योजनशतानि लवणजलधिमवगाह्य त्रिशतायामविष्कम्भो[2] वैषाणिकमनुष्यावासो वैषाणिकाभिधानः प्रथमोऽन्तरद्वीपः।

ततश्चत्वारि योजनशतान्यवगाह्य चतुर्योजनशतायामविष्कम्भा एवमेव हयकर्णानां गजकर्णानां गोकर्णानां शष्कुलिकर्णानां चत्वारोऽन्तरद्वीपाः।

ततः पञ्च शतान्यवगाह्य[3] पञ्चयोजनशतायामविष्कम्भा आदर्शमुखानां मेषमुखानां हयमुखानां गजमुखानामन्तरद्वीपाः।

ततः षड् योजनशतान्यवगाह्य तावदायामविष्कम्भा अश्वमुखानां हस्तिमुखानां सिंहमुखानां व्याघ्रमुखाणामन्तरद्वीपाः।

ततः सप्त योजनशतान्यवगाह्य तावदायामविष्कम्भा अश्वकर्णानां सिंहकर्णानां हस्तिकर्णानां कर्णप्रावरणानामन्तरद्वीपाः।

ततोऽष्टौ योजनशतान्यवगाह्य तावदायामविष्कम्भा उल्कामुखानां विद्युज्जिह्वानां मेषमुखाणां विद्युद्दन्तानामन्तरद्वीपाः।

ततो नव योजनशतान्यवगाह्य तावदायामविष्कम्भा घनदन्तानां गूढदन्तानां श्रेष्ठदन्तानां शुद्धदन्तानामन्तरद्वीपाः।

एतेषु च मनुष्या युग्मप्रसवाः पल्योपमासङ्ख्येयभागायुषोऽष्टधनुःशतोच्चा भवन्ति। तथैरावतक्षेत्रविभागकारिणः शिखरिणोऽपि पूर्वोत्तरादिविदिक्षु अमुनैव क्रमेण नामकलापेन चान्तरद्वीपकानामष्टाविंशतिर्भवति, मिलिताः षट्पञ्चाशदन्तरद्वीपका भवन्ति।

---

१ योजनत्रिशता०-मु.॥ २ योजनत्रिशता०-मु.॥ ३ योजनशता०-मु.॥

मानुषोत्तरात् परतस्तु पुष्करवरद्वीपस्य द्वितीयमर्धम्। पुष्करद्वीपात् परतस्तत्परिक्षेपी द्वीपद्विगुणविस्तारः पुष्करोदः समुद्रः। ततो वारुणिवरद्वीप-समुद्रौ, क्षीरवरद्वीप-समुद्रौ, घृतवरद्वीप-समुद्रौ, इक्षुवरद्वीप-समुद्रौ च भवतः।

अष्टमो नन्दीश्वरद्वीपः, स च चतुरशीतिलक्षोपेतत्रिषष्टिकोट्यधिकयोजनकोटिशतप्रमाणवलयविष्कम्भो विविधविन्यासोद्यानवान् देवलोकप्रतिस्पर्धी जिनेन्द्रपूजाव्यापृतदेवसंपाताभिरुचिरः स्वेच्छाविविधक्रियादेवसंभोगरम्यः। तत्र तस्य मध्यभागे चतुसृषु दिक्षु चत्वारोऽञ्जनगिरयोऽञ्जनवर्णा बाह्यमेरुसमुच्छ्रूयाः[3] (८४०००), दशयोजनसहस्रातिरिक्तविस्तारा मूले, उपरि साहस्राः। ते च क्रमादेवरमण-नित्योद्द्योत-स्वयंप्रभ-रमणीयनामानः। तेषु जिनायतनानि योजनशतायामानि तदर्धविस्ताराणि द्विसप्ततियोजनोच्चानि। तत्र षोडशयोजनोच्चानि अष्टयोजनविस्ताराणि अष्टयोजनप्रवेशानि देवा-ऽसुर-नाग-सुपर्णाख्यामरनिवासानि तन्नामानि च चत्वारि द्वाराणि, तन्मध्ये मणिपीठिकाः षोडशयोजनायामविस्तारा अष्टयोजनोत्सेधाः, तदुपरि देवच्छन्दकाः साधिकायामोच्चाः, तेषु प्रत्येकमृषभा-वर्धमाना-वारिषेणा-चन्द्राननाभिख्यानां शाश्वतजिनप्रतिमानां पर्यङ्कनिषण्णानां स्वपरिवारवृतानामष्टोत्तरं शतम्। प्रतिप्रतिमं च द्वे नागप्रतिमे यक्षप्रतिमे भूतप्रतिमे कुण्डधरप्रतिमे चामरधरप्रतिमे च भवतः, पृष्ठतश्छत्रधरप्रतिमैका। तानि च दाम-घण्टा-धूपघटिका-ऽष्टमङ्गलक-तोरण-ध्वज-पुष्पचङ्गेरिका-पटल-च्छत्रा-ऽऽसनादिमन्ति तपनीयरुचिररजोवालुकाप्रस्तृतानि षोडशपूर्णकलशादिभूषितानि आयातनमानमुखमण्डप-प्रेक्षामण्डपा-ऽक्षवाटक-मणिपीठिका-स्तूप-प्रतिमा-चैत्यवृक्षेन्द्रध्वज-पुष्करिणीक्रमरचनानि।

---

१ ०रवरद्वीपात्–मु.॥ २ ०पातातिरुचिरः–मु खं.॥ ३ ०च्छाया–मु.॥ ४ ०मोच्चकाः–मु.॥ ५ ०धूपघंटिका०–हे. मु. विना॥ ६ ०प्रमृष्टानि–शां.॥ ७ पिठिका०–संपू. खं.। ०पीठका०–शां.॥

अञ्जनगिरीणां चतसृषु दिक्षु प्रत्येकं प्रत्येकं[1] लक्षयोजनमानाः पुष्करिण्यः, तद्यथा—नन्दिषेणा, अमोघा, गोस्तूपा, सुदर्शना। नन्दोत्तरा, नन्दा, सुनन्दा, नन्दिवर्धना। भद्रा, विशाला, कुमुदा, पुण्डरीकिणी। विजया, वैजयन्ता[2], जयन्ता[3], अपराजिता। प्राक्क्रमाद् गण्याः। तासां च प्रत्येकं पञ्चयोजनशत्याः परतो लक्षयोजनायामानि पञ्चयोजनशतीपृथूनि अशोक-सप्तच्छद-चम्पक-चूताभिधानान्युद्यानानि। वापीनां च मध्ये स्फाटिका दधिमुखा ललामवेदिकोद्यानादिलाञ्छनाश्चतुःषष्टि-योजनसहस्रोच्चा योजनसहस्रमवगाढा दश[4] अधो विस्तृताः तावदुपरि पल्याकृतयः। केचित्तु पुष्करिणीनामन्तरे द्वौ द्वौ रतिकर-पर्वतावाहुः। ते च द्वात्रिंशद्भवन्ति। दधिमुखेषु रतिकरेषु चाञ्जनवदायतनानि। द्वीपविपिक्षु रतिकराश्चत्वारो दशयोजन-सहस्रायामविष्कम्भा योजनसहस्रोच्चाः सर्वरत्नमया झल्लर्याकृतयः। तत्र दक्षिणयोः शक्रस्य उत्तरयोरीशानस्य अष्टाष्टानां महादेवीनां योजनशतसहस्राबाधस्थाना[5] दिक्षु जम्बूद्वीपसमाः प्रत्येकं जिनायतनभूषिता अष्टाष्ट राजधान्यः—सुजाता सौमनसा अर्चिर्माली प्रभाकरा पद्मा शिवा शुचिरञ्जना, चूता[6] चूतावतंसा गोस्तूपा सुदर्शना अमला अप्सरा रोहिणी नवमी चेति, तथा रत्ना रत्नोच्चया सर्वरत्ना रत्नसंचया वसुः वसुमित्रा वसुभागा वसुन्धरा, नन्दोत्तरा नन्दा उत्तरकुरुः[7] देवकुरुः कृष्णा कृष्ण-राजी रामा रामरक्षिता चेति प्राग्दक्षिणक्रमात्। तत्र देवाः सर्वसम्पद्वन्तः स्वपरिवारानुगताः पुण्यतिथिषु सुरासुरविद्याधरादि-

---

१ प्रत्येकं लक्ष०-मु.॥ २ वैजयन्ती-शां. हे. विना॥ ३ जयन्ती-मु.॥ ४ दशयोजनसहस्राधोविस्तृताः-मु.॥
५ ०स्राबाधास्थाना०-शां. ख.॥ ६ भूता भूतावतंसा-मु.॥ ७ कुरु देवकुरु-शां. विना॥

लोक-भावनायां तिर्यग्लोक-स्वरूपम्

पूज्यानां जिनानामायतनेषु प्रमुदितमनसोऽष्टाहिकीः पूजाः[1] कुर्वन्ति। इह चाञ्जनेषु (४) दधिमुखेषु (१६) च विंशतिर्जिनायतनानि, रतिकरेषु द्वात्रिंशत्। एवं गिरिशिखरेषु द्विपञ्चाशत्। राजधानीषु द्वात्रिंशज्जिनायतनानि, केचित्तु षोडश मन्यते।

एतदर्थसंवादिन्यो गाथाः—

"जोयणकोडिसयतिसट्ठचउरासीलक्खवलयविक्खंभो[*][2]।
अट्ठमदीवो नंदीसरोऽत्थि सइ विलसिरसुरोहो ॥ १ ॥
तत्थ[3] हु मज्झे चउरो दिसासु अंजणगिरी गवलवन्ना।
जोयणसहस्सचुलसीइमूसिया सहसमवगाढा ॥ २ ॥
भूमितले दससहसा (१००००) चउनउइ सया च[4] (९४००) सहसमुवरितले (१०००)।
पिहुला अडवीसंसत्तिगं ($\frac{3}{२८}$) दसंसो व[5] खयवुड्ढी ॥ ३ ॥

१ ०हिकीपूजाः-संपू. मु.। ०हिकी पूजा-हे.। हिकीपूजां-खं.॥ २ ०रंसी०-संपू. हे.॥ ३ तत्थ मज्झे-मु.॥ ४ व-शां. खं.। य-मु.॥ दृश्यतां स्थानाङ्गवृत्तौ पृ० २३१ B पं० ११॥ ५ य क्षय०-मु.॥

* योजनकोटिशतत्रिषष्टिचतुरशीतिलक्षवलयविष्कम्भः। अष्टमद्वीपो नन्दीश्वरोऽस्ति सदा विलसत्सुरौघः ॥ १ ॥
तत्र हु मध्ये चत्वारो दिक्षु अञ्जनगिरयो गवलवर्णाः। योजनसहस्रचतुरशीतिमुच्छ्रिताः सहस्रमवगाढाः ॥ २ ॥
भूमितले दश सहस्राः चतुर्नवतिः शतानि च सहस्रमुपरितले। पृथुला अष्टाविंशांशत्रिकं दशांशश्च क्षयवृद्धी ॥ ३ ॥

* पुव्वदिसि देवरमणो निच्चुज्जोओ अ दाहिणदिसाए ।
अवरदिसाए सयंपभ रमणिज्जो उत्तरे पासे ॥ ४ ॥
अंजणयाण चउदिसिं जोयणलक्खम्मि लक्खविक्खंभा ।
पुक्खरिणीउ सहस्सोवेहा निम्मच्छसच्छजला ॥ ५ ॥
नंदिसेणा १ अमोहा य २ गोत्थुभा य ३ सुदंसणा ४ ।
नंदुत्तरा य १ नंदा २ सुनंदा ३ नंदिवद्धणा[1] ४ ॥ ६ ॥
भद्दा १ विसाला २ कुमुया ३ बारसी पुंडरिंगिणी[2] ४ ।
विजया १ वेजयंती[3] य २ जयंती ३ अपराजिया ४ ॥ ७ ॥
पुव्वाइकमा नामा पुक्खरिणीणं तओ अ पंच सए ।
गंतूण लक्खदीहा वणसंडा पंचसयपिहुला ॥ ८ ॥

---

१ नंदवद्धणा-शां ॥ २ पुंडरीगिणी-मु. ॥ ३ विजयंती-संपू. ॥

* पूर्वदिशि देवरमणो नित्योद्द्योतश्च दक्षिणदिशि। अपरदिशि स्वयंप्रभो रमणीय उत्तरे पार्श्वे ॥ ४ ॥
अञ्जनकानां चतुर्दिक्षु योजनलक्षे लक्षविष्कम्भाः। पुष्करिण्यः सहस्रोद्वेधा निर्मत्स्यस्वच्छजला ॥ ५ ॥
नन्दिषेणा अमोघा च गोस्तूपा च सुदर्शना। नन्दोत्तरा च नन्दा सुनन्दा नन्दिवर्धना ॥ ६ ॥
भद्रा विशाला कुमुदा द्वादशी पुण्डरीकिणी। विजया वैजयन्ती च जयन्ती अपराजिता ॥ ७ ॥
पूर्वादिक्रमात् पुष्करिणीनां ततश्च पञ्च शतानि। गत्वा लक्षदीर्घा वनखण्डाः पञ्चशतपृथुलाः ॥ ८ ॥

॥ ९३१ ॥

* पुव्वेण असोगवणं दक्खिणओ[1] ताण सत्तिवन्नवणं ।
चंपगवणमवरेणुत्तरेण सव्वाण चूअवणं ॥ ९ ॥
पल्लसमा जोयणदससहस्सपिहुला सहस्समोगाढा ।
चउसट्ठिसहस्सुच्चा फलिहमया पुक्खरिणिमज्झे ॥ १० ॥
सोलस दहिमुहगिरिणो अंजणदहिमुहनगोवरितलेसु ।
जोयणसयदीह तयद्धवित्थडा दुगसयरिमुच्चा ॥ ११ ॥
बहुविविहरूवरूवगविचित्तविच्छित्तिभत्तिसयकलिया ।
पत्तेयं जिणभवणा तोरणझयमंगला[2]इजुआ ॥ १२ ॥
देवासुरनागसुवण्णनामगा नामसमसुरारक्खा ।
दारा सोलट्ठुच्चपिहुपवेसा य चउरो[3] सिं ॥ १३ ॥

---

१ ०णओ वा सत्तवन्न०-मु. ॥ २ ०गलाणिजुआ-खं. ॥ ३ चउरेसु-मु. ॥

* पूर्वेण अशोकवनं दक्षिणतो वा सप्तपर्णवनम् । चम्पकवनमपरेणोत्तरेण सर्वेषां चूतवनम् ॥ ९ ॥ पल्यसमा योजनदशसहस्रपृथुलाः सहस्रमवगाढाः । चतुःषष्टिसहस्रोच्चाः स्फटिकमयाः पुष्करिणीमध्ये ॥ १० ॥ षोडश दधिमुखगिरयः अञ्जनदधिमुखनगोपरितलेषु । योजनशतदीर्घतदर्धविस्तृतानि द्वासप्ततिमुच्चानि ॥ ११ ॥ बहुविविधरूपरूपकविचित्रविच्छित्तिभक्तिशतकलितानि । प्रत्येकं जिनभवनानि तोरणध्वजमङ्गलादियुतानि ॥ १२ ॥ देवासुरनागसुपर्णनामकानि नामसमसुरारक्ष्याणि । द्वाराणि षोडशाष्टाष्टोच्चपृथुप्रवेशानि च चत्वारि एषाम् ॥ १३ ॥

*
पइदारं कलसाई-मुहमंडव-पेच्छमंडव-ऽक्खाडा ।
मणिपीढ-थूभ-पडिमा-चिइतरु-ज्झय-पुक्खरिणिओ अ ॥ १४ ॥
अट्ठुच्चसोलसाययपिहुला मणिपीढिया जिणहरंतो ।
तदुवरि देवच्छंदा रयणमया साहियपमाणा ॥ १५ ॥
तत्थुसभ-वद्धमाणय-चंदाणण-वारिसेणनामाणं ।
सासयजिणपडिमाणं पलियंकनिसण्णमट्ठसयं ॥ १६ ॥
पइपडिम पुरो दो दो नागपडिम-जक्ख-भूय-कुंडधरा ।
दुहओ दो चमरधरा पिट्ठे छत्तधरपडिमेगा ॥ १७ ॥
तह घंटाचंदणघडभिंगारायरिसयाइसुपइट्ठा ।
पुप्फाइणेगचंगेरिपडलच्छत्तासणाइ इह ॥ १८ ॥

---

१ कलसाइं-शां. खं. ॥

* प्रतिद्वारं कलशादिमुखमण्डपप्रेक्षामण्डपाक्षवाटा । मणिपीठ-स्तूप-प्रतिमा-चैत्यतरु-ध्वज-पुष्करिण्यश्च ॥ १४ ॥
अष्टोच्चषोडशायतपृथुला मणिपीठिका जिनगृहान्तः । तदुपरि देवच्छन्दा रत्नमयाः साधिकप्रमाणाः ॥ १५ ॥
तत्र ऋषभ-वर्धमान-चन्द्रानन-वारिषेणनाम्नाम् । शाश्वतजिनप्रतिमानां पर्यङ्कनिषण्णमष्टशतम् ॥ १६ ॥
प्रतिप्रतिम पुरो द्वौ द्वौ नागप्रतिमा-यक्ष-भूत-कुण्डधराः । उभयतो द्वौ चामरधरौ पृष्ठे छत्रधरप्रतिमैका ॥ १७ ॥
तथा घण्टा-चन्दन-घट-भृङ्गारा-ऽऽदर्शकादिसुप्रतिष्ठाः । पुष्पाद्यनेकचङ्गेरीपटलच्छत्रासनादि इह ॥ १८ ॥

॥९३३॥

लोक-भावनायां तिर्यग्लोक-स्वरूपम्

ईय[1]* सुत्तवुत्तमाएसओ दुपुक्खरिणिअंतरे दो दो ।
रइकरगनगा वत्तीसमेसु पुव्वं व जिणभवणा ॥ १९ ॥
वंदंतनमंतअभित्थुणुंतपूयंतइंतजंतेहिं[2] ।
खयरसुरेहिं अरहिआ पुन्नतिहिमहामहकरेहिं ॥ २० ॥
तह जोयणसहस्सुच्चा विक्खंभायामसमदससहस्सा ।
झल्लरिनिभा रइकरा रयणमया विदिसि दीवंतो ॥ २१ ॥
तेसु चउण्ह दिसासुं जोयणलक्खम्मि जंबुदीवसमा ।
अट्ठट्ठ रायहाणी सक्केसाणग्गमहिसीणं ॥ २२ ॥
विमलमणिसालवलयाण ताण मज्झे पुढो जिणाययणा ।
जिणपडिमा पुव्वमिवेह अणुवमा परमरमणिज्जा ॥ २३ ॥

---

१ इह–हे. मु. ॥ २ पूइंतइंत०–संपू. ॥

* इति सूत्रोक्तादेशतो द्विपुष्करिण्यन्तरे द्वौ द्वौ। रतिकरकनगौ द्वात्रिंशत् एषु पूर्ववज्जिनभवनानि ॥ १९ ॥ वन्दमान-नमदभिस्तुवत्-पूजयद्-आगच्छद्-गच्छद्भिः। खचरसुरैः अरहिताः पुण्यतिथौ महामहकरैः ॥ २० ॥ तथा योजनसहस्रोच्चा विष्कम्भायामसमदशसहस्राः। झल्लरीनिभा रतिकरा रत्नमया विदिक्षु द्वीपान्तः ॥ २१ ॥ तेषां चतुर्णां दिक्षु योजनलक्षे जम्बूद्वीपसमाः। अष्टाष्ट राजधान्यः शक्रेशानाग्रमहिषीणाम् ॥ २२ ॥ विमलमणिशालवलयानां तासां मध्ये पृथक् जिनायतनानि। जिनप्रतिमाः पूर्वमिवेह अनुपमाः परमरमणीयाः ॥ २३ ॥

इ[1]य वीसं बावन्नं च जिणहरे गिरिसिरेसु संथुणिमो ।
इंदाणिरायहाणिसु बत्तीसं सोलस[2] व वंदे ॥ २४ ॥" [ ]

नन्दीश्वरद्वीपपरिक्षेपी नन्दीश्वरः[3] समुद्रः । ततः परमरुणो द्वीपः, अरुणोदः समुद्रः । ततोऽरुणवरो द्वीपः, अरुणवरः समुद्रः । ततोऽरुणाभासो द्वीपः, अरुणाभासः समुद्रः । तथा कुण्डलो द्वीपः, कुण्डलोदः समुद्रः । ततो रुचको द्वीपः, रुचकः समुद्रः । एवं प्रशस्तनामानो द्विगुणद्विगुणमाना द्वीप-समुद्राः । अन्त्यः स्वयम्भूरमणः समुद्रः ।

एषां च मध्येऽर्धतृतीयद्वीपेषु भरतैरावतविदेहाः[4] कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः । कालोद-पुष्कर-स्वयंभूरमणा उदकरसाः । लवणोदो लवणरसः । वारुणोदश्चित्रपानवत्[5] । क्षीरोदः खण्डादिमिश्रघृतचतुर्भागगोक्षीररसवान् । घृतोदः सुक्कथितसद्योविस्यन्दितगोघृतरसः । शेषाश्चतुर्जातकयुक्तत्रिभागच्छिन्नेक्षुरसवज्जलाः[6] । लवण-कालोद-स्वयंभूरमणा बहुमत्स्य--कच्छपाः, नेतरे ।

तथा जम्बूद्वीपे जघन्येन चत्वारस्तीर्थकृतः चक्रवर्तिनो बलदेवा वासुदेवाश्च सदा भवन्ति । उत्कर्षेण चतुस्त्रिंशज्जिनाः त्रिंशच्च क्षितीशाः । धातकीखण्डे पुष्करार्धे च द्विगुणाः ॥

---

१ इति विंशतिं द्विपञ्चाशतं च जिनगृहाणि गिरिशिरःसु संस्तुवीमः । इन्द्राणीराजधानीषु द्वात्रिंशतं षोडश वा वन्दे ॥ २४ ॥
२ सोलसं च वंदे–शां. ॥ ३ नन्दीश्वरसमुद्रः–खं. ॥ ४ भरतैरवत०–मु ॥ ५ ०पानवान्–मु. ॥ ६ ०त्रिभागत्रिभागच्छिन्ने०–खं. ॥

लोक-भावनायां तिर्यग्लोक-स्वरूपम्

तिर्यग्लोकादूर्ध्वं नवयोजनशतोनसप्तरज्जुप्रमाण ऊर्ध्वलोकः। तत्र सौधर्मेशान-सनत्कुमार-माहेन्द्र-ब्रह्मलोक-लान्तक-महाशुक्र-सहस्रारा-ऽऽनत-प्राणता-ऽऽरणा-ऽच्युता द्वादश कल्पाः। तदुपरि नव ग्रैवेयकाः। तदुपरि विजय-वैजयन्त-जयन्ता-ऽपराजितानि विमानानि प्राक्क्रमात्, मध्ये सर्वार्थसिद्धम्। तदुपरि द्वादशसु योजनेषु पञ्चचत्वारिंशद्योजनलक्षायामविष्कम्भा ईषत्प्राग्भारा नाम पृथ्वी, सा सिद्धशिला। ततोऽप्युपरि गव्यूतत्रयादूर्ध्वं चतुर्थगव्यूतषष्ठभागे आ लोकान्तात् सिद्धाः।

तत्र धरणितलात् समभागात् सौधर्मेशानौ यावत् सार्धा रज्जुः[1]। सनत्कुमार-माहेन्द्रौ[2] यावत् सार्धं रज्जुद्वयम्। सहस्रारं यावत् पञ्च रज्जवः। अच्युतं यावत् षट् रज्जवः। लोकान्तं यावत् सप्त रज्जवः।

सौधर्मेशानौ वृत्तौ चन्द्रमण्डलाकारौ। तत्र दक्षिणार्धे शक्र इन्द्रः, उत्तरार्धे ईशानः। सनत्कुमार-माहेन्द्रावप्येवम्, तत्र दक्षिणार्धे सनत्कुमार उत्तरार्धे माहेन्द्रः। तत ऊर्ध्वं लोकमध्यभागे लोकपुरुषकूर्परसमप्रदेशे ब्रह्मलोकः, तन्नामेन्द्रः, तदेकं[3]-

---

१ सार्धरज्जुः-हे. मु.॥ २ ०महेन्द्रा०-खं.॥ ३ "प्रान्ते सारस्वता-ऽऽदित्या-ऽग्न्यरुण-गर्दतोयकाः। तुषिता-ऽव्याबाध-मरुद्-रिष्टा लोकान्तिकामराः॥७६३॥" इति त्रिषष्टिशलाकापुरुषचरिते द्वितीये पर्वणि तृतीये सर्गे॥

अत्रेदमवधेयम्-मु० विना योगशास्त्रवृत्तेः सर्वेष्वपि हस्तलिखितादर्शेषु 'सारस्वता-ऽऽदित्य-वह्न्यरुण-गर्दतोय-तुषिता-ऽव्याबाध-रिष्टानाम्' इति अष्टानामेव लौकान्तिकानां नामोल्लेखो दृश्यते। यद्यपि 'नव लोकान्तिकाः' इति प्रसिद्धिरस्ति, तथापि अष्टानामपि कथञ्चिदुल्लेखो दृश्यते। तथाहि—

"बंभम्मि य कप्पम्मि बोद्धव्वा कण्हराइणो मज्झे। लोगंतिया विमाणा अट्ठसु वत्था असंखेज्जा॥"

इति आचाराङ्गसूत्रे द्वितीये श्रुतस्कन्धे पञ्चदशेऽध्ययने सू० ७५१, पृ० २६७।

"एतेसि णं अट्ठण्हं कण्हराइणं अट्ठसु उवासंतरेसु अट्ठ लोगंतियविमाणा पण्णत्ता, तंजहा- १ अची, २ अच्चिमाली, ३ वइरोयणे, ४ पभंकरे, ५ चंदाभे, ६ सूराभे, ७ सुक्काभे, ८ सुपतिट्ठाभे, ९ मज्झे रिट्ठाभे। कहि णं भंते! अच्चीविमाणे पण्णत्ते? गोयमा! उत्तरपुरच्छिमेणं। कहि णं भंते! अच्चिमालीविमाणे पण्णते? गोयमा! पुरच्छिमेणं, एवं परिवाडीए नेयव्वं जाव कहि णं भंते! रिट्ठे विमाणे पण्णत्ते? गोयमा। बहुमज्झदेसभागे। एएसु णं अट्ठसु लोगंतियविमाणेसु अट्ठविहा लोगंतियदेवा परिवसंति, तंजहा— सारस्सयमाइच्चा वण्ही वरुणा य गद्दतोया य। तुसिया अव्वाबाहा अग्गिच्चा चेव रिट्ठा य ॥ १ ॥" इति भगवतीसूत्रे षष्ठे शतके पञ्चमे उद्देशके सू० २४३।

"इह चावकाशान्तरवर्त्तिष्वष्टासु अर्चिःप्रभृतिषु विमानेषु वाच्येषु यत् कृष्णराजीनां मध्यभागवर्त्ति रिष्टं विमानं नवममुक्तं तद्विमानप्रस्तावादवसेयम्।" इति अभयदेवसूरिविरचितायां भगवतीसूत्रवृत्तौ। तत्त्वार्थसूत्रस्य दिगम्बरसम्मतपाठपरम्परायां "ब्रह्मलोकालया लौकान्तिकाः ४।२४। सारस्वता-ऽऽदित्य-वह्न्यरुण-गर्दतोय-तुषिता-ऽव्याबाधा-ऽरिष्टाश्च ४।२५" इति पाठः। श्वेताम्बरसम्मतपाठपरम्परायां तु "ब्रह्मलोकालया लो(लौ-प्रत्यन्तरे)कान्तिकाः ४।२५। सारस्वता-ऽऽदित्य-वह्न्यरुण-गर्दतोय-तुषिता-ऽव्यावाध-मरुतोऽरिष्टाश्च (-ऽव्याबाधा-ऽरिष्टा मरुत -प्रत्यन्तरे) ४।२६" इति पाठः। "ब्रह्मलोकालया लोकान्तिकाः ४।२५। ब्रह्मलोकालया एव लोकान्तिका भवन्ति, नान्यकल्पेषु, नापि परतः। ब्रह्मलोकं परिवृत्याष्टासु दिक्षु अष्टविकल्पा भवन्ति। तद्यथा -सारस्वता-ऽऽदित्य-वह्न्यरुण-गर्दतोय-तुषिता-ऽव्याबाध-मरुतो-ऽरिष्टाश्च। एते सारस्वतादयोऽष्टविधा देवा ब्रह्मलोकस्य पूर्वोत्तरादिषु दिक्षु प्रदक्षिणं भवन्ति यथासङ्ख्यम्। तद्यथा-पूर्वोत्तरस्यां दिशि सारस्वताः, पूर्वस्यामादित्या इत्येवं शेषाः" इति ससूत्रे तत्त्वार्थसूत्रभाष्ये पाठः। "ब्रह्मलोकं परिवृत्य अष्टासु दिक्षु अष्टविकल्पा भवन्ति। अत्र दिग्ग्रहणं सामान्येन दिग्विदिक्प्रतिपत्त्यर्थम्। ब्रह्मलोकाधोव्यवस्थितरिष्टविमानप्रस्तारवर्तिन्योऽक्षपाटकसंस्थिता अरुणवरसागरे समुद्भूता अतिबहलतमःकायप्रभवाः कृष्णराज्योऽष्टौ भवन्ति यासां मध्येन प्रयान् देवोऽप्येकः संक्षोभमापद्येतेति। तत्र द्वयोर्द्वयोः कृष्णराज्योर्मध्यभागे एते भवन्ति। ... विमानसाहचर्याद् देवानां सारस्वतादिसंज्ञाः। एते सारस्वतादयोऽष्टविधा देवा इत्यादि सुगमम्। पूर्वो-

॥ ९३७ ॥

देशवासिनः सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधरिष्टाख्या[1] लौकान्तिका[2] देवाः । ततोऽप्युपरि लान्तकः, तन्नामेन्द्रः । ततोऽप्युपरि महाशुक्रः, तन्नामेन्द्रः । ततोऽप्युपरि सहस्रारः, तन्नामेन्द्रः । ततोऽप्युपरि सौधर्मैशानवच्चन्द्राकारावानत-प्राणतौ कल्पौ, तत्र प्राणतवासी तन्नामा तयोरेक इन्द्रः । ततोऽप्युपरि प्राग्वच्चन्द्राकारावारणा-ऽच्युतौ, तत्राच्युतनिवासी तन्नामा तयोरेक इन्द्रः । ततः परमहमिन्द्रा देवाः ।

---

१ ०व्याबाधमरुतारिष्टाख्या–मु. ॥ २ लोका–शां. हे. विना ॥

---

त्तरस्यां दिशि सारस्वता, पूर्वस्यामादित्याः, पूर्वदक्षिणस्यां वह्नय., दक्षिणस्यामरुणाः, दक्षिणापरस्यां गर्दतोयाः, अपरस्यां तुषिताः, अपरोत्तरस्यामव्याबाधाः, उत्तरस्यां मरुतः, मध्येऽरिष्टाः । नन्वेवमेते नवभेदा भवन्ति, भाष्यकृता चाष्टविधा इति मुद्रिताः, उच्यते–लोकान्तवर्तिन एतेऽष्टभेदाः सूरिणोपात्ताः, रिष्टविमानप्रस्तारवर्तिभिर्नवधा भवन्तीत्यदोषः" इति सिद्धसेनगणिविरचितायां तत्त्वार्थभाष्यटीकायाम् पृ० ३०६–३०७ ॥

"पूर्वोत्तरकोणे सारस्वतविमानम्, पूर्वस्यां दिशि आदित्यविमानम्, पूर्वदक्षिणस्यां वह्निविमानम्, दक्षिणस्यामरुणविमानम्, दक्षिणापरकोणे गर्दतोयविमानम्, अपरस्यां दिशि तुषितविमानम्, उत्तरापरस्यामव्याबाधविमानम्, उत्तरस्यामरिष्टविमानम्" इति दिगम्बराचार्येण अकलङ्कदेवेन विरचिते तत्त्वार्थराजवार्तिके ४ । २५ ॥

इदमप्यत्र बोध्यम्–दिगम्बरपरम्परानुसारे अरिष्ट इति पाठः, श्वेताम्बरग्रन्थेष्वपि तत्त्वार्थटीकादिषु अरिष्ट इति शब्दो यद्यपि मुद्रित तथापि तत्रत्यवर्णनानुसारेण रिष्ट इति पाठो ग्रन्थकृतां सम्मत इति प्रतिभाति । तत्त्वार्थटीकायाम् ऽरिष्ट इति अवग्रहस्तु सम्पादककल्पनया मुद्रितो भवेदित्यपि सम्भाव्यते ॥

तत्र प्रथमौ कल्पौ घनोदधिप्रतिष्ठानौ। तदुपरि त्रयो वायुप्रतिष्ठानाः। ततः परं त्रयो घनोदधि-घनवातप्रतिष्ठानाः। तदुपर्याकाशप्रतिष्ठानाः तेष्विन्द्र-सामानिक-त्रायस्त्रिंश-पारिषद्या-ऽऽत्मरक्ष-लोकपाला-ऽनीक-प्रकीर्णका-ऽऽभियोग्य-किल्बिषिका[1] देवाः। तत्रेन्द्राः सामानिकादिभेदानां नवानामधिपतयः। इन्द्रसमानाः सामानिका अमात्य-पितृ-गुरूपाध्याय-महत्तरवत् केवलमिन्द्रत्वहीनाः १। त्रायस्त्रिंशा मन्त्रि-पुरोहितस्थानीयाः २। पारिषद्या वयस्यस्थानीयाः ३। आत्मरक्षा अङ्गरक्ष-स्थानीयाः ४। लोकपाला [2]आरक्षिकार्थचरस्थानीयाः ५। अनीकान्यनीकस्थानीयानि, तदधिपतयो दण्डनायकस्थानीया अप्यनीकानि ६। प्रकीर्णकाः पौर-जनपदस्थानीयाः ७। आभियोग्या दासस्थानीयाः ८। किल्बिषिका [3]अन्तस्थस्थानीयाः ९। त्रायस्त्रिंश-लोकपालवर्जा व्यन्तर-ज्योतिष्काः।

सौधर्मे विमानानां द्वात्रिंशल्लक्षाः। ऐशानेऽष्टाविंशतिः। सनत्कुमारे द्वादश। माहेन्द्रेऽष्टौ। ब्रह्मलोके चत्वारः। लान्तके पञ्चाशत् सहस्राणि। महाशुक्रे चत्वारिंशत् सहस्राणि, सहस्रारे षट्। आनत-प्राणतयोश्चत्वारि शतानि, आरणा-ऽच्युतयोस्त्रीणि। प्रथमे ग्रैवेयकत्रिके एकादशोत्तरं शतम्। [4]मध्यमत्रिके सप्तोत्तरम्। उपरित्रिके एकमेव शतम्। अनुत्तरविमानानि पञ्चैव इति।

---

१ ०किल्बिषा देवा –खं.॥ २ आरक्षकार्थ०–मु.। तत्त्वार्थभाष्ये [४।४] 'आरक्षिकार्थचरस्थानीयाः' इत्येव पाठः। "लोकपाला आरक्षकार्थचरस्थानीयाः, स्वविषयसन्धिरक्षणनिरूपिता आरक्षकाः, अर्थचराश्चौरोद्धरणिकराजस्थानीयादयः, तत्सदृशा लोकपालाः" इति तु सिद्धसेनगणिविरचितायां तत्त्वार्थटीकायाम् पृ० २७६॥ ३ अन्तजस्थानीयाः–शां.। "अन्तस्थाः चण्डालादय', तद्वत् किल्बिषिका देवानां मध्ये" इति तत्त्वार्थटीकायां सिद्धसेनगणिविरचितायाम् ४।४॥ ४ मध्यमे त्रिके–मु. शां.॥

॥ ९३९ ॥

एवं विमानानां चतुरशीतिर्लक्षाः सप्तनवतिश्च सहस्राणि त्रयोविंशानीति। विजयादिषु चतुर्ष्वनुत्तरविमानेषु द्विचरमा देवाः। सर्वार्थसिद्धे त्वेकचरमाः।

एतेषु च सौधर्मादारभ्य सर्वार्थसिद्धं यावद्देवाः स्थित्या प्रभावेण सुखेन दीप्त्या लेश्यया विशुद्धया इन्द्रियविषयेण अवधिज्ञानविषयेण च पूर्वपूर्वेभ्य उत्तरोत्तरेऽधिकाः, गत्या शरीरेण परिग्रहेणाभिमानेन च [1]हीनहीनतराः। उच्छ्वासः सर्वजघन्यस्थितीनां भवनपत्यादीनां देवानां सप्तस्तोकान्ते, आहारश्चतुर्थान्ते। पल्योपमस्थितीनामन्तर्दिवसस्योच्छ्वासः, दिवस-पृथक्त्वतश्चाहारः। यस्य यावन्ति सागरोपमाणि तस्य तावत्स्वर्धमासेषूच्छ्वासः, तावत्स्वेव वर्षसहस्रेष्वाहारः। देवाश्च सद्वेदनाः प्रायेण भवन्ति, यदि चासद्वेदना भवन्ति ततोऽन्तर्मुहूर्तमेव, न परतः।

लोक-भावनायाम् उर्ध्वलोक-स्वरूपम्

उत्पत्तिर्देवीनामा ईशानात्, गमनं च आ अच्युतात्। तापसानामा ज्योतिष्कादुत्पत्तिः। आ ब्रह्मलोकाच्चरकपरिव्राज-कानाम्। पञ्चेन्द्रियतिरश्चामा सहस्रारात्। मनुष्यश्रावकाणामा अच्युतात्। मिथ्यादृष्टीनां प्रतिपन्नजिनलिङ्गानां यथोक्त-सामाचारीपरिपालकानामा नवमग्रैवेयकात्। चतुर्दशपूर्वधराणां ब्रह्मलोकादूर्ध्वमा सर्वार्थसिद्धात्। अविराधितव्रतानां साधूनां श्रावकाणां च जघन्येन सौधर्मे।

भवनवास्यादयो देवा आ [2]ऐशानात् कायप्रवीचाराः। ते हि संक्लिष्टकर्माणो मनुष्यवन्मैथुनसुखमनुप्रलीयमानास्तीव्रा-नुशयाः कायसंक्लेशजं सर्वाङ्गीणं स्पर्शसुखमवाप्य प्रीतिमुपलभन्ते [3]इति। शेषाः स्पर्श-रूप-शब्दप्रवीचारा द्वयोर्द्वयोः, चतुर्षु

१ हीना हीनतराः–खं.॥ २ ईशानात्–मु.॥ ३ इति–नास्ति खं.॥

मनःप्रवीचाराः, परेष्वप्रवीचाराः प्रवीचारवद्भ्यो देवेभ्योऽनन्तगुणसुखा इति। अयमधस्तिर्यगूर्ध्वभेदो लोकः। अस्य च मध्ये रज्जुप्रमाणायामविष्कम्भा ऊर्ध्वाधश्चतुर्दशरज्ज्वात्मिका त्रसनाडी, त्रसाः स्थावराश्च जीवा अत्र भवन्तीति कृत्वा। त्रसनाड्या वहिः स्थावरा एव जीवा भवन्तीति ॥ १० ॥

लोकस्यैव स्वरूपविशेषमाह[2]—

निष्पादितो न केनापि न धृतः केनचिच्च सः।
स्वयंसिद्धो निराधारो गगने किं त्ववस्थितः ॥ १०६ ॥

निष्पादितः कृतो न केनापि प्रकृती-श्वर-विष्णु-ब्रह्म-पुरुषप्रभृतीनामन्यतमेन। प्रकृतेरचेतनत्वात् कर्तृत्वानुपपत्तेः। ईश्वरादीनां च न कर्तृत्वं प्रयोजनाभावात्। क्रीडा प्रयोजनमिति चेत्, न, क्रीडायाः कुमारकाणामिव रागिणामेव संभवात्, क्रीडासाध्यायाश्च प्रीतेस्तेषां शाश्वतिकत्वात्, क्रीडानिमित्तायां तु प्रीतौ तेषां पूर्वमतृप्तत्वप्रसङ्गः। कृपया प्रवृत्तिरिति चेत् तर्हि सुख्येव सर्गः स्यात्, न दुःखी। कर्मापेक्षः सुख-दुःखमयः सर्ग इति चेत् तर्हि कर्मैव कारणमस्तु। कर्मापेक्षत्वे चैषां स्वातन्त्र्यविघातः। कर्मजन्ये च वैचित्र्ये किमीश्वरादिभिः प्रयोजनम्?। अथ प्रयोजनमन्तरेणैव तेषां सर्गक्रमः, तदयुक्तम्, न हि प्रयोजनमन्तरेण बालोऽपि किञ्चित् करोति, तस्मान्न केनचिदयं लोको निष्पादित इति।

---

१ एतच्च लोकस्वरूपं त्रिषष्टिशलाकापुरुषचरितेऽपि द्वितीये पर्वणि तृतीये सर्गे [श्लो० ४७९–८००] प्राय ईदृशमेव वर्णितमस्ति। जिज्ञासुभिस्तत्र द्रष्टव्यम्॥ २ विशेषस्वरूपमाह–मु.॥

न च केनचिदयं ध्रियते, शेष-कूर्म-वराहादयस्तस्य धारका इति चेत् तेषामपि किं धारकमिति वाच्यम्, आकाशमिति चेत् तस्यापि किं धारकम्? स्वप्रतिष्ठमेवेदमिति चेत्, लोकोऽपि तथास्तु। एवं च सति केनचिदनुत्पादितत्वात् स्वयंसिद्धः, केनचिदधृतत्वान्निराधारः। ननु निराधारस्यापि तस्य कुत्रावस्थानम्? इत्याह—गगने किं त्ववस्थितः, आकाशरूप एवायमाकाशे च प्रतिष्ठितः इत्यर्थः।

अत्रान्तरश्लोकाः—

ननु लोकभावनाया भावनात्वं कथं भवेत्। उच्यते निर्ममत्वं स्यादितोऽपि हि निशम्यताम् ॥ १ ॥
सुखहेतौ क्वचिद्भावे मनो रज्यन्मुहुर्मुहुः। लोकभावनयाऽत्यर्थं विप्रकीर्णं विधीयते ॥ २ ॥
भू-द्वीप-सागरादीनि धर्मध्यानस्य गोचरः। इत्युक्तं ध्यानशतके[1] नर्ते तल्लोकभावनाम् ॥ ३ ॥
जिनोक्ते लोकरूपे च संवादिनि विनिश्चिते। अतीन्द्रिये मोक्षमार्गेऽप्याधत्ते प्रत्ययं जनः ॥ ४ ॥

लोकभावना[2] ॥ ११ ॥ १०६ ॥

बोधिदुर्लभत्वभावना-वर्णनम्

अथ बोधिदुर्लभत्वभावनां श्लोकत्रयेणाह—

**अकामनिर्जरारूपात् पुण्याज्जन्तोः प्रजायते।**
**स्थावरत्वात् त्रसत्वं वा तिर्यक्त्वं वा कथञ्चन ॥ १०७ ॥**

---

१ "खिइवलयदीवसागरनरयविमाणभवणाइसंठाणं। वोमाइपइट्ठाणं निययं लोगट्ठिइविहाणं ॥ ५४ ॥" इति ध्यानशतके ॥
२ इति लोकभावना-मु॰ ॥

अकामनिर्जरा यथाप्रवृत्तिकरणेन गिरिसरिदुपलघोलनाकल्पेनाकामस्य निरभिलाषस्य या निर्जरा कर्मप्रदेशविचटनरूपा सैव रूपं यस्य तस्मात् । पुण्यादिति पुण्यं न पुण्यप्रकृतिरूपम्, किन्तु कर्मलाघवरूपम्, तस्मात् । जन्तोः शरीरिणः प्रजायते भवति । किं तदित्याह–स्थावरत्वादेकेन्द्रियजातिसहचारिस्थावरनामकर्मोदयकृतात् पर्यायविशेषात्, त्रसत्वं वा त्रसनामकर्मोदयजं द्वीन्द्रियत्वादिसहचारि, तिर्यक्त्वं वा पञ्चेन्द्रियतिर्यग्रूपता, कथञ्चन विशिष्टात् कर्मलाघवात् ॥ १०७ ॥

तथा—

मानुष्यमार्यदेशश्च जातिः सर्वाक्षपाटवम् ।
आयुश्च प्राप्यते तत्र कथञ्चित् कर्मलाघवात् ॥ १०८ ॥

मानुषस्य भावो मानुष्यं कुतोऽपि कर्मलाघवात् युगच्छिद्रे शमिलाप्रवेशन्यायेन । ततोऽपि शक-यवनाद्यनार्यदेशपरिहारेणाऽऽर्यदेशो मगधादिः । ततोऽप्यार्यदेशप्राप्तावपि जातिः अन्त्यजादिपरिहारेणोत्तमजातिः, जात्या कुलमुपलक्ष्यते । जाति-कुल-प्राप्तावपि सर्वाक्षपाटवमहीनपञ्चेन्द्रियता । तत्र सर्वाक्षपाटवेऽपि दीर्घमायुः कथञ्चित्कर्मलाघवात् अशुभस्य कर्मणो लाघवात् अपचयात्, उपलक्षणात् पुण्यस्योपचयाच्च प्राप्यते, न ह्यल्पायुः किञ्चनैहिकमामुष्मिकं वा कार्यं कर्तुं शक्तः, भगवन्तोऽपि वीतरागा "हे आयुष्मन्! गौतम!" इत्यादि वदन्तो दीर्घायुष्ट्वं सर्वगुणेभ्योऽधिकमाचचक्षिरे ॥ १०८ ॥

तथा—

प्राप्तेषु पुण्यतः श्रद्धा-कथक-श्रवणेष्वपि ।
तत्त्वनिश्चयरूपं तद्बोधिरत्नं सुदुर्लभम् ॥ १०९ ॥

पुण्यतः कर्मलाघवलक्षणात् शुभकर्मोदयलक्षणाच्च प्राप्तेष्वासादितेषु। केषु? इत्याह—श्रद्धा धर्माभिलाषः, कथको धर्मोपदेष्टा गुरुः, श्रवणं तद्वचनाकर्णनम्, एतेषु सत्स्वपि। तदिति प्रसिद्धम्, बोधिरत्नं सुदुर्लभम्, बोधिस्तु तत्त्वनिश्चयः, तत्त्वस्य देव-गुरु-धर्मरूपस्य निश्चयो दृढोऽभिनिवेशः, तदेव रूपं यस्य तत् तत्त्वनिश्चयरूपम्। स्थावरत्वात् त्रसत्वादीन्यपि दुर्लभानि, तेभ्योऽपि बोधिरत्नं दुर्लभमिति 'सु'शब्देनाह। यतो मिथ्यादृशोऽपि त्रसत्वादीनि श्रवणान्तान्यनन्तशः प्राप्नुवन्ति, बोधिरत्नं तु न लभन्ते, तच्चाविघ्नं मोक्षतरुबीजमिति।

अत्रान्तरश्लोकाः—

राज्यं वा चक्रभृत्त्वं वा शक्रत्वं वा न दुर्लभम्। यथा जिनप्रवचने बोधिरत्यन्तदुर्लभा ॥ १ ॥

सर्वे भावाः सर्वजीवैः प्राप्तपूर्वा अनन्तशः। बोधिर्न जातुचित् प्राप्ता भवभ्रमणदर्शनात् ॥ २ ॥

पुद्गलानां परावर्तेष्वनन्तेषु गतेष्विह। उपार्धे[2] पुद्गलावर्ते शेषे सर्वशरीरिणाम् ॥ ३ ॥

सर्वेषां कर्मणां शेषे कोटीकोटीप्रमाणके[3]। ग्रन्थिभेदात् कश्चिदेव लभते बोधिमुत्तमाम् ॥ ४ ॥

यथाप्रवृत्तिकरणादन्ये तु ग्रन्थिसीमनि। प्राप्ता अप्यवसीदन्ति भ्रमन्ति च पुनर्भवम् ॥ ५ ॥

कुशास्त्रश्रवणं सङ्गो मिथ्यादृग्भिः कुवासना। प्रमादशीलता चेति स्युर्बोधेः परिपन्थिनः ॥ ६ ॥

चरित्रस्यापि[4] सम्प्राप्तिर्दुर्लभा यद्यपीरिता। तथापि बोधिप्राप्तौ सा सफला निष्फलाऽन्यथा ॥ ७ ॥

१ ०रत्नसुदुर्लभ०-शां.॥ २ उपार्धपुद्गला०-मु.॥ ३ कोटिकोट्यन्तरस्थितौ-मु.॥ ४ चारित्र०-मु.॥

अभव्या अपि चारित्रं प्राप्य ग्रैवेयकादिषु । उत्पद्यन्ते विना बोधिं त्वाप्नुवन्ति न निर्वृतिम्[1] ॥ ८ ॥
असंप्राप्ते बोधिरत्ने चक्रवर्त्यपि रङ्कवत् । संप्राप्तबोधिरत्नस्तु रङ्कोऽपि स्यात्ततोऽधिकः ॥ ९ ॥
संप्राप्तबोधयो जीवा न रज्यन्ते भवे क्वचित् । निर्ममत्वा भजन्त्येकं मुक्तिमार्गमनर्गलाः ॥ १० ॥
ये प्राप्ताः परमं पदं तदपरे प्राप्स्यन्ति ये केऽपि वा, ये वा केचिदवाप्नुवन्ति विकसत्पुण्यर्द्धयः संप्रति ।
सर्वेऽप्यप्रतिमप्रभावविभवां बोधिं समासाद्य ते, तस्माद्बोधिरुपास्यतां किमपरं संस्तूयतां स्तूयताम्[2] ॥ ११ ॥

बोधिभावना[3] १२ ॥ १०९ ॥ ॥

भावनां निर्ममत्वहेतुकामुपसंहरन् प्रकृते समत्वे योजयति—

भावनाभिरविश्रान्तमिति भावितमानसः ।
निर्ममः सर्वभावेषु समत्वमवलम्बते ॥ ११० ॥

स्पष्टः ॥ ११० ॥

साम्यस्यैव फलमाह—

विषयेभ्यो विरक्तानां साम्यवासितचेतसाम् ।
उपशाम्येत् कषायाग्निर्बोधदीपः[4] समुन्मिषेत् ॥ १११ ॥

१ निवृतिम्–संपू. । निवृत्तिम्–हे. ॥ २ स्तूयतां–नास्ति खं. । श्रूयताम्–मु. ॥ ३ इति बोधि०–मु. ॥ ४ ०बौधिदीपः–मु. ॥

॥ ९४५ ॥

साम्यवासितचेतसां योगिनामत एव विषयेभ्यो विरक्तानामुपशाम्येत् कषायाग्निरित्यनर्थनिषेधः, बोधदीपः समुन्मिषेदित्यर्थप्राप्तिः ॥ १११ ॥

तदेवं कषायजयमिन्द्रियजयेन, इन्द्रियजयं मनःशुद्ध्या, मनःशुद्धिं राग-द्वेषजयेन, राग-द्वेषजयं समत्वेन, समत्वं च भावनाहेतुकनिर्ममत्वेन प्रतिपाद्योत्तरं प्रकरणं प्रक्रमते—

साम्यफलाभिधानम्

समत्वमवलम्ब्याथ ध्यानं योगी समाश्रयेत् ।
विना समत्वमारब्धे ध्याने स्वात्मा विडम्ब्यते ॥ ११२ ॥

अथानन्तरं योगी मुनिः समत्वमवलम्ब्य दृढं चेतसि व्यवस्थाप्य ध्यानं वक्ष्यमाणलक्षणं समाश्रयेत् कुर्यात्[2] । यद्यपि ध्यानमपि समत्वरूपमेव[3], तथापि विशिष्टतरं साम्यं ध्यानमुच्यते, ध्यानरूपतायोग्यं त्वाभ्यासिकं साम्यमिति न पौनरुक्त्यम् । व्यतिरेकमाह—अनुप्रेक्षादिबललब्धं समत्वं विनाऽऽरब्धे ध्याने स्वकीय एवात्मा विडम्ब्यते । तथाहि—

इन्द्रियाणि न गुप्तानि मनःशुद्धिर्न वा कृता । राग-द्वेषौ[4] न च जितौ निर्ममत्वं न निर्मितम् ॥ १ ॥
नाभ्यस्ता समता किन्तु गतानुगतिकत्वतः । मूढैरारभ्यते ध्यानं लोकद्वयपथच्युतैः ॥ २ ॥

यथाविधि[5] तु ध्यानं विधीयमानं न विडम्बनाय, प्रत्युतात्महिताय ॥ ११२ ॥

---

१ बोधिदीपः–हेसं. मु. ॥ २ कुर्यात्–नास्ति मु. ॥ ३ समत्वमेव–मु. ॥ ४ रागद्वेषौ जितौ नैव–मु. ॥ ५ यथाविधि ध्यानं तु विधीयमानं न विडम्बना, प्रत्युतात्महिताय–मु. ॥

एतदेवाह—

मोक्षः कर्मक्षयादेव स चात्मज्ञानतो भवेत् ।
ध्यानसाध्यं मतं तच्च तद्ध्यानं हितमात्मनः ॥ ११३ ॥

मोक्षः स्वरूपलाभलक्षणः कर्मणां स्वरूपावरणीयानां क्षयादेव, नान्यथा इत्येतदविवादसिद्धम्। स च कर्मक्षय आत्मज्ञानादेव भवतीत्यत्राप्यविवादः। तच्चात्मज्ञानं ध्यानसाध्यं 'ध्यानेनैव साध्यते, ध्यानस्य साध्यमेव' इत्यन्ययोगव्यवच्छेद-स्वयोगव्यवस्थाभ्यां ध्यानसाध्यता। तत् तस्माद्धेतोर्ध्यानमात्मनो हितमिति प्रकृतम् ॥ ११३ ॥

ननु पूर्वमर्थप्राप्तयेऽनर्थपरिहाराय च साम्यमुक्तम्, इदानीं तु ध्यानस्यात्महितत्वमुच्यते, तत् कस्य प्राधान्यम्? उच्यते–द्वयोरपि प्राधान्यं नान्तरीयकत्वात् ॥ ११३ ॥

एतदेवाह—

न साम्येन विना ध्यानं न ध्यानेन विना च तत् ।
निष्कम्पं जायते तस्माद् द्वयमन्योन्यकारणम् ॥ ११४ ॥

साम्यं विना न ध्यानं भवति, न च ध्यानं विना साम्यं भवति। एवं तर्हीतरेतराश्रयम्? नैवम्, साम्यमन्तरेण ध्यानं न भवत्येव, ध्यानं तु विना साम्यं भवदपि निष्कम्पं न भवतीति इतरेतराश्रयदोषाभावः। एवं च सति द्वयमन्योन्यस्य हेतुत्वेनावतिष्ठते ॥ ११४ ॥

॥ ९४७ ॥

साम्यं पूर्वमेव व्याख्यातम्, इदानीं ध्यानस्य स्वरूपं व्याख्यायते—

मुहूर्त्तान्तर्[1]मनःस्थैर्यं ध्यानं छद्मस्थयोगिनाम् ।
धर्म्यं शुक्लं च तद् द्वेधा योगरोधस्त्वयोगिनाम् ॥ ११५ ॥

ध्यान-स्वरूपाभि-धानम्

इह द्वये ध्यातारः-सयोगा अयोगिनश्च। संयोगा अपि द्विविधाः-छद्मस्थाः केवलिनश्च। तत्र छद्मस्थयोगिनां ध्यानस्य लक्षणमेतत्— यदुतान्तर्मुहूर्त्तं कालमेकस्मिन्नालम्बने चेतसः स्थितिः, यदाह—"उत्तमसंहननस्यैकाग्रचिन्तानिरोधो ध्यानमा मुहूर्त्तात्" [ तत्त्वार्थ० ९।२७-२८ ]। तच्च[2] छद्मस्थयोगिनां ध्यानं द्वेधा-धर्म्यं शुक्लं च। तत्र धर्माद् दशविधादनपेतं धर्मेण प्राप्यं वा धर्म्यम्। शुक्लं शुचि निर्मलं सकलकर्ममलक्षयहेतुत्वात्। यद्वा शुग् दुःखं तत्कारणं वाऽष्टविधं कर्म, शुचं क्लमयतीति शुक्लम्। अयोगिनां तु अयोगिकेवलिनां ध्यानं योगनिरोधः, योगानां मनोवाक्कायानां निरोधो निग्रहः। सयोगिकेवलिनां तु योगनिरोधकाल एव ध्यानसंभव इति पृथग् नोक्तं, ते हि देशोनपूर्वकोटीं[3] यावन्मनोवाक्कायव्यापारयुक्ता एव विहरन्ति। अपवर्गकाले तु योगनिरोधं कुर्वन्तीति ॥ ११५ ॥

ननु छद्मस्थयोगिनां यदि मुहूर्त्तकालं ध्यानं तर्हि ततः परं किं स्यादित्याह—

मुहूर्त्तात् परतश्चिन्ता यद्वा ध्यानान्तरं भवेत् ।
बह्वर्थसंक्रमे[4] तु स्याद्दीर्घाऽपि ध्यानसंततिः ॥ ११६ ॥

---

१ ०मान्तर्मुहूर्त्तात्-मु.॥ २ तत्र-खं.॥ ३ ०कोटिं-मु.। ४ संगमे-शां.। संक्रमे-खं.॥

मुहूर्त्तात् परतो मुहूर्त्तोत्तरकालं चिन्ता भवेत्, यद्वा ध्यानान्तरं आलम्बनभेदेन भिन्नं ध्यानं भवेत्, न पुनरेकमेव ध्यानं मुहूर्त्तात् परतो भवति तत्स्वाभाव्यादिति। एवं चैकस्मादर्थाद् द्वितीयमर्थमालम्बमानस्य पुनस्तृतीयं चतुर्थं च दीर्घाऽपि दीर्घकालाऽपि ध्यानसंततिर्भवेत्, मुहूर्त्तानन्तरं च प्रथमे ध्याने समाप्तप्राये आलम्बनान्तरे तद्विवृद्ध्यर्थं ध्यानभावनाः कुर्वीत ॥ ११६ ॥

तदेवाह—

मैत्री-प्रमोद-कारुण्य-माध्यस्थ्यानि नियोजयेत् ।
धर्म्यध्यानमुपस्कर्तुं तद्धि तस्य रसायनम् ॥ ११७ ॥

" ञिमिदाच् स्नेहने " [ धा० पा० ४।३७ ], मेद्यति स्निह्यतीति मित्रम्, तस्य भावः समस्तसत्त्वविषयः स्नेहपरिणामो मैत्री। प्रमोदनं प्रमोदो वेदनप्रसादादिभिर्गुणाधिकेष्वभिव्यज्यमानान्तर्भक्तिरनुरागः। करुणैव कारुण्यं दीनादिष्वनुकम्पा। रागद्वेषयोरन्तरालं मध्यम्, तत्र स्थितो मध्यस्थः अरागद्वेषवृत्तिः, तद्भावो माध्यस्थ्यमुपेक्षा। तानि आत्मनि नियोजयेत्। किमर्थम्? धर्म्यध्यानमुपस्कर्तुं त्रुट्यतो ध्यानस्य पुनर्ध्यानान्तरेण सन्धानं कर्तुम्। कुत इत्याह—तद्धि तस्य रसायनम्, तत् मैत्र्यादिनियोजनं हि यस्मात्तस्य ध्यानस्य जराजर्जरस्येव शरीरस्य त्रुट्यतो रसायनमिव रसायनम् ॥ ११७ ॥

---

१ भनःप्रसादा०–शां.॥ २ धर्मध्यान०–शां.॥

धर्मध्यानार्थं मैत्र्यादि-भावना-चतुष्टयस्य स्वरूपम्

तत्र मैत्रीस्वरूपमाह—

मा कार्षीत् कोऽपि पापानि मा च भूत् कोऽपि दुःखितः ।
मुच्यतां जगदप्येषा मतिर्मैत्री निगद्यते ॥ ११८ ॥

कोऽपि जन्तुरुपकार्यनुपकारी वा पापानि दुःखनिबन्धनानि मा कार्षीत्, पापकरणनिषेधात् मा च भूत् कोऽपि दुःखितः। जगदिति तांस्तान् देव-मानुष-तिर्यग्-नारकपर्यायानत्यर्थं गच्छतीति जगत् प्राणिजातम्। अपिशब्दान्नैकः कश्चित्, किन्तु सकलं जगत् मुच्यतां मोक्षमाप्नुयादित्यर्थः। एषा उक्तस्वरूपा मतिर्मैत्रीशब्देनोच्यते। न हि कस्यचिदेकस्य मित्रं मित्रं भवति, व्याघ्रादेरपि स्वापत्यादौ मैत्रीदर्शनात्, तस्मादशेषसत्त्वविषया मैत्री मैत्री। एवं 'कृतापकाराणामपि सर्वसत्त्वानां मित्रतां व्यवस्थाप्य क्षमेऽहं सम्यग्मनोवाक्कायैर्येषां च मयाऽपकारः कृतस्तानपि सर्वान् क्षमयेऽहम्' इति मैत्रीभावना ॥ ११८ ॥

अथ प्रमोदस्वरूपमाह—

अपास्ताशेषदोषाणां वस्तुतत्त्वावलोकिनाम् ।
गुणेषु पक्षपातो यः स प्रमोदः प्रकीर्तितः ॥ ११९ ॥

अपास्ता अशेषा दोषाः प्राणिवधादयो यैस्तेषाम्। तथा वस्तुतत्त्वमवलोकन्त इत्येवंशीलास्तेषाम्। अनेन ज्ञान-क्रियाद्वयं मोक्षहेतुमाह, यदाह भाष्यकारः—

---

१ ०दविशेषतया मैत्री मैत्री–शां. ॥

"नाणकिरियाहि मोक्खो" [ विशेषावश्यकभाष्ये गा० ३ ] इति।

एवंविधानां मुनीनां गुणेषु क्षायोपशमिकादिभावावर्जितेषु शम-दमौचित्य-गाम्भीर्य-धैर्यादिषु यः पक्षपातो विनय-प्रयोग-वन्दन-स्तुति-वर्णवाद-वैयापृत्यकरणादिभिः परात्मोभयकृतपूजाजनितश्च सर्वेन्द्रियाभिव्यक्तो मनःप्रहर्षः स प्रमोदः प्रकीर्तितः ॥ ११९ ॥

अथ कारुण्यस्वरूपमाह—

दीनेष्वार्त्तेषु भीतेषु याचमानेषु जीवितम्।
प्रतीकारपरा बुद्धिः कारुण्यमभिधीयते ॥ १२० ॥

दीनेषु मतिश्रुताज्ञान-विभङ्गबलेन प्रवर्तितकुशास्त्रेषु स्वयं नष्टेषु परानपि नाशयत्सु अत एव दयास्पदत्वाद्दीनेषु। तथाऽऽर्त्तेषु नवनवविषयार्जन-पूर्वार्जितपरिभोगजनिततृष्णाग्निना दन्दह्यमानेषु, हिताहितप्राप्तिपरिहारविपरीतवृत्तिषु अर्थार्जन-रक्षण-व्यय-नाशपीडावत्सु च। तथा भीतेषु विविधदुःखपीडिततया अनाथ-कृपण-बाल-वृद्ध-प्रेष्यादिषु सर्वतो बिभ्यत्सु। तथा वैरिभिराक्रान्तेषु रोगपीडितेषु मृत्युमुखमधिशयितेष्विव याचमानेषु प्रार्थयमानेषु जीवितं प्राणत्राणम्। एषु दीनादिषु 'अहो कुशास्त्रप्रणेतारः तपस्विनो यदि कुमार्गप्रणयनान्मोच्येरन्, भगवानपि हि भुवनगुरुः उन्मार्गदेशनात् सागरोपमकोटीकोटीं यावद्भवे भ्रान्तः, तत् काऽन्येषां स्वपापप्रतीकारं कर्तुमशक्नुवतां गतिः ?,' तथा 'धिगमी विषयार्जनभोगतरलहृदया अनन्त-

१ ज्ञानक्रियाभ्यां मोक्षः॥ २ ०वैयावृत्य०–हे। ०वैयावृत्त्य०–मु.॥ ३ ०वृत्तिषु रोगपीडितेषु अर्थार्जन०–शां.॥ ४ ०बाल०–नास्ति मु.॥ ५ एतेषु–मु.॥ ६ ०कोटिकोटिं–मु.॥

॥ ९५१ ॥

भवानुभूतेष्वपि विषयेष्वसंतृप्तमनसः कथं नाम प्रशमामृततृप्ततया वीतरागदशां नेतुं शक्याः ?' इति, तथा 'बाल-वृद्धादयोऽपि विविधभयहेतुभ्यो भीतमनसः कथं नामैकान्तिकात्यन्तिकभयवियोगभाजनीकरिष्यन्ते ?' इति, तथा 'मृत्युमुखमधिशयिताः स्वधन-दार-पुत्रादिवियोगमुत्प्रेक्षमाणा मारणान्तिकीं पीडानुभवन्तः सकलभयरहितेन पारमेश्वरवचनामृतेन सिक्ताः कथमजरामरीकरिष्यन्ते ?' इत्येवं प्रतीकारपरा या बुद्धिः, न तु साक्षात्प्रतीकार एव, तस्य सर्वेष्वशक्यक्रियत्वात्, सा कारुण्यमभिधीयते। या तु अशक्यप्रतीकारेषु 'सर्वान् जन्तून् मोचयित्वा मोक्षं यास्यामि' इति सौगतानां करुणा न सा करुणा, वाङ्मात्रत्वात्, न ह्येवं शक्यं भवितुं 'सर्वसंसारिषु मुक्तेषु मया मोक्तव्यम्' इति, संसारोच्छेदप्रसङ्गेन सर्वसंसारिणां मुक्त्यभावात्, तस्माद्वाङ्मात्रमेतत् मुग्धजनप्रतारकं सौगतानां कारुण्यम्। एतच्च कुर्वन् हितोपदेश-कालापेक्षान्न-पाना-ऽऽश्रय-वस्त्र-भेषजैरपि[1]ताननुगृह्णातीति ॥ १२० ॥



अथ माध्यस्थ्यस्वरूपमाह—

क्रूरकर्मसु निःशङ्कं देवता-गुरुनिन्दिषु ।
आत्मशंसिषु योपेक्षा तन्माध्यस्थ्यमुदीरितम् ॥ १२१ ॥

क्रूराणि अभक्ष्यभक्षणा-ऽपेयपाना-ऽगम्यागमन-ऋषिबालस्त्रीभ्रूणघातादीनि कर्माणि येषां तेषु, तेऽपि कदाचिदवाप्तसंवेगा नोपेक्षणीयाः स्युरत आह– देवता-गुरुनिन्दिषु, देवताश्चतुस्त्रिंशदतिशयादियुक्ता वीतरागाः, गुरवः तदुक्तानुष्ठानस्य पालका

१ ०भैषजै०-शां.खं. ॥

उपदेष्टारश्च, तान् रक्त-द्विष्ट-मूढ-पूर्वव्युद्ग्राहिततया निन्दन्तीत्येवंशीलाः तेषु, तथाविधा अपि कथञ्चन वैराग्यदशापन्ना आत्मदोषदर्शिनो नोपेक्षणीयाः स्युरित्याह—आत्मशंसिषु, आत्मानं सदोषमपि शंसन्ति प्रशंसन्तीत्येवंशीला आत्मबहुमानिन इत्यर्थः, तेषु मुद्गशैलेष्विव पुष्करावर्त्तवारिभिर्मृदूकर्तुमशक्येषु देशनाभिः योपेक्षा तन्माध्यस्थ्यमुदीरितम् ॥ १२१ ॥

अथ यदुक्तं 'धर्मध्यानमुपस्कर्तुम्' [ ४।११७ ] इति तद्विवेचयति—

आत्मानं भावयन्नाभिर्भावनाभिर्महामतिः ।
त्रुटितामपि संधत्ते विशुद्धध्यानसंततिम् ॥ १२२ ॥

स्पष्टम् ॥ १२२ ॥

ध्यानसाधनाय स्थानं निर्दिशति—

तीर्थं वा स्वस्थताहेतुं यत्तद्वा ध्यानसिद्धये ।
कृतासनजयो योगी विविक्तं स्थानमाश्रयेत् ॥ १२३ ॥

तीर्थं तीर्थकृतां जन्म-दीक्षा-ज्ञान-निर्वाणभूमिम्, तदभावे स्वास्थ्यहेतुं यत्तद्वा गिरिगुहादि विविक्तं स्त्री-पशु-पण्डकादि-रहितं स्थानमाश्रयेत्। यदाह—

१ ०तलिप्रसंसया निन्दन्ती०–शां. ॥ २ ०हामुनिः–खं. ॥ ३ ०निर्वाणहेतुं–खं. ॥

"निच्चं[1] चिअ जुवइ-पसू-नपुंसग-कुसीलवज्जियं जइणो ।
ठाणं विअणं भणिअं विसेसओ झाणकालम्मि ॥ १ ॥
थिरकयजोगाणं पुण मुणीण झाणे सुनिच्चलमणाणं ।
गामम्मि जणाइण्णे सुन्नेऽरण्णे व न विसेसो ॥ २ ॥
तो[2] जत्थ समाहाणं होइ मणो-वयण-कायजोगाणं ।
भूओवरोहरहिओ सो देसो झायमाणस्स ॥ ३ ॥" [ध्यानशतके गा० ३५-३७]

स्थानग्रहणेन कालोऽप्युपलक्ष्यते । यदाह—

"कालो[3] वि सो च्चिय जहिं जोगसमहाणमुत्तमं लहइ ।
न उ दिवसनिसावेलाए निअमणं झाइणो भणिअं ॥ १ ॥" [ध्यानशतके गा० ३८]



ध्यानोप-योगि-स्थान-स्वरूपम्

---

१ नित्यमेव युवति-पशु-नपुंसक-कुशीलवर्जितं यतेः । स्थानं विजन भणितं विशेषतो ध्यानकाले ॥ स्थिरकृतयोगानां पुनर्मुनीनां ध्याने सुनिश्चलमनसाम् । ग्रामे जनाकीर्णे शून्येऽरण्ये वा न विशेषः ॥ ततो यत्र समाधानं भवति मनोवचनकाययोगानाम् । भूतोपरोधरहितः स देशो ध्यायतः ॥ २ जो जत्थ-खं. ॥
३ कालोऽपि स एव यत्र योगसमाधानमुत्तमं लभते । न तु दिवसनिशावेलाया नियमनं ध्यायिनो भणितम् ॥

ध्यानसिद्धये योगी स्थानमाश्रयेदिति संबन्धः । किंविशिष्टः ? कृतासनजयः, कृत आसनानां कायसन्निवेशविशेषाणां
॥९५३॥ वक्ष्यमाणस्वरूपाणां जयोऽभ्यासो येन स तथा ॥ १२३ ॥

अथासनान्येवाह—

पर्यङ्क-वीर-वज्रा-ऽब्ज-भद्र-दण्डासनानि च ।
उत्कटिका गोदोहिका कायोत्सर्गस्तथासनम् ॥ १२४ ॥

पर्यङ्कादिषु प्रत्येकमासनशब्दः संबध्यते ॥ १२४ ॥

क्रमेणासनानि व्याचष्टे—

स्याज्जङ्घयोरधोभागे पादोपरि कृते सति ।
पर्यङ्को नाभिगोत्तानदक्षिणोत्तरपाणिकः ॥ १२५ ॥

जङ्घयोरधोभागे पादोपरि कृते सति पाणिद्वयं नाभ्यासन्नमुत्तानं दक्षिणोत्तरं यत्र, दक्षिणं उत्तर उपरिवर्ती यत्र तत्तथा, एतत् पर्यङ्को नाम शाश्वतप्रतिमानां श्रीमहावीरस्य च निर्वाणकाले आसनम्, यथा पर्यङ्कः पादोपरि भवति तथाऽयमपीति पर्यङ्कः । "जानुप्रसारितबाहोः शयनं पर्यङ्कः" [ पातञ्जल० तत्त्ववैशारदी २।४६ ] इति पातञ्जलाः ॥ १२५ ॥ ॥९५५॥

---

१ दक्षिणोत्तरोपरिवर्ती–मु. ॥ दक्षिण उत्तरपरिवर्ती–खं. हे. ॥ २ "स्थिरसुखमासनम् ॥ २।४६ ॥" इति पातञ्जलयोगसूत्रे ।

ध्यानसाधनोपयोगिनामासनानां स्वरूपम्

"उक्ताः सह सिद्धिभिर्यमनियमाः। आसनादीनि वक्ष्यामः। तत्र–स्थिरसुखमासनम् ॥ २।४६ । तद्यथा-पद्मासनं वीरासनं भद्रासनं स्वस्तिकं दण्डासनं सोपाश्रयं पर्यङ्कं कौञ्चनिषदनं हस्तिनिषदनमुष्ट्रनिषदनं समसंस्थानं स्थिरसुखं यथासुखं चेत्येवमादीनि ॥२।४६॥" इति पातञ्जलयोगदर्शनस्य व्यासप्रणीते भाष्ये।

"उत्तरसूत्रमवतारयति—उक्ताः सह सिद्धिभिर्यमनियमाः। आसनादीनि वक्ष्याम इति। तत्र स्थिरसुखमासनम्। स्थिरं निश्चलं यत् सुखं सुखावहं तदासनमिति सूत्रार्थः। आस्यतेऽत्र आस्ते वानेनेत्यासनम्।

तस्य प्रभेदानाह—तद्यथेति। पद्मासनं प्रसिद्धम्। स्थितस्यैकतरः पादो भून्यस्त एकतरश्चाकुञ्चितजानोरुपरि न्यस्त इत्येतद् वीरासनम्। पादतले वृषणसमीपे संपुटीकृत्य तस्योपरि पाणिकच्छपिकां कुर्यात् तद् भद्रासनम्। सव्यमाकुञ्चितं चरणं दक्षिणजङ्घोर्वन्तरे निक्षिपेत्, दक्षिणं चाकुञ्चितं चरणं वामजङ्घोर्वन्तरे निक्षिपेत्, एतत् स्वस्तिकम्। उपविश्य श्लिष्टाङ्गुलिकौ श्लिष्टगुल्फौ भूमिश्लिष्टजङ्घोरुपादौ प्रसार्य दण्डासनमभ्यसेत्। योगपट्टकयोगात् सोपाश्रयम्। जानुप्रसारितबाहोः शयनं पर्यङ्कः। क्रौञ्चनिषदनादीनि क्रौञ्चादीनां निषण्णानां संस्थानदर्शनात् प्रत्येतव्यानि। पार्ष्णिपादाग्राभ्यां द्वयोराकुञ्चितयोरन्योन्यसंपीडनं समसंस्थानम्। येन संस्थानेनावस्थितस्य स्थैर्यं सुखं च सिध्यति तदासनं स्थिरसुखम्। तदेतत्तत्रभगवतः सूत्रकारस्य संमतम्। तस्य विवरणम्—यथासुखं चेति ॥२।४६॥" इति पातञ्जलयोगदर्शनभाष्यस्य वाचस्पतिमिश्रविरचितायां तत्त्ववैशारद्यां टीकायाम्।

"सूत्रान्तरमवतारयति—उक्ता इति। स्थिरसुखमासनम्। स्थिरं निश्चलं सुखकरं च यत्तदासनम्, आस्यतेऽनेन प्रकारेणेत्यासनमित्यर्थः।"

आसनस्य भेदानाह—तद्यथेति। तत्र पद्मासनचतुष्टयस्य लक्षणं वसिष्ठेनोक्तम्—

"अङ्गुष्ठौ सन्निबध्नीयाद् हस्ताभ्यां व्युत्क्रमेण तु। ऊर्वोरुपरि विप्रेन्द्र! कृत्वा पादतले उभे॥
पद्मासनं भवेदेतत् सर्वेषामेव पूजितम्। एकपादमथैकस्मिन् विन्यस्योरौ च संस्थितः॥
इतरस्मिंस्तथा पादं वीरासनमुदाहृतम्।" [ ]

अस्यैवार्द्धमर्द्धासनमप्युच्यते। तथा—

"गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत्। पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलः॥
भद्रासनं भवेदेतत् सर्वव्याधिविषापहम्। जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे॥
ऋजुकायः सुखासीनः स्वस्तिकं तत्प्रचक्षते।" [ ]

इतराण्यासनानि योगप्रदीपाद्युक्तानि संक्षेपात् कथ्यन्ते—

दण्डासनम् = उपविश्य श्लिष्टाङ्गुलिकौ श्लिष्टगुल्फौ भूमिश्लिष्टजङ्घोरुपादौ प्रसार्य दण्डवच्छयनम्, सोपाश्रयं योगपट्टयोगेनोपवेशनम्, पर्यङ्कं च जानुप्रसारितबाहोः शयनम्, क्रौञ्चनिषदनादीनि क्रौञ्चादीनां निषण्णानां संस्थानदर्शनात् प्रत्येतव्यानि, जानुनोरुपरि हस्तौ कृत्वा कायशिरोग्रीवस्यावक्रभावेनावस्थानं समवस्थानम्, स्थिरसुखं च सूत्रोपात्तम्। तस्य व्याख्यानं यथासुखमिति। आदिशब्देन मायूराद्यासनानि ग्राह्याणि। यावत्यो जीवजातयस्तावन्त्येवासनानीति संक्षेपः॥ २।४६॥" इति पातञ्जलयोगदर्शनभाष्यस्य विज्ञानभिक्षुविरचिते योगवार्तिके॥

"अनशना-ऽवमौदर्य-वृत्तिपरिसङ्ख्यान-रसपरित्याग-विविक्तशयनासन-कायक्लेशा बाह्यं तप ॥९-१९॥" इति तत्त्वार्थसूत्रे॥

"कायक्लेशोऽनेकविधः। तद्यथा-स्थान-वीरासनोत्कटुकासनैकपार्श्वदण्डायतशयना-ऽऽतापना-ऽप्रावृतादीनि॥" इति तत्त्वार्थभाष्ये॥

ध्यानसाधनोपयोगिनामासनानां स्वरूपम्

"कायक्लेशोऽनेकविध इत्यादि। कायः शरीरम्, तस्य क्लेशो बाधनम् .... तद्यथेत्यादिना तदनेकविधत्वं दर्शयति–स्थानवीरासनेत्यादि। स्थानग्रहणादूर्ध्वस्थानलक्षणकायोत्सर्गपरिग्रहः। तस्य चाभिग्रहविशेषात् स्वशक्त्यपेक्षातः कालनियमश्चन्द्रावतंसकनृपतेरिवावगन्तव्यः। वीरासनं तु जानुप्रमाणासनसन्निविष्टस्याधस्तात् समाकृष्यते तदासनम्, निवेष्टा च तदवस्थ एवास्ते यदा तदा कायक्लेशाख्यं तपो भवति। तत्राप्यभिग्रहविशेषादेव स्वसामर्थ्यापेक्षातः कालनियमः। उत्कटुकासनं तु प्रसिद्धमेव विनाऽऽसनेन भूमौ वा प्राप्तस्फिग्द्वयस्य भवति। एकपार्श्वशायित्वं त्वधोमुख उत्तानमुखस्तिर्यग्व्यवस्थितो वा कालनियमभेदेन यदवतिष्ठते तत् तपः कायक्लेशाख्यम्। तथा दण्डायतशायित्वं नाम तपः ऋजुकृतशरीरः प्रसारितजङ्घाद्वयश्चलनरहितस्तिष्ठति यदा तदा तद् भवति। तथा आतापनमपि ऊर्ध्ववाहोरूर्ध्वस्थितस्य निविष्टस्य निपण्णस्य वा प्रज्वलितगभस्तिजालस्य सवितुरभिमुखस्थितस्य भवति। अप्रावरणाभिग्रहः शिशिरसमये प्रावरणाग्रहणम्। आदिग्रहणात् हेमन्तेऽपि रजनीष्वातापनं सन्तापनमात्मनः, शीतार्तिसदनमित्यर्थः। तथा सलगण्डशायित्वमप्रतिकर्मशरीरत्वमस्नानकं केशोल्लुञ्चनमित्येवमेतानि स्थान-वीरासनादीनि॥" इति आचार्यश्री सिद्धसेनगणिविरचितायां तत्त्वार्थसूत्रटीकायाम्॥

"पंच ठाणाइं जाव भवंति, तंजहा–ठाणातिते उक्कुडुआसणिते पडिमट्ठाती वीरासणिए णेसज्जिते। पंच ठाणाइं जाव भवंति, तंजहा–दंडायतिते लगंडसाती आतावते अवाउडते अकंडुयते।" इति स्थानाङ्गसूत्रे पञ्चस्थाने प्रथमे उद्देशके सू. ३९६॥

"ठाणाइए' त्ति स्थानं–कायोत्सर्गः तमतिददाति–प्रकरोति अतिगच्छति वेति स्थानातिदः स्थानातिगो वेति, उत्कुटुकासनं–पीठादौ पुतालगनेनोपवेशनरूपमभिग्रहतो यस्यास्ति स उत्कुटुकासनिकः, तथा प्रतिमया–एकरात्रिक्यादिकया कायोत्सर्गविशेषेणैव तिष्ठतीत्येवंशीलो यः स प्रतिमास्थायी 'वीरासनं' भून्यस्तपादस्य सिंहासने उपविष्टस्य तदपनयने या कायावस्था तद्रूपम्, दुष्करं च तदिति, अत एव वीरस्य–साहसिकस्यासनमिति वीरासनमुक्तम्, तदस्यास्तीति वीरासनिकः; तथा निषद्या–उपवेशनविशेषः, सा च पञ्चधा, तत्र यस्यां समं पादौ पुतौ च स्पृशतः सा समपादपुता १ यस्यां तु गोरिवोपवेशनं सा गोनिषद्यिका २ यत्र तु पुताभ्यामुपविष्टः सन् एकं पादमुत्पाट्यास्ते सा हस्तिसुण्डिका ३ पर्यङ्काऽर्द्धपर्यङ्का च प्रसिद्धा,

निषद्यया चरति नैषधिक इति, दण्डस्येवायतिः–दीर्घत्वं पादप्रसारणेन यस्य स दण्डायतिकः, तथा लगण्डं किल दुःसंस्थितं काष्ठं तद्वन्मस्तकपार्ष्णिकानां भुवि लगनेन पृष्ठस्य चालगनेनेत्यर्थः यः शेते तथाविधाभिग्रहात् स लगण्डशायी, तथा आतापयति–आतापनां शीता–ऽऽतपादिसहनरूपां करोतीत्यातापकः, तथा न विद्यते प्रावृतं–प्रावरणम् अस्येत्यप्रावृतकः, तथा न कण्डूयत इत्यकण्डूयकः, 'स्थानातिग' इत्यादिपदानां कल्पभाष्यव्याख्येयम्–

"उद्धठाणं ठाणाइयं तु पडिमा य होंति मासाई। पंचेव णिसेज्जाओ तासि विभासा उ कायव्वा ॥ १ ॥
वीरासणं तु सीहासणेव्व जहमुक्कजाणुगणिविट्ठो। डंडे लगण्डउवमा आययकुज्जे य दोण्हंपि ॥ २ ॥
आयावणा य तिविहा उक्कोसा मज्झिमा जहन्ना य। उक्कोसा उ निवन्ना निसन्न मज्झा ठिय जहन्ना ॥ ३ ॥
तिविहा होइ निवन्ना ओमंथिय पास तइय उत्ताणा।" [बृहत्कल्पभाष्ये गा० ५९५३–५४–४५–४६] इति।

निषण्णापि त्रिविधा–"गोदुह उक्कुड पलियंकमेस तिविहा य मज्झिमा होइ। तइया उ हत्थिसोंडगपायसमपाइया चेव॥" इति" इति आचार्य श्री अभयदेवसूरिविरचितायां स्थानाङ्गसूत्रटीकायाम्।

"सत्तविधे कायकिलेसे पन्नते, तंजहा–ठाणातिते, उक्कुडुयासणिते, पडिमट्ठाती, वीरासणिते, णेसज्जिते, दंडायतिए, लगंडसाती"। इति स्थानाङ्गसूत्रे सप्तस्थाने सू. ५५४॥

"सत्तविहेत्यादि ··· कायस्य–शरीरस्य क्लेशः–खेदः पीडा कायक्लेशो बाह्यतपोविशेषः, स्थानायतिक· स्थानातिगः स्थानातिदो वा कायोत्सर्गकारी, ······ उत्कटुकासनिक· प्रतीतः, तथा प्रतिमास्थायी भिक्षुप्रतिमाकारी, वीरासनिको यः सिंहासननिविष्टमिवास्ते, नैषधिकः–समपादपुतादिनिषद्योपवेशी, दण्डायतिकः–प्रसारितदेह, लगण्डशायी भूम्यलग्नपृष्ठः।" इति आचार्यश्रीअभयदेवसूरिविरचितायां स्थानाङ्गसूत्रटीकायाम् ॥

॥९५९॥

ध्यानसाधनोपयोगिनामासनानां स्वरूपम्

अथ वीरासनम्—

वामोंऽह्रिर्दक्षिणोरूर्ध्वं वामोरूपरि दक्षिणः ।
क्रियते यत्र तद्वीरोचितं वीरासनं स्मृतम् ॥ १२६ ॥

वामोंऽह्रिर्वामपादो दक्षिणोरोरूर्ध्वं वामस्य चोरोरुपरि दक्षिणोंऽह्रिर्यत्र क्रियते तद्वीराणां तीर्थकरप्रभृतीनामुचितम्, न कातराणाम्, वीरासनं स्मृतम्। अग्रहस्तन्यासः पर्यङ्कवत्। इदं पद्मासनमित्येके। एकस्यैव पादस्य ऊरावारोपणेऽर्धपद्मासनम् ॥ १२६ ॥

अथ वज्रासनम्—

पृष्ठे वज्राकृतीभूते दोर्भ्यां वीरासने सति।
गृह्णीयात् पादयोर्यत्राङ्गुष्ठौ वज्रासनं तु तत् ॥ १२७ ॥

उक्तस्वरूपे वीरासने सति पृष्ठे वज्राकाराभ्यां दोर्भ्यां पादयोर्यत्राङ्गुष्ठौ गृह्णीयात् तद् वज्रासनम्। इदं वेतालासनमित्यन्ये ॥ १२७ ॥

---

१ दक्षिणोरूर्ध्वं-मु.

मतान्तरेण वीरासनमाह—

सिंहासनाधिरूढस्यासनापनयने सति ।
तथैवावस्थितिर्या तामन्ये वीरासनं विदुः ॥ १२८ ॥

सिंहासनमधिरूढस्य भूमिन्यस्तपादस्य सिंहासनापनयने सति तथैवावस्थानं वीरासनम्। अन्ये इति सैद्धान्तिकाः कायक्लेशतपःप्रकरणे व्याख्यातवन्तः। पातञ्जलास्त्वाहुः—"ऊर्ध्वस्थितस्यैकतरः पादो भून्यस्त एकश्चाकुञ्चितजानुरूर्ध्वमित्येतद् वीरासनम्।" [पातञ्जल० तत्त्ववैशारदी २।४६] इति ॥ १२८ ॥

अथ पद्मासनम्—

जङ्घाया मध्यभागे तु संश्लेषो यत्र जङ्घया ।
पद्मासनमिति प्रोक्तं तदासनविचक्षणैः ॥ १२९ ॥

जङ्घाया वामाया दक्षिणाया वा द्वितीयया जङ्घया मध्यभागे संश्लेषो यत्र तत् पद्मासनम् ॥ १२९ ॥

अथ भद्रासनम्—

संपुटीकृत्य मुष्काग्रे तलपादौ तथोपरि ।
पाणिकच्छपिकां कुर्याद्यत्र भद्रासनं तु तत् ॥ १३० ॥

१ दृश्यतां पृ० ९५७-९५८॥ २ दृश्यतां पृ० ९५६॥

॥ ९६१ ॥

स्पष्टम्। यत् पातञ्जलाः–"पादतले वृषणसमीपे संपुटीकृत्य तस्योपरि पाणिकच्छपिकां कुर्यात्, एतद् भद्रासनम्" [पातञ्जल० तत्त्ववैशारदी २।४६] ॥ १३० ॥

अथ दण्डासनम्—

श्लिष्टाङ्गुली श्लिष्टगुल्फौ भूश्लिष्टोरू प्रसारयेत्।
यत्रोपविश्य पादौ तद् दण्डासनमुदीरितम् ॥ १३१ ॥

स्पष्टम्। यत् पातञ्जलाः—"उपविश्य श्लिष्टाङ्गुलीकौ श्लिष्टगुल्फौ भूमिश्लिष्टजङ्घौ च पादौ प्रसार्य दण्डासनमभ्यस्येत्" [पातञ्जल० तत्त्ववैशारदी २।४६] ॥ १३१ ॥

अथोत्कटिकासन-गोदोहिकासने—

पुतपार्ष्णिसमायोगे प्राहुरुत्कटिकासनम्।
पार्ष्णिभ्यां तु भुवस्त्यागे तत् स्याद्गोदोहिकासनम् ॥ १३२ ॥

पुतयोः पार्ष्णिभ्यां भूमिसंलग्नाभ्यां योगे उत्कटिकासनं प्राहुः, यत्र भगवतः श्रीवीरस्य केवलज्ञानमुत्पन्नम्।

१ दृश्यतां पृ० ९५६॥

यदाह– "[1]जंभियबहि उजुवालिअतीर[2] विसाहसियदसमिपहरतिगे ।
छट्ठेणोक्कडुअट्ठिअस्स केवलं आसि सालतले ॥ १ ॥" [ ]

तदेवोत्कटिकासनं गोदोहिकासनं गोदोहकसमाकारत्वात् पार्ष्णिभ्यां भुवस्त्यागे सति। इदं च प्रतिमाकल्पिकादीनां विधेयतयोपदिष्टम् ॥ १३२ ॥

अथ कायोत्सर्गः—

प्रलम्बितभुजद्वन्द्वमूर्ध्वस्थस्यासितस्य वा ।
स्थानं कायानपेक्षं यत् कायोत्सर्गः स कीर्तितः ॥ १३३ ॥

प्रलम्बितं भुजयोर्द्वन्द्वं यत्र तत्तथा, कायानपेक्षं स्थानं स कायोत्सर्गो नामासनमूर्ध्वस्थस्यासितस्य वा। ऊर्ध्वस्थितानां कायोत्सर्गो जिनकल्पिकादीनां छद्मस्थतीर्थकराणां च भवति, ते हि ऊर्ध्वज[3]एव एवासते, स्थविरकल्पिकानां तु ऊर्ध्वस्थितानामासितानां वा उपलक्षणात् शयितानां वा यथाशक्ति भवति, कायोत्सर्ग इति स्थान-ध्यान-मौनक्रियाव्यतिरेकेण क्रियान्तरसंबन्धिनः कायस्योत्सर्गस्त्याग इत्यर्थः। इदं चासनानां दिक्प्रदर्शनमात्रमुक्तमासनान्तराणामुपलक्षणार्थम्, तथाहि—

---

१ जृम्भिकाया बहिः ऋजुवालुकातीरे वैशाखसितदशमीप्रहरत्रिके। षष्ठेन उत्कटुकस्थितस्य केवलम् आसीत् सालतले॥ तुला– "जंभियबहि उजुवालियतीर वियावत्त सामसालअहे। छट्ठेणुक्कुडुयस्स उ उप्पण्णं केवलं णाणं ॥ ५२६ ॥" इति आवश्यकनिर्युक्तौ ॥ २ ०तीरे–मु.॥ ३ ऊर्ध्वज्ञव एवा०–शां.। "संप्राज्जानोर्ज्ञुः। वोर्ध्वात्"–सि० ७।४।१५५–१५६॥ इति सूत्राद्यमपि पाठः समीचीन एव॥ ऊर्ध्वस्था एवा०–खं.। संपू. मध्येऽत्र पत्रं खण्डितम्॥

आम्रकुब्जासनम् आम्राकारतयाऽवस्थितिः, यथा भगवान् महावीर एकरात्रिकीं प्रतिमां श्रितः संगमकसुराधमेन विहितां विंशतिमुपसर्गाणामधिसेहे। तथा एकपार्श्वशायित्वम्, तच्चोर्ध्वमुखस्याधोमुखस्य तिर्यङ्मुखस्य वा भवति। तथा दण्डायतशायित्वम् ऋजूकृत[1]शरीरस्य प्रसारितजङ्घोरुद्वयस्य चलनरहितस्य तद्भवति। तथा लगण्डशायित्वं मूर्ध्नः पार्ष्ण्योश्च भूमिस्पर्शे शरीरेण च भूमेरस्पर्शे तद्भवति। तथा समसंस्थानं यत् पार्ष्ण्यग्रपादाभ्यां द्वयोराकुञ्चितयोरन्योन्यपीडनम्। तथा दुर्योधनासनं[2] यद्भूमिप्रतिष्ठितशिरस उत्पादमवस्थानं कपालीकरणमिति च प्रसिद्धम्, तस्मिन्नेव यदा जङ्घे पद्मासनीकृते भवतस्तदा दण्डपद्मासनम्। तथा स्वस्तिकासनं यत्र सव्यमाकुञ्चितं चरणं दक्षिणजङ्घोर्वन्तरे निक्षिपेत् दक्षिणं चाकुञ्चितं वामजङ्घोर्वन्तरे इति। तथा सोपाश्रयं योगपट्टकयोगाद् यद् भवति। तथा क्रौञ्च[3]निषदन-हंसनिषदन-श्वनिषदन-हस्तिनिषदन-गरुडनिषदनादीन्यासनानि कौञ्चादीनां[4] निषण्णानां संस्थानदर्शनात् प्रत्येतव्यानि। तदेवं न व्यवतिष्ठते आसनविधिः ॥१३३॥

ध्यानसाधनोपयोगिनामासनानां स्वरूपम्

ततः—

जायते येन येनेह विहितेन स्थिरं मनः।
तत्तदेव विधातव्यमासनं ध्यानसाधनम् ॥ १३४ ॥

---

१ ०कृतस्य शरीरस्य-शां.॥ २ दुर्योधासनं-मु. शां.। संपू० मध्ये पत्रमत्र खण्डितम्॥ ३ क्रौञ्च-शां. खं.। संपूं मध्येऽत्र पत्रं खण्डितम्॥ ४ क्रौञ्चा०-खं.॥

॥ ९६५ ॥ मेदस्विनामितरेषां च बलवतामपरेषां च येन येनासनेन कृतेन [1]सात्म्यविशेषात् स्थिरं मनो जायते तत्तदेवासनं ध्यानसाधनत्वेन विधेयम्। यदाह—

" [2]सव्वासु वट्टमाणा मुणओ जं देसकालचेट्ठासु।
वरकेवलाइलाभं पत्ता बहुसो समिअपावा ॥ १ ॥
तो देसकालचेट्ठानियमो झाणस्स नत्थि समयम्मि।
जोगाण समाहाणं जह होइ तहा पयइअव्वं ॥ २ ॥" [ध्यानशतके गा० ४०-४१]

न चैवमासनाभिधानमनर्थकम्, प्रतिमाकल्पिकान् प्रत्यासननियमस्याभिधानात्। द्वादशसु भिक्षुप्रतिमासु अष्टम्यां प्रतिमायामासननियमो यथा—

" [3]उत्ताणग[4] पासल्ली नेसज्जी वा वि [5]ठाण ठाइत्ता।
सह उस्सग्गे घोरे दिव्वाई तत्थ अविकंपो ॥ १ ॥" [पञ्चाशके १८।१५]

---

१ सात्म्यस्थिरं-शां.॥ २ सर्वासु वर्तमाना मुनयो यद् देशकालचेष्टासु। वरकेवलादिलाभं प्राप्ता बहुशः शान्तपापाः॥ तस्माद्देशकालचेष्टानियमो ध्यानस्य नास्ति समये। योगानां समाधानं यथा भवति तथा प्रयतितव्यम्॥

३ इमास्तिस्रोऽपि गाथा किञ्चित्पाठभेदेन आवश्यकसूत्रस्य हारिभद्र्यां वृत्तौ [पृ० ६४७] प्रतिक्रमणाध्ययने द्वादशभिक्षुप्रतिमास्वरूपवर्णने वर्तन्ते। अष्टादशे पञ्चाशके [गा० १५-१७] वर्तन्ते, वृत्तौ च तास्तत्र व्याख्याताः। प्रवचनसारोद्धारेऽपि [गा० ५८३-५८५] सन्ति, प्रवचनसारोद्धारवृत्तौ आसां व्याख्यानमपि वर्तते पृ० ४७७-४७८॥ ४ उत्तानक पार्श्वशयितः नैषद्यिको नापि स्थानं स्थित्वा। सहत उपसर्गान् घोरान् दिव्यादीन् तत्र अविकम्पः॥ ५ द्वाइ ठाइत्ता-खं.॥ ॥ ९६५ ॥

ध्यानसाधनोपयोगिनामासनानां स्वरूपम्

नवम्यां यथा—

"दोच्चा[1] वि एरिस च्चिय बहिआ गामाइआण नवरं तु ।
"उक्कड लगंडसाई दंडाययउ[2] व्व ठाइत्ता ॥ २ ॥" [ पञ्चाशके १८।१६ ]

दशम्यां यथा—

"तच्चा[3] वि एव नवरं ठाणं[4] तु तस्स होइ गोदोही ।
वीरासणमहवा वी ठाइज्ज वि अंबखुज्जो उ ॥ ३ ॥" [ पञ्चाशके १८।१७ ] ॥ १३४ ॥

इदानीमासनानां यथा ध्यानसाधनत्वं भवति तथा श्लोकद्वयेनाह—

सुखासनसमासीनः सुश्लिष्टाधरपल्लवः ।
नासाग्रन्यस्तदृग्द्वन्द्वो दन्तैर्दन्तानसंस्पृशन् ॥ १३५ ॥
प्रसन्नवदनः पूर्वाभिमुखो वाप्युदगुमुखः ।
अप्रमत्तः सुसंस्थानो ध्याता ध्यानोद्यतो भवेत् ॥ १३६ ॥

---

१ द्वितीयापि ईदृशी एव बहिस्तादेव ग्रामादीनां नवरं तु । उत्कटुको लगण्डशायी दण्डायतको वा स्थित्वा ॥
२ दंडाइयउ–हे. ॥ ३ तृतीयापि एवं नवरं स्थानं तु तस्य भवति गोदोहिका । वीरासनमथवापि तिष्ठेत् अपि आम्रकुब्जस्तु ॥ ४ ठाणं तं तस्स–खं. हे. ॥

सुखं सुखावहं आस्यतेऽनेन आस्ते वाऽनेन तदासनम्, सुखं च तदासनं च तेनासीनः, अनेनासनजयमाह। सुश्लिष्टौ मिलितावधरपल्लवौ यस्य स तथा, अनेन प्राणप्रसरनिषेधमाह। नासाग्रे न्यस्तं दृग्द्वन्द्वं येन स तथा, अनेन प्राणजयस्य हेतुमाह। दन्तैरुपरितनैरधस्तनैश्च दन्तानुपरितनानधस्तनांश्चासंस्पृशन्, तत्संस्पर्शे हि ध्याननिश्चलता न स्यात्। तथा प्रसन्नं रजस्तमोरहितत्वेन प्रसादवत् भ्रूविक्षेपादिरहितं वदनं यस्य सः तथा। पूर्वाभिमुखो वा उदग्मुखो वा, अनेनानयोर्दिशोः[1] पूज्यत्वमाह। जिन-जिनप्रतिमाभिमुखो[2] वा। अप्रमत्तः प्रमादरहितः, अनेन मुख्यमधिकारिणमाह। यदाह—

"धर्म्यमप्रमत्तसंयतस्य" [ तत्त्वार्थ० ९।३७ ]

शोभनमृज्वायतमूर्त्तिकं संस्थानं शरीरसन्निवेशो यस्य स तथा। एवंविधः सन् ध्याता ध्यानोद्यतो भवेत् ध्याने उद्यच्छेत्।

इति निगदितमेतत् साधनं ध्यानसिद्धे-
र्यति-गृहिगतभेदाद्भिन्नरत्नत्रयं च।
सकलमपि यदन्यद् ध्यानभेदादि सम्यक्,
प्रकटितमुपरिष्टादष्टभिस्तत् प्रकाशैः ॥ १ ॥ १३५ ॥ १३६ ॥

---

१ ०नयोर्दैशयोः-खं. ॥ २ जिनप्रतिमाभिमुखो-शां. ॥

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते
आचार्यश्रीहेमचन्द्रविरचिते अध्यात्मोपनिषन्नाम्नि
संजातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञं
चतुर्थप्रकाशविवरणम् ॥

१ ०णं समातं-शां.। ०णं ॥ छ ॥ ग्रंथ २००० ॥-खं.। ०णं ॥ चतुर्थः प्रकाशः समाप्तः ॥ छ ॥ छ ॥ ग्रंथाग्रं २००० ॥ छ ॥-हे.। संपू० मध्येऽत्र पत्रं खण्डितम् ॥